मोक्षं समयतोऽस्माकं सञ्चिन्तयितुमर्हसि ॥ ५२॥

त्वं हि देवेश सर्वस्य जगतः [1]परमा गतिः ।
कोऽन्यः प्रसाद्यो हि भवेद् यः कृच्छ्रान्नस्समुद्धरेत् ॥ ५३॥

ब्रह्मा—

अल्पा इति मतिं कृत्वा यो नरो बुद्धिमोहितः ।
श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ॥ ५४॥

तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति ।
तथा वो भविता मोक्ष इति सत्यं ब्रवीमि वः ॥ ५५॥

भीष्मः—

ततोविमुच्य देवेन्द्रो ब्रह्महत्यां युधिष्ठिर ।
यथानिसृष्टं स्वं वासम् अगच्छद्देवशासनात् ॥ ५६॥

एवं शक्रेण सम्प्राप्ता ब्रह्मवध्या परन्तप ।
पितामहं त्वनुज्ञाप्य सोऽश्वमेधमकल्पयत् ॥ ५७॥

श्रूयते च महाराज सम्प्राप्ता वासवेन वै ।
ब्रह्मवध्या ततश्शुद्धिं हयमेधेन लब्धवान् ॥ ५८॥

समवाप्य श्रियं देवो हत्वाऽरींश्च सहस्रशः ।
प्रहर्षमतुलं लेभे वासवः पृथिवीपते ॥ ५९॥

वृत्रस्य रुधिराच्चैव [2]बुद्बुदाः पार्थ जज्ञिरे ।

1. ग—परमो गुरुः 2. क-ख-घ—खुखुण्डाः

द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः ॥ ६०॥

सर्वावस्थं त्वमप्येषां द्विजातीनां प्रियं कुरु ।
इमे हि भूतले देवाः प्रथिताः कुरुनन्दन ॥ ६१॥

एवं शक्रेण कौरव्य बुद्धिसौक्ष्म्यान्महासुरः ।
उपायपूर्वं निहतो वृत्रो ह्यमिततेजसा ॥ ६२॥

एवं त्वमपि कौरव्य पृथिव्यामपराजितः ।
भविष्यसि यथा देवश् शतक्रतुरमित्रहा ॥ ६३॥

ये तु शक्रकथां दिव्याम् इमां पर्वसुपर्वसु ।
विप्रमध्ये वदिष्यन्ति न ते प्राप्स्यन्ति किल्बिषम् ॥ ६४॥

इत्येतद्वृत्रमाश्रित्य शक्रस्यात्यद्भुतं महत् ।
कथितं कर्म ते तात किं भूयश्श्रोतुमिच्छसि ॥ ६५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
[ अस्मिन्नध्याये ६५॥ श्लोकाः ]

---

## ॥ अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥

दक्षयज्ञे भागालाभेन रुष्टस्य रुद्रस्य ललाटतटोद्भूतस्वेदादग्निरूपज्वरोत्पत्तिः ॥ १ ॥ ब्रह्मवचनाद्रुद्रेण ज्वरस्य पृथिव्यादिषु विभजनम् ॥ २ ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
अस्मिन् वृत्रवधे त्वेव विवक्षा मम जायते ॥ १

ज्वरेण मोहितो वृत्रः कथितस्ते जनाधिप ।
निहतो वासवेनाथ वज्रेणेति ममानघ ॥ २

कथमेष महाप्राज्ञ ज्वरः प्रादुर्बभूव ह ।
ज्वरोत्पत्तिं निपुणतश्श्रोतुमिच्छाम्यहं प्रभो ॥ ३

भीष्मः—

शृणु राजञ् ज्वरस्येह सम्भवं लोकविश्रुतम् ।
विस्तरं चास्य वक्ष्यामि यादृशश्चैष भारत ॥ ४

पुरा मेरोर्महाराज शृङ्गं त्रैलोक्यविश्रुतम् ।
ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ॥ ५

अप्रमेयमनाधृष्यं सर्वलोकेषु भारत ॥ ५॥
तत्र देवो गिरितटे हेमधातुविभूषिते ।
पर्यङ्क इव विभ्राजत्युपविष्टो बभूव ह ॥ ६॥

शैलराजसुता चास्य नित्यं पार्श्वे स्थिता बभौ ॥ ७
तथा देवा महात्मानो वसवश्चामितौजसः ।
तथैव च महात्मानावश्विनौ भिषजां वरौ ॥ ८
तथा वैश्रवणो राजा गुह्यकैरभिसंवृतः ।
यक्षाणामीश्वरश्श्रीमान् कैलासनिलयः प्रभुः ॥ ९
[1]शङ्खपद्मनिधिभ्यां च ऋद्ध्या परमया सह ।
उपासत महात्मानम् उशना च महाकविः ॥ १०
सनत्कुमारप्रमुखास् तथैव च महर्षयः ।
अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे ॥ ११
विश्वावसुश्च गन्धर्वस् तथा नारदपर्वतौ ।
अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः ॥ १२
ववौ वायुस्सुखस्पर्शो नानागन्धवहश्शुचिः ।
सर्वर्तुकुसुमोपेताः पुष्पवन्तो द्रुमास्तथा ॥ १३
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ।
महादेवं पशुपतिं पर्युपासन्त भारत ॥ १४
भूतानि च महाराज नानारूपधराण्यथ ।
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ॥ १५
बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ।

---

1. अ-क-ख-घ—नास्तीदमर्धम्

देवस्यानुचरास्तत्र तस्थिरे चाचलोपमाः ॥ १६
नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः ।
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा ॥ १७

गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ।
पर्युपासत तं देवं रूपिणी कुरुनन्दन ॥ १८

एवं स भगवांस्तत्र पूज्यमानस्सुरर्षिभिः ।
देवैश्च सुमहाभागैर् महादेवो व्यतिष्ठत ॥ १९

कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः ।
पूर्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत ॥ २०

ततस्तस्य मखं देवास् सर्वे शक्रपुरोगमाः ।
गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ २१

ते विमानैर्महात्मानो ज्वलनार्कसमप्रभैः ।
देवस्यानुमतेऽगच्छन् गङ्गाद्वारमिति श्रुतिः ॥ २२

प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा ।
उवाच वचनं साध्वी देवं पशुपतिं पतिम् ॥ २३

भगवन् क नु यान्त्येते देवाश्शक्रपुरोगमाः ।
ब्रूहि तत्त्वेन [1]तत्त्वज्ञ संशयो मे महानयम् ॥ २४

---

1, ख—धर्मज्ञ

[1]महेश्वरः—

दक्षो नाम महाभागे प्रजानां पतिरुत्तमः ।
हयमेधेन यजते तत्र यान्ति दिवौकसः ॥ २५

उमा—

यज्ञमेतं महादेव किमर्थं नाधिगच्छसि ।
केन वा प्रतिषेधेन गमनं ते न विद्यते ॥ २६

[2]देवः—

सुरैरेव महाभागे [3]यन्मयैतदनुष्ठितम् ।
यज्ञेषु सर्वेषु मम न भाग उपकल्पितः ॥ २७
पूर्वोपायोपपन्नेन मार्गेण वरवर्णिनि ।
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः ॥ २८

उमा—

भगवन् सर्वभूतेषु प्रभुरभ्यधिको गुणैः ।
अजेयश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ २९
अनेन ते महाभाग प्रतिषेधेन भागतः ।
अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ ॥ ३०

भीष्मः—

एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिम् ।
तुष्णीम्भूताऽभवद्राजन् दह्यमानेन चेतसा ॥ ३१

---

1. ग—रुद्रः पाठान्तरम् 2. ग—रुद्रः पाठान्तरम्
3. ख-घ—धर्ममेत ग—सर्वमे

अथ देव्या मतं ज्ञात्वा हृद्गतं यच्चिकीर्षितम् ।
स समाज्ञापयामास तिष्ठ त्वमिति नन्दिनम् ॥ ३२

ततो योगबलं कृत्वा [1]सर्वयोगेश्वरो हरः ।
तं यज्ञं सुमहातेजा भीमैरनुचरैस्तदा ॥ ३३

सहसा घातयामास देवदेवः पिनाकधृत् ॥ ३३॥
केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे ॥ ३४

रुधिरेणापरे राजंस् तत्राग्निं समवाकिरन् ।
केचिद्यूपान् समुत्पाट्य व्यभ्रमन् विकृताननाः ॥ ३५
आस्यैरन्ये चाग्रसन्त तथैव परिचारकान् ॥ ३५॥
ततस्स यज्ञो नृपते वध्यमानस्समन्ततः ।

आस्थाय मृगरूपं वै खमेवाभ्यद्रवत्तदा ॥ ३६॥
तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः ।

धनुरादाय सशरं तदान्वसरत प्रभुः ॥ ३७॥
ततस्तस्य सुरेशस्य क्रोधादमिततेजसः ।
ललाटात् प्रसृतो घोरस् [2]स्वेदबिन्दुर्बभूव ह ॥ ३८॥
तस्मिन् पतितमात्रे च स्वेदबिन्दौ तदा भुवि ।
प्रादुर्बभूव सुमहान् अग्निः कालानलोपमः ॥ ३९॥

---

1. ग—सर्वलोकमहेश्वरः
2. घ—इतः पादद्वयं नास्ति

तत्र चाजायत तदा पुरुषः पुरुषर्षभ ॥ ४०
ह्रस्वोऽतिमात्रं [1]रक्ताक्षो हरिश्मश्रुर्विभीषणः ।
ऊर्ध्वकेशोऽतिरोमाङ्गः [2]श्येनोलूकस्तथैव च ॥ ४१
करालकृष्णवर्णश्च रक्तवासास्तथैव च ।
तं यज्ञं सुमहासत्त्वो दहन् कक्षमिवानलः ॥ ४२
देवाश्च व्यद्रवन् सर्वे ततो भीता दिशो दश ।
तेन तस्मिन् विरचिता पुरुषेण विशां पते ॥ ४३
पृथिवी व्यचलद्राजन्नतीव भरतर्षभ ।
[3]हाहाभूतं जगत् सर्वम् उपविश्य तदा प्रभुः ॥ ४४
पितामहो महादेवं दर्शयन् प्रत्यभाषत ॥ ४४॥

ब्रह्मा—
भवतोऽपि सुरास्सर्वे भागं दास्यन्ति वै प्रभो ।
क्रियतां प्रतिसंहारस् सर्वदेवेश्वर त्वया ॥ ४५॥
इमा हि देवतास्सर्वा ऋषयश्च परन्तप ।
तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ ४६॥
यश्चैव पुरुषो जातस् स्वेदात्ते विबुधाधिप ।

---

1. ख-घ—रक्ताङ्गो
2. ग—श्येनानूकस्त ; ख—श्येनोऽनूरुस्तथैव
क—श्येनानूरुस्तथैव ; घ—स्येनोनूरुस्तथैव
3. ग—महाभूते प्रवृत्ते तु नादे लोकभयङ्करे । [ पाठान्तरम ]

ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥ ४७॥

एकीभूतस्य न ह्यस्य धारणे तेजसः प्रभो ।
समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥ ४८॥

भीष्मः—

इत्युक्तो ब्रह्मणा देवो भागे चैवं प्रकल्पिते ।
भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ॥ ४९॥

परां च प्रीतिमगमद् उत्स्मयंश्च पिनाकधृत् ।
अवाप स यथाभागं यथोक्तं ब्रह्मणा भवः ॥ ५०॥

ज्वरं च सर्वधर्मज्ञो बहुधा व्यसृजत् तदा ।
शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ॥ ५१॥

शीर्षाभितापो नागानां पर्वतानां शिलाजतु ।
अपां च नीलिकां विद्यान्निर्मोकं भुजगेषु च ॥ ५२॥

[1]मौरसस्सौरभेयाणाम् ऊषरं पृथिवीतले ।
पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ॥ ५३॥

[2]रन्ध्रोद्गमं तथाऽश्वानां शिखोद्भेदश्च बर्हिणाम् ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना ॥ ५४॥

---

1. क—मौरसः (औरसः;) ख—मौरसस्सारमेयाणां
ग—ऐरकस्सौरभेयाणाम्; घ—औरसः
2. अ-घ—राज्ञो; ग—रन्ध्रोद्गमनमश्वानां

[1]अञ्जानां पत्रभेदश्च सर्वेषामिति नश्श्रुतम् ।
शुकानामपि सर्वेषां [2]ककचा प्रोच्यते ज्वरः ॥ ५५॥

शार्दूलेष्वथ धर्मज्ञ श्रमो ज्वर इहोच्यते ।
मानुषेषु तु धर्मज्ञ ज्वरो नामैष विश्रुतः ॥ ५६॥

मरणे जन्मनि तथा मध्ये चाविशते सदा ।
एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ॥ ५७॥

नमस्यश्चैव पूज्यश्च सर्वप्राणिभिरीश्वरः ।
अनेन हि समाविष्टो वृत्रो धर्मभृतां वर ॥ ५८॥

व्यजृम्भत ततश्शक्रस् तस्मै वज्रमवासृजत् ।
आविश्य वज्रे वृत्रं तु दारयामास भारत ॥ ५९॥

दारितश्च स वज्रेण महायोगी महासुरः ।
जगाम परमं स्थानं विष्णोरमिततेजसः ॥ ६०॥

विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत् पुरा ।
तस्माच्च निहतो युद्धे विष्णोस्स्थानमवाप्तवान् ॥ ६१॥

इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया ।
विस्तरः कथितः पुत्र किमन्यत् प्रब्रवीमि ते ॥ ६२॥

---

1. ग—अवीनां चित्तभेदश्च

2. क—ककाचा (क्रकचा); ख—काकचा
ग—हिक्किका; घ—ईहाका

इमां ज्वरोत्पत्तिमदीनमानसः
पठेत् सदा यस्सुसमाहितो नरः ।
विमुक्तरोगस्स भवेन्मुदा युतो
लभेत कामांश्च यथामनीषम् ॥ ६३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
[अस्मिन्नध्याये ६३॥ श्लोकाः]

## ॥ एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रत्यध्यात्मकथनम् ॥

*युधिष्ठिरः—

अध्यात्मं नाम यदिदं पुरुषस्योपदिश्यते ।
यदध्यात्मं यतश्चैतत् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

सर्वज्ञानं परं बुद्ध्वा यन्मां त्वमनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात तस्य व्याख्यामिमां शृणु ॥ २

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ ३

* ग-कोशे अध्यायोऽयं नास्ति

स तेषां गुणसङ्घातश् शरीरे भरतर्षभ ।
सततं ते प्रलीयन्ते गुणास्तेषु भवन्ति च ॥ ४

ततस्सृष्टानि तत्रैव तानि घ्नन्ति पुनः पुनः ।
महाभूतानि भूतेभ्यस् सागरस्योर्मयो यथा ॥ ५

प्रसार्यैव यथाऽङ्गानि कूर्मस्संहरते पुनः ।
तद्वद्भूतानि भूतानाम् अल्पीयांसि स्थवीयसाम् ॥ ६

आकाशात् खलु यो घोषस् सङ्घातस्तु महीगुणः ।
वायोः प्राणो रसस्त्वद्भ्यो रूपं तैजसमुच्यते ॥ ७

इति तन्मयमेवैतत् सर्वं स्थावरजङ्गमम् ।
प्रलये तु तमभ्येत्य तस्मादुत्तिष्ठते पुनः ॥ ८

महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
विषयान् कल्पयामास यस्मिन् यदनुपश्यति ॥ ९

शब्दश्श्रोत्रे तथा खानि त्रयमाकाशयोनिजम् ।
रसस्स्नेहो रसज्ञानम् अब्गुणाश्च त्रयस्स्मृताः ॥ १०

[1]रूपं चक्षुर्विपाकश्च विविधं ज्योतिरुच्यते ।
घ्रेयं घ्राणं शरीरं च एते भूमिगुणास्स्मृताः । ११

प्राणस्स्पर्शश्च चेष्टा च वायोरेते गुणास्स्मृताः ।
इति सर्वगुणा राजन् व्याख्याताः पाञ्चभौतिकाः ॥ १२

1. घ—अर्धत्रयं नास्ति

सत्त्वं रजस्तमः कालः कर्म बुद्धिश्च भारत ।
मनःषष्ठानि चैतेभ्य ईश्वरस्समकल्पयत् ॥ १३

यदूर्ध्वं पादतलयोर् अवाङ्मूर्ध्नश्च पश्यसि ।
एतस्मिन्नेव कृच्छ्रेयं वर्तते बुद्धिरन्तरे ॥ १४

इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञः पुनरष्टमः ॥ १५

इन्द्रियाणि च कर्ता च विचेतव्यानि भागशः ।
तमस्सत्त्वं रजश्चेति कालः कर्म च भारत ॥ १६

गुणान्निनीयते बुद्धिर् बुद्धिरेवेन्द्रियाण्यपि ।
मनःषष्ठानि भूतानि बुद्ध्यभावे कुतो गुणाः ॥ १७

येन पश्यति तच्चक्षुश् शृणोति श्रोत्रमुच्यते ।
घ्रायती भवति घ्राणो रसती जिह्वया रसान् ॥ १८

स्पर्शयन् स्पृशती स्पृश्यं बुद्धिर्विक्रियतेऽसकृत् ।
यदा प्रार्थयते किञ्चित् तदा भवति सा मनः ॥ १९

अधिष्ठानानि बुद्ध्येत पृथगेतानि पञ्चधा ।
इन्द्रियाणीति तान्याहुस् तेषु [1]तुष्टेषु मृष्यति ॥ २०

पुरुषे तिष्ठते बुद्धिस् त्रिषु भावेषु वर्तते ।
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ॥ २१

1. ख—दुष्टेषु दुष्यति

न सुखेन न दुःखेन कदाचिदपि वर्तते ।
सेयं भावात्मिका भावांस् त्रीनेतान् नातिवर्तते ॥ २२

सरितां सागरो भर्ता महावेलामिवोर्मिमान् ।
अपि भावगता बुद्धिर् भावे मनसि वर्तते ॥ २३

प्रहर्षः प्रीतिरानन्दस् सुखमुत्सिक्तचित्तता ।
कथञ्चिदुपपद्यन्ते पुरुषे सात्त्विका गुणाः ॥ २४

परीताप्यथविधा शोकस् सन्तापो भृशमक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः ॥ २५

अवमानस्तथा मोहः प्रमादस्स्वप्नतन्द्रिता ।
कथञ्चिदभिवर्तन्ते विविधास्तामसा गुणाः ॥ २६

तत्र यत् प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्त्विको भाव इत्युपेक्षेत तत्तदा ॥ २७

अथ यत् सुखसंयुक्तम् अप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येव तदसारं विचिन्तयेत् ॥ २८

अथ यन्मोहसंयुक्तं अव्यक्तविषयं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २९

इति बुद्धिगतिस्सर्वा व्याख्याता यावती मया ।
एतद्बुद्ध्वा भवेद्बुद्धिः किमन्यद्बुद्धिलक्षणम् ॥ ३०

सत्त्वक्षेत्रज्ञयोरेतद् अन्तरं विद्धि सूक्ष्मयोः ।
सृजतेऽत्र गुणानेक एको न सृजते गुणान् ॥ ३१

वृद्धिभूतौ प्रकृत्या तौ सम्प्रयुक्तौ स सर्वदा ।
यथा मत्स्योऽद्भिरन्यस्सन् सम्प्रयोगस्तयोस्तथा ॥ ३२

न गुणा विदुरात्मानं स गुणान् वेद सर्वतः ।
परिद्रष्टा गुणानां तु संस्रष्टा मन्यते सदा ॥ ३३

आश्रयो नास्ति सत्त्वस्य गुणसर्गेण चेतना ।
सत्त्वं ह्यस्मात् संसृजते गुणानेव कथञ्चन ॥ ३४

सृजते हि गुणान् सत्त्वं क्षेत्रज्ञः परिपश्यति ।
सम्प्रयोगस्तयोरेष सत्त्वक्षेत्रज्ञयोर्ध्रुवः ॥ ३५

इन्द्रियैस्तु प्रदीपार्थं क्रियते बुद्धिरन्तरा ।
निश्चरद्भिरजानद्भिर् इन्द्रियाणि प्रदीपवत् ॥ ३६

एवंस्वभावमेवैतत् तद्बुद्ध्वा विहरेन्नरः ।
अशोचन्नप्रहृष्यंश्च स वै विगतमत्सरः ॥ ३७

स्वभावसिद्धमेवैतद् यदिमान् सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेया[1]स्तव षड्गुणाः ॥ ३८

प्रध्वस्ता न निवर्तन्ते निवृत्तिर्नोपलभ्यते ।
एवमेते व्यवस्यन्ति निवृत्तिरिति चापरे ॥ ३९

---

1. ख-घ—स्तन्तु षड्गुणाः; क—स्तन्तु षड्गुणाः (स्तव षड्गुणाः)

इतीमं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।
विमुच्य सुखमासीत विशोकश्छिन्नसंशयः ॥ ४०

ताम्येयुः प्रच्युताः पृथ्व्याम् इह पूर्णां नदीं नराः ।
यथा गाधमविद्वांसो विद्धि लोकमिमं तथा ॥ ४१

न तु ताम्यन्ति विद्वांसः प्लवन्तः पारमम्भसः ।
अध्यात्मविदुषो धीरा ज्ञानं तु परमं प्लवः ॥ ४२

न भवति विदुषां महद्भयं
यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकाऽस्ति कस्यचित्
सकृदपि श्रयतीह तुल्यताम् ॥ ४३

यत् करोति बहुदोषमेकतस्
तच्च दूषयति यत् पुरा कृतम् ।
नाप्रियं तदुभयं करोत्यसौ
यच्च दूषयति यत् करोति च ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

## ॥ सप्तत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ज्ञानस्य दुःखादिनिवर्तकत्वप्रतिपादकनारद-समङ्गसंवादानुवादः ॥

---

युधिष्ठिरः—

शोकाद्दुःखाच्च मृत्योश्च त्रस्यन्ति प्राणिनस्सदा ।
तदुभयं नो यथा न स्यात् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदस्य च संवादं [1]समङ्गस्य च भारत ॥ २

नारदः—

उरसैव प्रणमसे बाहुभ्यां तरसीव च ।
सम्प्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥ ३

उद्वेगं न हि ते किञ्चित् सुसूक्ष्ममपि लक्षये ।
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥ ४

[2]समङ्गः—

भूतं भव्यं भविष्यच्च [3]सर्वं वेद्म्यनुमानतः ।
तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ॥ ५

---

1. ग—संगलस्य च 2. ग—सङ्गलः
3. ग—सर्वभूतेषु नारद

उपक्रमानहं वेद्मि पुनरेव फलोदयान् ।
लोके फलानि चित्राणि ततो न विमना ह्यहम् ॥ ६

अनाथाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद ।
अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ॥ ७

[1]विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः ।
बलवन्तोऽबलाश्चैव तद्वदस्मान् सभाजय ॥ ८

सहस्रिणश्च जीवन्ति जीवन्ति शतिनस्तथा ।
शाकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ॥ ९

यदा न शोचेमहि किं नु मे स्याद्
धर्मेण वा नारद कर्मणा वा ।
कृतान्तवश्यानि यदा सुखानि
दुःखानि चायान्ति विधर्षयन्ति ॥ १०

यस्मिन् प्रज्ञानं कथयन्ते मनुष्याः
प्रज्ञामूलो हीन्द्रियाणां प्रसादः ।
मुह्यन्ति शोचन्ति हि चेन्द्रियाणि
प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ॥ ११

मूढस्य दर्पस्स पुनर्मोह एव
मूढस्य नायं न परोऽस्ति लोकः ।

1. अ-क-ख—अर्धचतुष्टयं नास्ति

न ह्येव दुःखानि सदा भवन्ति
सुखस्य वा नित्यशो लाभ एव ॥ १२

भावात्मकं सम्परिवर्तमानं
न तादृशं सञ्ज्वरं जातु कुर्यात् ।
इष्टान् भोगान् नानुरुन्धन् सुखं वा
न चिन्तयेद्दुःखमभ्यागतं वा ॥ १३

समाहितो न स्पृहयेत् परेषां
नानागतं वाऽभिनन्देच्च लाभम् ।
न चापि हृष्येद्विपुलेऽर्थलाभे
तथाऽर्थनाशे न च वै विषीदेत् ॥ १४

न बान्धवा न च वित्तं न कालो
न च श्रुतं न च मन्त्रो न वीर्यम् ।
दुःखात् त्रातुं सर्व एवोत्सहन्ते
परत्र शीलेन तु यान्ति शान्तिम् ॥ १५

नास्ति बुद्धिरयुक्तस्य नायोगाद्विद्यते सुखम् ।
धृतिश्च सत्त्वयोगश्चाप्युभयं तु सुखोदयम् ॥ १६

प्रियं हि हर्षजननं हर्ष उत्सेकवर्धनः ।
उत्सेको नरकायैव तस्मात्तं सन्त्यजाम्यहम् ॥ १७

एतान् शोकभयोत्सेकान् मोहनान् सुखदुःखयोः ।

पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात् ॥ १८

अर्थकामौ परित्यज्य विशोको विगतज्वरः ।
तृष्णामोहौ तु सन्त्यज्य चरामि पृथिवीमिमाम् ॥ १९

न मृत्युतो न चाधर्मान्न लोभान्न कुतश्चन ।
पीतामृतस्येवात्यन्तम् इह चामुत्र चाभयम् ॥ २०

एतद्ब्रह्मन् विजानामि महत् कृत्वा तपोऽव्ययम् ।
तेन नारद संहर्षो न मां शोकः प्रबाधते ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ अस्मिन्नध्याये २१ श्लोकाः ॥

---

## ॥ एकसप्तत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्रेयस्साधनानां कथनम् ॥

---

युधिष्ठिरः—

अतत्त्वज्ञस्य शास्त्राणां सन्ततं संशयात्मनः ।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह ॥ १

भीष्मः—

गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।

श्रवणं चैव विद्यानां कूटस्थं श्रेय उच्यते ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गालवस्य च संवादं देवर्षेर्नारदस्य च ॥ ३

[1]स्वाश्रमं समनुप्राप्तं नारदं देववर्चसम् ।
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियम् ॥ ४

श्रेयस्कामो जितात्मानं नारदं गालवोऽब्रवीत् ॥ ४॥

गालवः—

यैः कैश्चित् सम्मतो लोके गुणैस्तु पुरुषो नृषु ।
[2]भवत्युपागतान् सर्वांस् तान् गुणाँल्लक्षयाम्यहम् ॥ ५॥

भवांश्चैवंविधोऽस्माकं संशयं छेत्तुमर्हति ।
अमूढश्चिरमूढानां लोकतत्त्वमजानताम् ॥ ६॥

ज्ञाने ह्येवं प्रवृत्तिस्स्यात् कार्याकार्ये विजानतः ।
यत् कार्यं न व्यवस्यामो भवान् नो वक्तुमर्हति ॥ ७॥

भगवन्नाश्रमास्सर्वे पृथगाचारदर्शनाः ।
इदं श्रेय इदं श्रेय इति नानाविधा गिरः ॥ ८॥

तानभिप्रस्थितान् दृष्ट्वा शास्त्रैश्शास्त्राभिनन्दिनः ।
स्वशास्त्रैः परितुष्टाश्च श्रेयो नोपलभामहे ॥ ९॥

शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा ।

---

1. ग—इदमर्धं नास्ति 2. ख-ग-ब—भवत्यनपगान्

शास्त्रैश्च बहुभिर्भूयश् श्रेयो गुह्यं प्रवेशितम् ॥ १०॥
एतस्मात् कारणाच्छ्रेयः कलिलं प्रतिभाति माम् ।
ब्रवीतु भगवांस्तन्मे उपसन्नोऽस्म्यधीहि भो ॥ ११॥

नारदः—

आश्रमास्तात चत्वारो यथा सम्प्रस्थिताः पृथक् ।
तान् सर्वाननुपश्य त्वं समाश्रित्यैव गालव ॥ १२॥
तेषां तेषां यथा हि त्वम् आश्रमाणां ततस्ततः ।
[1]नानारूपं गुणोद्देशं पश्य विप्रस्थितं पृथक् ॥ १३॥
नयन्ति चैव ते सम्यग् अभिप्रेतमसंशयम् ।
अनुपश्यंस्तथा सम्यग् आश्रमाणां परां गतिम् ॥ १४॥
यत्तु निश्श्रेयसं सम्यक् यच्चैवासंशयात्मकम् ।
अनुग्रहं च मित्राणाम् अमित्राणां च निग्रहम् ॥ १५॥
सङ्ग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः ।
निवृत्तिः कर्मणः पापात् सततं पुण्यशीलता ॥ १६॥
सद्भिश्च समुदाचारश् श्रेय एतदसंशयम् ।
मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ॥ १७॥
वाक् चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ।
देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि ॥ १८॥

---

1. अ—अर्धद्वयं नास्ति

[1]असन्त्यागश्च भृत्यानां श्रेय एतदसंशयम् ।
सत्यस्य वचनं श्रेयस् सत्यं ज्ञानं च दुष्करम् ॥ १९॥

यद्भूतहितमत्यन्तम् एतत् सत्यं ब्रवीमि ते ।
अहङ्कारस्य च त्यागः प्रणयस्य च निग्रहः ॥ २०॥

सन्तोषश्चैकचर्या च कूटस्थं श्रेय उच्यते ।
धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च ॥ २१॥

विद्यार्थानां च जिज्ञासा श्रेय एतदसंशयम् ।
शब्दरूपरसस्पर्शान् सह गन्धेन केवलान् ॥ २२॥

नात्यर्थमुपसेवेत श्रेयसोऽर्थी कथञ्चन ॥ २३

न कातर्यं दिवास्वप्नम् आलस्यं पैशुनं मदम् ।
अतियोगमयोगं च श्रेयसोऽर्थी परित्यजेत् ॥ २४

कर्मोत्कर्षं न मार्गेत [2]परेषां परिनिन्दया ।
स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥ २५

निर्गुणांश्चैव भूयिष्ठम् आत्मसम्भाविता नराः ।
दोषैरन्यान् गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ २६

अनुच्यमानास्तु पुनस् ते मन्यन्ते [3]महाजने ।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः ॥ २७

---

1. ख—अथ 2. ख--अयं पादोऽनन्तरश्च न स्तः
3. ग—पृथग्जनाः

अब्रुवन् कस्यचिन्निन्दाम् आत्मपूजामवर्णयन् ।
विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यशः ॥ २८

अब्रुवन् भाति सुरभिर् गन्धस्सुमनसां शुचिः ।
तथैवाव्याहरन् भाति विमलो भानुरम्बरे ॥ २९

एवमादीनि चान्यानि परित्यक्तानि मेधया ।
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च ॥ ३०

न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितश्श्वभ्रे कृतविद्यः प्रकाशते ॥ ३१

असदुच्चैरपि प्रोक्तश् शब्दस्समुपशाम्यति ।
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम् ॥ ३२

मूढानामवलिप्तानाम् असारं भाषितं बहु ।
[1]दर्शयत्यन्तरात्मानम् अग्निरूपमिवांशुमान् ॥ ३३

एतस्मात् कारणात् प्रज्ञां मृगयन्ते पृथग्विधाम् ।
प्रज्ञालाभो हि भूतानाम् उत्तमः प्रतिभाति मा ॥ ३४

नापृष्टः कस्यचिद्ब्रूयान्नाप्यन्यायेन पृच्छतः ।
ज्ञानवानपि मेधावी जडवत् समुपाविशेत् ॥ ३५

ततो वासं परीक्षेत धर्मनित्येषु साधुषु ।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ॥ ३६

---

1. ग—दर्शयन्त्यन्तरात्मानो दिवारूप

चतुर्णां यत्र वर्णानां धर्मेऽव्यतिकरो भवेत् ।
न तत्र वासं कुर्वीत श्रेयोर्थी वै कथञ्चन ॥ ३७

निरारम्भो ह्ययमिह यथालब्धोपजीवनः ।
पुण्यं पुण्येषु विपुलं पापं पापेषु चाप्नुयात् ॥ ३८

अपामग्नेस्तथैवेन्दोस् स्पर्शं वेदयते यथा ।
तथा पश्यामहे स्पर्शम् उभयोः पुण्यपापयोः ॥ ३९

अपश्यन्तोऽन्यविषयं भुञ्जते विघसाशिनः ।
भुञ्जानाश्चान्नविषयान् विषयान् विद्धि कर्मणाम् ॥ ४०

यत्रागमयमानानाम् असत्कारेण पृच्छताम् ।
प्रब्रूयाद्ब्राह्मणो धर्मं त्यजेत्तं देशमात्मवान् ॥ ४१

शिष्योपाध्यायिका वृत्तिर् यस्य स्यात् सुसमाहिता ।
यथावच्छास्त्रसम्पन्ना कस्तं देशं परित्यजेत् ॥ ४२

आकारं गूहमाना ये दोषान् ब्रूयुर्विपश्चितः ।
आत्मपूजाभिकामा वै को वसेत् तत्र पण्डितः ॥ ४३

यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः ।
प्रदीप्तमिव चेलान्तं कस्तं देशं न सन्त्यजेत् ॥ ४४

यत्र धर्ममनाशङ्काश् चरेयुर्वीतमत्सराः ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ४५

धर्ममर्थनिमित्तं तु चरेयुर्यत्र मानवाः ।

न तानुपवसेज्जातु ते तु पापकृतो जनाः ॥ ४६

कर्मणा यत्र पापेन वर्तन्ते जीवितेप्सवः ।
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥ ४७

येन खट्वां समारूढः कर्मणाऽनुशयी भवेत् ।
आदितस्तन्न कर्तव्यम् इच्छता भवमात्मनः ॥ ४८

यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः ।
कुटुम्बिनामग्रभुजस् त्यजेत्तद्राष्ट्रमात्मवान् ॥ ४९

श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्यास्तपस्विनः ।
याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ॥ ५०

स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः ।
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन् ॥ ५१

[1]अशुचीन् यत्र पश्येत ब्राह्मणान् वृत्तिकर्शितान् ।
त्यजेत्तद्राष्ट्रमासन्नम् उपसृष्टमिवामिषम् ॥ ५२

प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः ।
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ॥ ५३

दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ ५४

उपसृष्टेष्वदान्तेषु दुराचारेष्वसाधुषु ।

1. अ-क-ख-घ—अर्धदशकं नास्ति

अविनीतेषु लुब्धेषु सुमहद्दण्डधारणम् ॥ ५५

यत्र राजा धर्मनित्यो राज्यं वै पर्युपासते ।
अपास्य कामान् कामेशो वसेत्तत्राविचारयन् ॥ ५६

तथाशीला हि राजानस् सर्वान् विषयवासिनः ।
श्रेयसा योजयन्त्याशु श्रेयसि प्रत्युपस्थिते ॥ ५७

पृच्छतस्ते मया तात श्रेय एतदुदाहृतम् ।
न हि शक्यं प्रधानेन श्रेयस्सङ्ख्यातुमात्मनः ॥ ५८

एवं प्रवर्तमानस्य वृत्तिं प्रणिहितात्मनः ।
तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति ॥ ५९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
[ अस्मिन्नध्याये ५९ श्लोकाः ]

---

## ॥ द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति मुक्तिसाधनप्रतिपादकसगरारिष्टनेमिसंवादानुवादः ॥



युधिष्ठिरः—

कथं विमुक्तः पृथिवीं चरेदस्मद्विधो नरः ।
नित्यं कैश्च गुणैर्युक्तस् सङ्गपाशाद्विमुच्यते ॥ १

भीष्मः—

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ॥ २

सगरः—

किं श्रेयः परमं ब्रह्मन् कृत्वेह सुखमश्नुते ।
कथं न शोचेन्न क्षुभ्येद् एतदिच्छामि वेदितुम् ॥ ३

भीष्मः—

एवमुक्तस्तदा तार्क्ष्यस् सर्वशास्त्रविशारदः ।
विबुध्य सम्पदं चाग्र्यां स वाक्यमिदब्रवीत् ॥ ४

अरिष्टनेमिः—

सुखं मोक्षसुखं लोके न च लोकोऽवगच्छति ।
प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः ॥ ५
सक्तबुद्धिरशान्तात्मा स न शक्यश्चिकित्सितुम् ।

स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ॥ ६

स्नेहजानिह ते पाशान् वक्ष्यामि शृणु तान् मम ।
[1]सकर्णकेन शिरसा शक्या[2]श्छेत्तुं विजानता ॥ ७

सम्भाव्य पुत्रान् काले तु यौवनस्थान् निवेश्य च ।
समर्थाञ्जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ॥ ८

[3]भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम् ।
ज्ञात्वा प्रजहि काले त्वं परार्थमनुदृश्य च ॥ ९

सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम् ।
[4]इन्द्रियैरिन्द्रियार्थांस्त्वम् अनुभूय यथासुखम् ॥ १०

कृतकौतूहलस्तेषु मुक्तश्चर यथासुखम् ।
उपपत्त्योपलब्धेषु लाभेषु च समो भवेत् ॥ ११

एष तावत् समासेन तव सङ्कीर्तितो मया ।
मोक्षार्थो विस्तरेणापि भूयो वक्ष्यामि तच्छृणु ॥ १२

मुक्ता वीतभया लोके चरन्ति सुखिनो नराः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ १३

आहारसञ्चये सक्ता यथा कीटपिपीलिकाः ।

---

1. क—रजसा ; ग—सकण्टकेन शिरसा
2. क-ख-घ—जेतुं
3. अ-क—अर्धत्रयं नास्ति
4. ख—अर्धद्वयं नास्ति

असक्तास्सुखिनो लोके सक्ताश्चैव विनाशिनः ॥ १४
स्वजने न च ते चिन्ता कर्तव्या मोक्षबुद्धिना ।
इमे मया विनाभूता भविष्यन्ति कथं न्विति ॥ १५
स्वयमुत्पद्यते जन्तुस् स्वयमेव विवर्धते ।
सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ॥ १६
[1]भोजनाच्छादने चैव मात्रा पित्रा च सङ्ग्रहम् ।
स्वकृतेनाधिगच्छन्ति लोके नास्त्यकृतं पुरा ॥ १७
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम् ।
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः ॥ १८
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा ।
को हेतुस्स्वजनं पोष्टुं रक्षितुं [2]वाऽकृतात्मनः ॥ १९
स्वजनं हि यदा मृत्युर् हन्त्येव भुवि पश्यतः ।
कृतेऽपि यत्ने महति ननु बोद्धव्यमात्मना ॥ २०
जीवन्तमपि चैवैनं भरणे रक्षणे तथा ।
असमाप्ते परित्यज्य पश्चादपि मरिष्यसि ॥ २१
यदा मृतस्त्वं स्वजनं न ज्ञास्यसि कथञ्चन ।
सुखितं दुःखितं वाऽपि ननु बोद्धव्यमात्मना ॥ २२

1. अ-क-ख-घ—नास्तीदमर्धम्

मृते वा त्वयि जीवे वा यदि भोक्ष्यति वै जनः ।
स्वकृतं ननु बुद्ध्वैवं कर्तव्यं हितमात्मनः ॥ २३

एवं विजानँल्लोकेऽस्मिन् कः कस्येत्यभिसंज्ञितः ।
मोक्षे निवेशयात्मानं भूयश्चाप्युपधारय ॥ २४

क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहस् सत्त्ववान् मुक्त एव सः ॥ २५

द्यूते पाने तथा स्त्रीषु मृगयायां तु यो नरः ।
न प्रमाद्यति सम्मोहात् सततं मुक्त एव सः ॥ २६

दिवसे दिवसे नाम रात्रौ रात्रौ तथा सदा ।
भोक्तव्यमिति यः खिन्नो दोषबुद्धिस्स उच्यते ॥ २७

आत्मभावं तथा स्त्रीषु सक्तमेव पुनः पुनः ।
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः ॥ २८

सम्भवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन् मुक्त एव सः ॥ २९

प्रस्थं [1]वाहसहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकं स्थानं यः पश्यति स मुच्यते ॥ ३०

मृत्युनाऽभ्याहतं लोकं व्याधिभिश्चोपपीडितम् ।
[2]अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ॥ ३१

---

1. क-अ—भार 2. ग—प्रवृत्ति

यः पश्यति सुखी तुष्टो न पश्यंश्च विहन्यते ।
यश्चाप्यल्पेन सन्तुष्टो लोकेऽस्मिन् मुक्त एव सः ॥ ३२

[1]अग्नीषोमाविदं सर्वम् इति यश्चानुपश्यति ।
न च संस्पृश्यते भावैर् अद्भुतैर्मुक्त एव सः ॥ ३३

पर्यङ्कशय्या भूमिश्च समाने यस्य देहिनः ।
शालेयं च कदन्नं च यस्य स्यान्मुक्त एव सः ॥ ३४

क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ॥ ३५

पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति ।
तथा च वर्तते दृष्ट्वा लोकेऽस्मिन् मुक्त एव सः ॥ ३६

सुखदुःखे समे यस्य लाभालाभौ जयाजयौ ।
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ॥ ३७

[2]श्लेष्ममूत्रपुरीषाणां दोषाणां सञ्चयं तथा ।
शरीरदोषबाहुल्यं दृष्ट्वा चेदं विमुच्यते ॥ ३८

वलीपलितसंयोगं कायवैवर्ण्यमेव च ।
कुब्जभावं च जरया यः पश्यति स मुच्यते ॥ ३९

पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा ।

---

1. ग—अ-क-ब—अधैचतण्यं नाम्नि

बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥ ४०

गतानृषींस्तथा देवान् असुरांश्च तथा गतान् ।
लोकादस्मात् परं लोकं यः पश्यति स मुच्यते ॥ ४१

प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्रास्सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥ ४२

अर्थांश्च दुर्लभाँल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥ ४३

अपत्यानां च वैगुण्यं जनं विगुणमेव च ।
पश्यन् भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ॥ ४४

शास्त्राल्लोकाच्च यो बुद्धस् सत्त्वं पश्यति मानवः ।
असारमिति मानुष्यं सर्वथा मुक्त एव सः ॥ ४५

एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् ।
गार्हस्थ्ये यदि ते मोक्षे कृता बुद्धिरविक्लबा ॥ ४६

भीष्मः—

तत्तस्य वचनं श्रुत्वा सम्यक् स पृथिवीपतिः ।
मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]

## ॥ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भार्गवचरित्रकथनम् ॥

युधिष्ठिरः—

तिष्ठते मे सदा तात कौतूहलमिदं हृदि ।
तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह ॥ १

कथं देवर्षिरुशना सदा काव्यो महामतिः ।
असुराणां प्रियकरस्सुराणामप्रिये रतः ॥ २

वर्धयामास तेजश्च किमर्थममितद्युतिः ।
नित्यं वैरनिबद्धाश्च दानवास्सुरसत्तमैः ॥ ३

कथं चाप्युशना प्राप शुक्रत्वममरद्युतिः ।
ऋद्धिं च स कथं प्राप्तस्सर्वमेतद्ब्रवीहि मे ॥ ४

न याति च स तेजस्वी मध्येन नभसः कथम् ।
एतदिच्छामि विज्ञातुं निखिलेन पितामह ॥ ५

भीष्मः—

शृणु राजन्नवहितस्सर्वमेतद्यथातथम् ।
यथामति यथा चैतच्छ्रुतं पूर्वं मयाऽनघ ॥ ६

एष भार्गवदायादो मुनिर्मान्यो दृढव्रतः ।
असुराणां प्रियकरो निमित्ते कारणान्तरे ॥ ७

इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपस्सदा ।
प्रभविष्णुश्च कोशस्य जगतश्च प्रभुस्तथा ॥ ८

तस्यात्मानमथाविश्य योगसिद्धो महामुनिः ।
रुद्ध्वा धनपतिं देवं योगेन हृतवान् वसु ॥ ९

हृते धने ततश्शर्म न लेभे धनदस्तथा ।
आपन्नमन्युस्संविग्नस् सोऽभ्यगात् सुरसत्तमम् ॥ १०

निवेदयामास ततश् शिवायामिततेजसे ।
देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ ११

कुबेरः—

योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु ।
योगेनात्मगतिं कृत्वा निस्सृतश्च महातपाः ॥ १२

भीष्मः—

एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः ।
संरक्तनयनो रोषाच् छूलमादाय तस्थिवान् ॥ १३

क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधम् ।
उशना दूरगस्तस्य ह्यभूज्ज्ञात्वा चिकीर्षितम् ॥ १४

स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः ।
गतिमागमनं वेत्ति स्थानं चेति ततः प्रभुः ॥ १५

सञ्चिन्त्योग्रेण तपसा महात्मानं महेश्वरम् ।

उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत ॥ १६
विज्ञातरूपस्स तदा तपस्सिद्धेन चक्षुषा ।
ज्ञात्वा शूलं च देवेशः पाणिना समनामयत् ॥ १७
आनतेनाथ शूलेन पाणिमापामितौजसः ।
पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ॥ १८
[1]पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः ।
आस्ये विवृत्य भ्रुकुटिं पाणिं सम्प्राक्षिपच्छनैः ॥ १९
स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः ।
व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः ॥ २०

युधिष्ठिरः—

किमर्थं व्यचरद्राजन्नुशना तस्य धीमतः ।
जठरे देवदेवस्य किं वाऽकार्षीन्महाद्युतिः ॥ २१

भीष्मः—

पुरा सोऽन्तर्जलगतस् स्थाणुभूतो महाव्रतः ।
वर्षाणामभवद्राजन् प्रयुतान्यर्बुदानि च ॥ २२
उदतिष्ठत्तपस्तप्त्वा दुश्चरं च महाह्रदात् ।
ततो देवादिदेवस्तु ब्रह्मा समुपसर्पत ॥ २३

---

1. ग—स तु प्रविष्ट उशनाः पाणिं माहेश्वरं प्रभुः । [अधिकः पाठः]
इदमर्धमर्धद्वयादनन्तरं चास्ति

तपोवृद्धिमपृच्छत् स कुशलं चैनमव्ययम् ।
तपस्सुचीर्णमिति च प्रोवाच वृषभध्वजः ॥ २४

तत्संयोगेन वृद्धिं चाप्यपश्यत् स तु शङ्करः ।
महामतिरचिन्त्यात्मा सत्यधर्मरतिस्सदा ॥ २५

[1]स तेनाढ्यो महायोगी तपसा च धनेन च ।
व्यराजत महाराज त्रिषु लोकेषु वीर्यवान् ॥ २६

ततः पिनाकी योगात्मा ध्यानयोगं समाविशत् ।
उशना तु समुद्विग्नो निलिल्ये जठरे ततः ॥ २७

तुष्टाव च महायोगी रुद्रं तत्रस्थ एव च ।
निस्सारं काङ्क्षमाणश्च तेजसा प्रत्यहन्यत ॥ २८

उशना तु ततः प्राह जठरस्थो महामुनिः ।
प्रसादं मे कुरुष्वेति पुनः पुनररिन्दम ॥ २९

तमुवाच महादेवो गच्छ [2]शिश्नेन मोक्षणम् ।
इति स्रोतांसि सर्वाणि रुद्ध्वा त्रिदशपुङ्गवः ॥ ३०

अपश्यमानस्सद्वारं सर्वतः पिहितो मुनिः ।
पर्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ॥ ३१

स विनिष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् ।
कार्येण तेन नभसा न गच्छति च मध्यतः ॥ ३२

1. ग—तेनाभाष्य महा 2. घ—शीघ्रेण

निष्क्रान्तमथ तं दृष्ट्वा ज्वलन्तमिव तेजसा ।
भवो रोषसमाविष्टस् शूलोद्यतकरास्स्थितः ॥ ३३

न्यवारयत तं देवी क्रुद्धं पशुपतिं पतिम् ।
पुत्रत्वमगमद्देव्या वारिते शङ्करे च सः ॥ ३४

देवी—

हिंसनीयस्त्वया नैष मम पुत्रत्वमागतः ।
न हि देवोदरात् कश्चिन्निस्सृतो नाशमर्हति ॥ ३५

भीष्मः—

ततः प्रीतो महादेव्याः प्रहसंश्चेदमब्रवीत् ।
गच्छत्वेष यथाकामम् इति राजन् पुनः पुनः ॥ ३६

ततः प्रणम्य वरदं देवं देवीमुमां तथा ।
उशना प्राप तद्धीमान् गतिमिष्टां महामुनिः ॥ ३७

एतत्ते कथितं तात भार्गवस्य महात्मनः ।
चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
[अस्मिन्नध्याये ३८ श्लोकाः]

———

## ॥ चतुस्सप्तत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति श्रेयस्साधनप्रतिपादकपराशरगीतानुवादः ॥

युधिष्ठिरः—

अतः परं महाबाहो यच्छ्रेयस्तद्ब्रवीहि मे ।
न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥ १

किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम ।
श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ॥ २

भीष्मः—

अत्र ते वर्तयिष्यामि यथा पूर्वं महायशाः ।
पराशरं महात्मानं पप्रच्छ जनको नृपः ॥ ३

जनकः—

किं श्रेयस्सर्वलोकानाम् अस्मिँल्लोके परत्र च ।
यद्भवेत् प्रतिपत्तव्यं तद्भवान् प्रब्रवीतु मे ॥ ४

भीष्मः—

ततस्स तपसा युक्तस् सर्वधर्मविधानवित् ।
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥ ५

पराशरः—

धर्म एव कृतश्श्रेयान् इह लोके परत्र च ।
तस्माद्धि परमं नास्ति तथा प्राहुर्मनीषिणः ॥ ६

प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ।
धर्मात्मकः कर्मविधिर् देहिनां नृपसत्तम ॥ ७
तस्मिन्नाश्रमिणस्सन्तस् स्वधर्माणीह कुर्वते ॥ ७॥

चतुर्विधा हि लोकस्य यात्रा तात विधीयते ।
मर्त्या यत्रावतिष्ठन्ते सा च कामात् प्रवर्तते ॥ ८॥

सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः ।
दशार्धप्रविभक्तानां भूतानां बहुधा गतिः ॥ ९॥

सौवर्णं राजतं चैव यथा भाण्डं निषिच्यते ।
तथा निषिच्यते जन्तुः पूर्वकर्मवशानुगः ॥ १०॥

नाबीजाज्जायते जन्तुर् नाकृत्वा सुखमेधते ।
सुकृतैर्विन्दति सुखं प्राप्य देहक्षयं नरः ॥ ११॥

दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।
स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥ १२॥

प्रेत्य जातिकृतं कर्म न स्मरन्ति सदा जनाः ।
[1]तथैतस्यां फलप्राप्तौ कर्म चापि चतुर्विधम् ॥ १३॥

[2]लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः ।

1. क-घ—ते वै तस्य; ख—ते वै तस्य फलं प्राप्तो
ग—ते वै तस्यां फलप्राप्तौ

शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम् ॥ १४॥

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते ॥ १५॥

निरन्तरं च मिश्रं च फलते कर्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥ १६॥

कदाचित् सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥ १७॥

ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाद्दुष्कृतं च तद्विद्धि मनुजाधिप ॥ १८॥

दमः क्षमा धृतिस्तेजस् सन्तोषस्सत्यवादिता ।
ह्रीरहिंसाऽव्यसनता दाक्ष्यं चैतत् सुखावहम् ॥ १९॥

दुष्कृते सुकृते वाऽपि न जन्तुर्नियतो भवेत् ।
नित्यं मनस्समाधाने प्रयतेत विचक्षणः ॥ २०॥

नायं परस्य सुकृतं दुष्कृतं वाऽपि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥ २१॥

सुखदुःखे समाधाय पुमानन्येन गच्छति ।
अन्येनैव जनस्सर्वस् सङ्गतो यश्च पार्थिवः ॥ २२॥

परेषां यदसूयेत न तत् कुर्यात् स्वयं नरः ।

यो ह्यसूयुस्तथा युक्तस् सोऽपहासं निगच्छति ॥ २३॥

भीरू राजन्यो ब्राह्मणस्सर्वभक्षो
वैश्योऽनीहावान् हीनवर्णोऽलसश्च ।
विद्वांश्चाशीलो वृत्तहीनः कुलीनस्
सत्याद्विभ्रष्टो ब्राह्मणस्त्री च दुष्टा ॥ २४।

रागी मुक्तः पचमानो त्महेतोर्
मूर्खो वक्ता नृपहीनं च राष्ट्रम् ।
एते सर्वे शोच्यतां यान्ति राजन्
यश्चामुक्तस्स्नेहहीनः प्रजासु ॥ २५।

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
[अस्मिन्नध्याये २५॥ श्लोकाः]

---

## ॥ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्रेयस्साधनप्रतिपादकपराशरगीतानुवादः ॥

पराशरः—

मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः ।
रश्मिभिर्ज्ञानसम्भूतैर् यो यच्छति स बुद्धिमान् ॥ १

सेवाश्रितेन मनसा वृत्तिहीनस्य शस्यते ।
स्वजातिहीनान्निर्वृत्ता न तु तुल्यात् परस्परम् ॥ २

आयुर्न सुलभं लब्ध्वा नापकर्षेद्विशां पते ।
उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ॥ ३

[1]वर्णेभ्यो विपरिभ्रष्टस् स वै सम्मानमर्हति ।
न तु यस्सत्क्रियां प्राप्य राजसं कर्म सेवते ॥ ४

वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ।
दुर्लभं जन्म लब्ध्वा हि न हन्यात् पापकर्मणा ॥ ५

अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्नुदेत् ।
पापं हि कर्म फलति पापमेव स्वयंकृतम् ॥ ६
तस्मात् पापं न सेवेत कर्म दुःखफलोदयम् ॥ ६॥

1. ख—अर्धद्वयं नास्ति

पापानुबन्धनं कर्म यद्यपि स्यान्महाफलम् ।
तन्न सेवेत मेधावी शुचिः कुसलिलं यथा ॥ ७॥

किं कष्टमनुपश्यामि फलं पापस्य कर्मणः ।
प्रत्यापन्नस्य हि सतो नात्मा तावद्धि रोचते ॥ ८॥

प्रत्युत्पत्तिश्च यस्येह बालिशस्य न जायते ।
तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते ॥ ९॥

विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसेवितम् ।
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे ॥ १०॥

स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति ।
प्रायश्चित्तं नरः कर्तुम् उभयं सोऽश्नुते पृथक् ॥ ११॥

अज्ञानात्तु कृतां [1]हिंसाम् अहिंसा व्यपकर्षति ।
ब्राह्मणाश्शास्त्रनिर्देशाद् इत्याहुर्ब्रह्मवादिनः ॥ १२॥

तथा कामकृतं चास्य विहिंसैवापकर्षति ।
इत्याहुर्धर्मशास्त्रज्ञा ब्राह्मणा वेदपारगाः ॥ १३॥

अहं तु तावत् पश्यामि कर्म यद्वर्तते कृतम् ।
गुणयुक्तं प्रकाशं वा पापेनानुपसंहितम् ॥ १४॥

यथा सूक्ष्माणि कर्माणि [2]फलन्तीह यथातथम् ।

---

1. घ—हिंसां तपः कृत्वाऽपकर्षति
2. अ-क—अष्टौ पादा न सन्ति

बुद्धियुक्तानि तानीह कृतानि मनसा सह ॥ १५॥
भवत्यल्पफलं कर्म सेवितं नित्यमुल्बणम् ।
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा ॥ १६॥
कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
नाचरेत् तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥ १७॥
सञ्चिन्त्य मनसा राजन् विदित्वा शक्तिमात्मनः ।
करोति यश्शुभं कर्म स वै भद्राणि पश्यति ॥ १८॥
नवे कपाले सलिलं संन्यस्तं हीयते यथा ।
[1]नवेतरे तथा भावानाप्नोति सुखभागिति ॥ १९॥
सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते ।
तद्धि वृद्धिमवाप्नोति सलिलं पुरुषर्षभ ॥ २०॥
एवं कर्माणि यानीह बुद्धियुक्तानि भूपते ।
[2]न समानीह हीनानि तानि पुण्यतमान्यपि ॥ २१॥

राज्ञा जेतव्यास्सायुधाश्चोन्नताश्च
सम्यक् कर्तव्यं पालनं च प्रजानाम् ।
अग्निश्चेतव्यो बहुशश्चापि यज्ञैर्
अन्ते मध्ये वा वनमाश्रित्य स्थेयम् ॥ २२॥

---

1. क-ख-ग-घ—न चेतरे
ग—न चेतरे तथा भावं नाप्नोति सुखभावितम् ।
2. ग—समानानीह

दमान्वितः पुरुषो धर्मशीलो
भूतानि चात्मानमिवानुपश्येत् ।
गरीयसः पूजयेदात्मशक्त्या
सत्येन शीलेन सुखं नरेन्द्र ॥ २३॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥**
**॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥**
**[अस्मिन्नध्याये २३॥ श्लोकाः]**

---

## ॥ षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥

**भीष्मेण युधिष्ठिरं प्रति यथाविभवशक्तिधर्माचरणस्य श्रेयस्साधनताप्रतिपादकपराशरगीतानुवादः ॥**

---

**पराशरः—**

कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति ।
प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना ॥

गौरवेण परित्यक्तं निस्स्नेहं परिवर्जयेत् ।
[1]सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥

विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ ।

---

1. ख-घ—सोदरं ग—सोदर्यं वा सुतमपि

तयोः पुण्यतरं दानं तद्द्विजस्य प्रतीच्छतः ॥ ३
न्यायागतं धनं वर्णैर् न्यायेनैव विवर्धितम् ।
संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चितम् ॥ ४
न धर्मार्थं नृशंसेन कर्मणा धनमार्जयेत् ।
शक्तितस्सर्वकार्याणि कुर्यान्नर्द्धिमनुस्मरेत् ॥ ५
अपोऽपि प्रयताश्शीतास् तापिता ज्वलनेन वा ।
शक्तितोऽतिथये दत्वा क्षुधार्तायाऽश्नुते फलम् ॥ ६
रन्तिदेवेन लोकेष्टा सिद्धिः प्राप्ता महात्मना ।
फलपत्रैरथो मूलैर् मुनीनर्चितवांस्तु सः ॥ ७
तैरेव फलपत्रैश्च [1]स मातरमतोषयत् ।
तस्माल्लेभे परं स्थानं शैब्योऽपि पृथिवीपतिः ॥ ८
देवर्ष्यतिथिभृत्येभ्यः पितृभ्योऽथात्मनस्तथा ।
ऋणवाञ्जायते मर्त्यस् तस्मादनृणतां व्रजेत् ॥ ९
स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा ।
पितृभ्यश्श्राद्धदानेन नृणामध्ययनेन च ॥ १०
पाकशेषावहार्येण पालनेनात्मनोऽपि च ।
यथावद्भृत्यवर्गस्य चिकीर्षेद्धर्ममाश्रितः ॥ ११
प्रयत्नेन च संसिद्धा धनैरपि विवर्जिताः ।

---

1. ग—सम्यग्देवानतोषयत्

सम्यग्घुत्वा हुतवहं मुनयस्सिद्धिमागताः ॥ १२
विश्वामित्रस्य पुत्रत्वम् ऋचीकतनयोऽगमत् ।
ऋग्भिस्स्तुत्वा महाभागो देवान् वै यज्ञभागिनः ॥ १३
गतश्शुक्रत्वमुशना देवदेवप्रसादनात् ।
देवीं स्तुत्वा च गगने मोदते तेजसा वृतः ॥ १४
असितो देवलश्चैव तथा नारदपर्वतौ ।
कक्षीवाञ्जामदग्न्यश्च रामस्ताण्ड्यस्तथांशुमान् ॥ १५
वसिष्ठो [1]जमदग्निश्च विश्वामित्रोऽत्रिरेव च ।
भरद्वाजो हरिश्मश्रुः कुण्डधारश्श्रुतश्रवाः ॥ १६
एते महर्षयस्स्तुत्वा विष्णुमृग्भिस्समाहिताः ।
लेभिरे तपसा सिद्धिं प्रसादात् तस्य धीमतः ॥ १७
अनर्हाश्चार्हतां प्राप्तास् सन्तस्स्तुत्वा तमेव ह ।
न तु वृद्धिमिहान्विच्छेत् कर्म कृत्वा जुगुप्सितम् ॥ १८
येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् ।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ १९
आहिताग्निस्तु धर्मात्मा यश्च पुण्यकृदुत्तमः ।
वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ॥ २०
स चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते ।

1. ग—वामदेवश्च

श्रेयो हि नाहिताग्नित्वम् अग्निहोत्रं न निष्क्रियम् ॥ २१

अग्निरात्मा च माता च पिता जनयिता तथा ।
गुरुश्च नरशार्दूल परिचर्या यथातथम् ॥ २२

मानं त्यक्त्वा यो नरो वृद्धसेवी
विद्वान् क्लीबः पश्यते प्रीतियोगम् ।
दाक्ष्येणाहीनो धर्मयुक्तेन दान्तो
लोकेऽस्मिन् वै पूज्यते सद्भिरार्यैः ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
[अस्मिन्नध्याये २३ श्लोकाः]

---

## ॥ सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणादिवर्णधर्मादिप्रतिपादकपराशरगीतानुवादः ॥

---

पराशरः—

वृत्तिस्सकाशाद्वर्णेभ्यो नित्यं हीनस्य शोभना ।
प्रीत्योपनीता निर्दिष्टा [1]भूयिष्ठं कर्म कुर्वतः ॥ १

वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा ।

---

1. क-ख-घ—धर्मिष्ठं ; अ—धर्मिष्ठः कुरुते सदा

न वृत्तिं परतो मार्गेच्छुश्रूषां तु प्रयोजयेत् ॥ २
सद्भिस्तु सह संसर्गश्शोभते धर्मदर्शिभिः ।
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः ॥ ३
यथोदयगिरौ द्रव्यं सन्निकर्षेण दीप्यते ।
तथा सत्सन्निकर्षेण हीनवर्णोऽपि दीप्यते ॥ ४
यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम् ।
तादृशं कुरुते रूपम् एवमेतदवेहि मे ॥ ५
तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन ।
अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ॥ ६
सुखे वा यदि वा दुःखे वर्तमानो विचक्षणः ।
यश्चिनोति शुभान्येव स भद्राणीह पश्यति ॥ ७
धर्मादपेतं यत् कर्म यद्यपि स्यान्महाफलम् ।
न तत् सेवेत मेधावी न तद्धितमिहोच्यते ॥ ८
धर्मेण सहितं यत्तु भवेदल्पफलोदयम् ।
तत् कार्यमविशङ्केन कर्मात्यन्तं सुखावहम् ॥ ९
[1]यो नित्यं गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग् राजा भवति तस्करः ॥ १०
स्वयम्भूरसृजच्चाग्रे धातारं लोकसत्कृतम् ।

---

1. अ-क-ख-घ—यो हृत्वा गोसह

योऽसृजत् पुत्रमेकं वै लोकानां धारणे रतम् ॥ ११
तमर्चयित्वा वैश्यस्तु कुर्यादत्यर्थमृद्धिमत् ।
रक्षितव्यं तु राजन्यैर् उपयोज्यं द्विजातिभिः ॥ १२
[1]अजिह्मैरशठक्रोधैर् हव्यकव्यप्रयोक्तृभिः ।
शूद्रैर्निर्माजनं कार्यम् एवं धर्मो न नश्यति ॥ १३
अप्रनष्टे ततो धर्मे भवन्ति सुखिताः प्रजाः ।
सुखेन तासां राजेन्द्र मोदन्ते दिवि देवताः ॥ १४
तस्माद्यो रक्षति नृपस् स्वधर्मेणाभिपूज्यते ।
अधीते चापि यो विप्रो वैश्यो यश्चार्जने रतः ॥ १५
यश्च शुश्रूषते शूद्रस् सततं नियतेन्द्रियः ।
अतोऽन्यथा मनुष्येन्द्र स्वधर्मात् परिहीयते ॥ १६
प्राणसन्तापनिर्दिष्टाः काकण्योऽपि महाफलाः ।
न्यायेनोपार्जिता दत्ताः किमुतान्यास्सहस्रशः ॥ १७
सत्कृत्य तु द्विजातिभ्यो यो ददाति नराधिपः ।
यादृशं तादृशं नित्यम् अश्नाति फलमूर्जितम् ॥ १८
अभिगम्य दत्तं सन्तुष्ट्या यत्तदाहुरभिष्टुतम् ।
याचितेन तु यद्दत्तं तदाहुर्मध्यमं फलम् ॥ १९
अवज्ञया दीयते यत् तथैवाश्रद्धयाऽपि च ।

---

1. ख—अजिह्मगैरक्रोधैः ; ग—अजिह्मैरजितप्रज्ञैर्हव्य

तदाहुरधमं दानं मुनयस्सत्यवादिनः ॥ २०
अतिक्रमे मज्जमानो विविधे तु नरस्सदा ।
तथा प्रयत्नं कुर्वीत यथा मुच्येत [1]संशयात् ॥ २१
दमेन शोभते विप्रः क्षत्रियो विजयेन च ।
धनेन वैश्यश्शूद्रस्तु नित्यं [2]दास्येन शोभते ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
[अस्मिन्नध्याये २२ श्लोकाः]

## ॥ अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति वर्णधर्मादिप्रतिपादकपराशरगीतानुवादः ॥

पराशरः—

प्रतिग्रहार्जिता विप्रे क्षत्रिये युद्धनिर्जिताः ।
वैश्ये न्यायार्जिताश्चैव शूद्रे शुश्रूषयाऽर्जिताः ॥ १
स्वल्पा ह्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः ।
नित्यं त्रयाणां वर्णानां शूद्रश्शुश्रूषुरुच्यते ॥ २
क्षत्रधर्मा वैश्यधर्मा आपत्तौ यतते द्विजः ।

1. ग—किल्बिषात् 2. अ-क-ख-घ—दाक्ष्येण शोभते

शूद्रकर्मा यदा तु स्यात् तदा पतति वै द्विजः ॥ ३
वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजीवनम् ।
[1]शूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ॥ ४
रङ्गावतरणं चैव तथा रूपोपजीवनम् ।
मद्यमांसोपजीव्यं च विक्रयो लोहचर्मणोः ॥ ५
अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम् ।
[2]कृतपूर्विणस्तु त्यजतो महान् धर्म इति श्रुतिः ॥ ६
संसिद्धः पुरुषो लोके यदाचरति पापकम् ।
मदेनाभिप्लुतमनास् तच्च निग्राह्यमुच्यते ॥ ७
श्रूयते हि पुराणेऽपि प्रजा धिग्दण्डशासिनः ।
दान्ता धर्मप्रधानाश्च न्यायधर्मानुवर्तकाः ॥ ८
धर्म एव सदा नृणाम् इह राजन् प्रशस्यते ।
धर्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ॥ ९
तं धर्ममसुरास्तात नामृष्यन्त नराधिप ।
विवर्धमानाः क्रमशस् तत्र ते त्वाविशन् प्रजाः ॥ १०
तासां दर्पस्समभवत् प्रजानां धर्मनाशनः ।
दर्पात्मनां ततः क्रोधस् तदा तेषामजायत ॥ ११

1. अ-क-ख-घ—अर्धद्वयं नास्ति
2. ग—कृतकर्मणस्तु

ततः क्रोधाभिभूतानां वृत्तं लज्जा च नश्यतः ।
श्रीश्चैवाप्यनशद्राजंस् ततो मोहो ऽव्यजायत ॥ १२

ततो मोहपरीतास्ते नापश्यन्त यथापुरम् ।
परस्परावमर्देन वर्धयन्तो यथासुखम् ॥ १३

तान् प्राप्य तु स धिग्दण्डो न कारणमतोऽभवत् ।
ततोऽभ्यगच्छन् देवांश्च ब्राह्मणांश्चावमत्य ह ॥ १४

एतस्मिन्नेव काले तु देवा देववरं शिवम् ।
अगच्छञ् शरणं वीरं बहुरूपं [1]गुणाधिपम् ॥ १५

तेन स्म ते गगनगास् सपुराः पतिताः क्षितौ ।
त्रिदैवत्येन बाणेन [2]देवाप्यायिततेजसा ॥ १६

तेषामधिपतिस्त्वासीद् भीमको भीमविक्रमः ।
देवतानां भयकरस् स हतश्शूलपाणिना ॥ १७

तस्मिन् हतेऽथ सद्भावं प्रत्यपद्यन्त मानवाः ।
प्रावर्तन्त च वै वेदाश् शास्त्राणि च यथापुरम् ॥ १८

ततोऽभ्यषिञ्चद्राज्ये तु देवानां दिवि वासवम् ।
सप्तर्षयश्चान्वयुञ्जन् नराणां दण्डधारणे ॥ १९

सप्तर्षीणामथोर्ध्वं च विपृथुर्नाम पार्थिवः ।

---

1. क-ख—गणाधिपम्; घ—पिनाकिनम्
2. अ-क—देवस्यामिततेजसा

राजानः क्षत्रियाश्चैव मण्डलेषु पृथक् पृथक् ॥ २०

महाकुलेषु ये जाता वृद्धाः पूर्वतराश्च ये ।
तेषामथासुरो भावो हृदयान्नापसर्पत ॥ २१

तस्मात्तेनैव भावेन सानुषङ्गेण पार्थिवाः ।
आसुराण्येव कर्माणि न्यसेवन् भीमविक्रमाः ॥ २२

प्रत्यतिष्ठंश्च तेष्वेव तान्येव स्थापयन्ति च ।
भुञ्जते तानि चाद्यापि ये बालिशतरा नराः ॥ २३

भीष्मः—

तस्मादहं ब्रवीमि त्वां राजन् सञ्चिन्त्य शास्त्रतः ।
संसिद्धावागमं कुर्यात् कर्म हिंसात्मकं त्यजेत् ॥ २४

न सङ्करेण द्रविणं विचिन्वीयाद्विचक्षणः ।
धर्मार्थं न्यायमुत्सृज्य न तत् कल्याणमुच्यते ॥ २५

स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः ।
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्मेणानुपालय ॥ २६

इष्टानिष्टसमायोगे वैरं सौहार्दमेव च ॥ २६॥

अथ जातिसहस्राणि बहूनि परिवर्तते ।
तस्माद्गुणेषु रज्येथा मा दोषेषु कथञ्चन ॥ २७॥

निर्गुणो यो हि दुर्बुद्धिर् आत्मनस्सोऽरिरुच्यते ।
मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ॥ २८॥

न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥ २९

धर्मशीलो नरो विद्वान् ईहकोऽनीहकोऽपि वा ।
आत्मभूतस्सदा लोके चरेद्भूतान्यहिंसया ॥ ३०

यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।
नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

---

## ॥ एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तपःप्रशंसादिपरपराशरगीतानुवादः ॥

---

पराशरः—

एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः ।
तपोविधिं तु वक्ष्यामि तन्मे निगदतश्शृणु ॥ १

प्रायेण हि गृहस्थस्य ममत्वं नाम जायते ।
सङ्गागतं नरश्रेष्ठ भावैस्तामसराजसैः ॥ २

गृहानाश्रित्य गावश्च क्षेत्राणि च धनानि च ।
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥ ३

एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ॥ ४

रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजाता रतिर्नाम समुपैति नराधिप ॥ ५

[1]रत्यर्थे भोगिनोऽत्यक्त्वा स वै रतिपरायणः ।
लाभं ग्राम्यसुखादन्यं रतितो नानुपश्यति ॥ ६

ततो लोभाभिभूतात्मा सङ्गाद्वर्धयते जनम् ।
पुष्ट्यर्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥ ७

स जानन्नपि चाकार्यम् अर्थार्थं सेवते पुनः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥ ८

ततो मानेन सम्पन्नो रक्षन्नात्मपराजयम् ।
करोति येन भोगी स्याम् इति तस्माद्विनश्यति ॥ ९

[2]तेजो हि बुद्धियुक्तानां शाश्वतं ब्रह्मदर्शनम् ।
अन्विच्छतां शुभं कर्म नृणां सत्यं शुभं सुखम् ॥ १०

स्नेहायतननाशाच्च धननाशाच्च पार्थिव ।
आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ ११

निर्वेदादात्मसम्बोधं सम्बोधाच्छास्त्रदर्शनम् ।

---

1. ग—कृतार्थभागितां त्यक्त्वा स वै
2. ग—अर्धद्वयं अत्र नास्ति अर्धचतुष्टयानन्तरमस्ति पाठभेदेन

शास्त्रार्थदर्शनाद्राजंस् तप एवानुपश्यति ॥ १२

[1]दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् ।
यो वै प्रियसुखे क्षीणे तपः कर्तुं व्यवस्यति ॥ १३

तपस्सर्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रदेशिकम् ॥ १४

प्रजापतिः प्रजाः पूर्वम् असृजत्तपसा विभुः ।
क्वचित् क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव ॥ १५

आदित्या वसवो रुद्रास् तथैवाग्न्यश्विमारुताः ।
विश्वे देवास्तथा साध्याः पितरोऽथ मरुद्गणाः ॥ १६

यक्षराक्षसगन्धर्वास् सिद्धाश्चान्ये दिवौकसः ।
संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः ॥ १७

ये चान्ये ब्रह्मणा सृष्टा ब्राह्मणास्तपसा पुरा ।
ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा ॥ १८

मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः ।
महाकुलेषु दृश्यन्ते तत् सर्वं तपसः फलम् ॥ १९

[2]कौशिकानि तु वस्त्राणि शुभान्याभरणानि च ।

---

1. ग—तपसा बुद्धियुक्तानां शाश्वतं ब्रह्मदर्शनम् ॥
अन्विच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥ [अधिकः पाठः]

2. अ—अर्धचतुष्टयं नास्ति

वाहनासनयानानि तत्सर्वं तपसः फलम् ॥ २०
मनोनुकूलाः प्रमदा रूपवत्यस्सहस्रशः ।
वासः प्रासादपृष्ठे च सर्वं तत्तपसः फलम् ॥ २१

शयनानि च मुख्यानि भोज्यानि विविधानि च ।
अभिप्रेतानि सर्वाणि भवन्ति कृतकर्मणाम् ॥ २२

नाप्राप्यं तपसा किञ्चित् त्रैलोक्येऽस्मिन् परन्तप ।
उपभोगपरित्यागः फलान्यकृतकर्मणाम् ॥ २३

सुखितो दुःखितो वाऽपि नरो लोभं परित्यजेत् ।
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ॥ २४

असन्तोषोऽसुखायैव लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥ २५

नष्टप्रज्ञो यदा च स्यात् तदा न्यायं न पश्यति ।
तस्मात् सुखक्षये प्राप्ते पुमानुग्रं तपश्चरेत् ॥ २६

यदिष्टं तत् सुखं प्राहुर् द्वेष्यं दुःखमिहोच्यते ।
कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥ २७

नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते ।
प्राकाश्यं चैव गच्छन्ति कृत्वा निष्कल्मषं तपः ॥ २८

अप्रियाण्यवमानांश्च दुःखं बहुविधात्मकम् ।
फलार्थी सत्पथं त्यक्त्वा प्राप्नोति विषयात्मकम् ॥ २९

धर्मे तपसि दाने च विचिकित्साऽस्य जायते ।
स कृत्वा पापकान्येव निरयं प्रतिपद्यते ॥ ३०

सुखे तु वर्तमानो वै दुःखे वाऽपि नरोत्तम ।
सुवृत्ताद्यो न चलते शास्त्रचक्षुस्स मानवः ॥ ३१

इषुप्रपातमात्रं हि स्पर्शयोगे रतिस्स्मृता ।
रसने दर्शने घ्राणे श्रवणे च विशां पते ॥ ३२
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात् पुनः ॥ ३२॥
बुधा ये न प्रशंसन्ति मोक्षं सुखमनुत्तमम् ।
तपःफलार्थास्सर्वेऽस्य भवन्ति ज्यायसो गुणाः ॥ ३३॥
धर्मवृद्ध्या हि सततं कामार्थाभ्यां न हीयते ॥ ३४
अप्रयत्नागतास्सेव्या गृहस्थैर्विषयास्सदा ।
प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ॥ ३५

मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् ।
धर्मक्रियावियुक्तानाम् अशक्यं संवृतात्मनाम् ॥ ३६

क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ ३७

सर्वात्मना तु कुर्वीत गृहस्थः कर्मनिश्चयम् ।
दाक्ष्येण हव्यकव्यार्थं स्वधर्मं विचरन् नृप ॥ ३८

यथा नदीनदास्सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणस्सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
[अस्मिन्नध्याये ३९ श्लोकाः]

---

## ॥ अशीत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति नानाधर्मप्रतिपादकपराशरगीतानुवादः ॥

---

जनकः—

वर्णो विशेषो वर्णानां महर्षे केन जायते ।
एतदिच्छाम्यहं ज्ञातुं तद्ब्रूहि वदतां वर ॥ १
यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः ।
कथं ब्राह्मणतो जातो विशेषग्रहणं गतः ॥ २

पराशरः—

एवमेतन्महाराज येन जातस्स एव सः ।
तपसस्त्वपकर्षेण जातिग्रहणतां गतः ॥ ३
सुक्षेत्राच्च सुबीजाच्च [1]पुण्यो भवति सम्भवः ।

1. ग—पुंसो भ·

अतोऽन्यतरतो हीनाद् अवरो नाम जायते ॥ ४

वक्षाद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे ।
सृजतः प्रजापतेर्लोकान् इति धर्मविदो विदुः ॥ ५

मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रियास्स्मृताः ।
ऊरुजा [1]धनिनो राजन् पादजाः परिचारकाः ॥ ६

चतुर्णामेव वर्णानाम् आगमः पुरुषर्षभ ।
अतोऽन्ये त्वतिरिक्ता ये ते वै सङ्करजास्स्मृताः ॥ ७

क्षत्रजातिरथाम्बष्ठा उग्रा वैदेहकास्तथा ।
श्वपाकाः पुल्कसास्स्तेना निषादास्सूतमागधाः ॥ ८

आयोगाः करणा व्रात्याश् चाण्डालाश्च नराधिप ।
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परात् ॥ ९

जनकः—

ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् ।
बहूनीमानि लोके वै गोत्राणि मुनिसत्तम ॥ १०

यत्र तत्र कथं जातास् स्वयोनिं मुनयो गताः ।
शूद्रयोनौ समुत्पन्ना वियोनौ च तथा परे ॥ ११

पराशरः—

राजन्नैतद्भवेद्ग्राह्यम् अपकृष्टेन जन्मना ।

1. ग—वणिजो

महात्मनां समुत्पत्तिस् तपसा भावितात्मनाम् ॥ १२

उत्पाद्य पुत्रान् मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषाम् ऋषित्वं विदधुः पुनः ॥ १३

पितामहश्च मे पूर्वम् ऋश्यशृङ्गश्च काश्यपः ।
[1]पदस्ताड्यः कृपश्चैव काक्षीवत्कवषादयः ॥ १४

यवक्रीतश्च नृपते द्रोणश्च वदतां वर ।
आयुर्मतङ्गो दत्तश्च द्रुपदो मत्स्य एव च ॥ १५

एते स्वां प्रकृतिं प्राप्ता वैदेह तपसो श्रयात् ।
प्रतिष्ठिता वेदविदो दमे तपसि चैव ह ॥ १६

मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
[2]अङ्गिराः काश्यपश्चैव वसिष्ठो भृगुरेव च ॥ १७

कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
[3]नामधेयानि तपसा तानि च ग्रहणं सताम् ॥ १८

जनकः—

विशेषधर्मान् वर्णानां प्रब्रूहि भगवन् मम ।
ततस्सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥ १९

---

1. क-ख-घ—पट ; ग—वसुस्ता·
2. अ-क-ख-घ—अर्धद्वयं नास्ति
3. ख—नास्तीदमर्धम्

पराशरः—

[1]प्रतिग्रहो याजनं च तथैवाध्यापनं नृप ।
विशेषधर्मो विप्राणां रक्षा क्षत्रस्य शोभना ॥ २०

कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि ।
द्विजानां परिचर्या च शूद्रकर्म नराधिप ॥ २१

विशेषधर्मा नृपते वर्णानां च प्रकीर्तिताः ।
धर्मान् साधारणांस्तात विस्तरेण शृणुष्व मे ॥ २२

आनृशंस्यमहिंसा चाप्रमादस्संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ २३

स्वेषु दारेषु सन्तोषश् शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मस्साधारणो नृप ॥ २४

ब्राह्मणाः क्षत्रिया वैश्यास् त्रयो वर्णा द्विजातयः ।
अत्र तेषामधीकारो धर्मेषु द्विपदां वर ॥ २५

विकर्मणि स्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथा यत्नम् आश्रित्येह स्वकर्मसु ॥ २६

न चापि शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति वा ।

1. ख—अर्धद्वयं नास्ति

श्रुतिप्रवृत्तं न च कर्म चाश्नुते
न चास्य धर्मे प्रतिषेधनं कृतम् ॥ २७

वैदेहकं शूद्रमुदाहरन्ति
द्विजा महाराज श्रुतोपपन्नाः ।
अहं हि पश्यामि नरेन्द्र देवं
विश्वस्य विष्णुं जगतः प्रधानम् ॥ २८

सतां वृत्तमनुष्ठाय निहीना उज्जिहीर्षवः ।
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः ॥ २९

यथा यथा हि सद्वृत्तम् आलम्बन्तीतरे जनाः ।
तथा तथा सुखं प्राप्य प्रेत्य चेह च शेरते ॥ ३०

जनकः—

किं कर्म दूषयत्येनम् अथो जातिर्महामुने ।
सन्देहो मे समुत्पन्नस् तन्मे व्याख्यातुमर्हसि ॥ ३१

पराशरः—

असंशयं महाराज उभयं दोषकारकम् ।
कर्म चापि हि जातिश्च विशेषं तु निशामय ॥ ३२

जात्या च कर्मणा चैव दुष्टं कर्म निषेवते ।
[1]जात्या दुष्टश्च यः पापं न करोति स पूरुषः ॥ ३३
जात्या प्रधानं पुरुषं कुर्वाणं कर्म [2]धिक्कृतम् ।

---

1. ख—नास्तीदमर्धम् 2. ग—दुष्कृतम्

कर्म तद्दूषयत्येनं तस्मात् कर्मैव शोभनम् ॥ ३४

जनकः—

कानि कर्माणि धर्म्याणि लोकेऽस्मिन् द्विजसत्तम ।
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा ॥ ३५

पराशरः—

शृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि ।
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ॥ ३६

संन्यस्याग्नीनुपासी[1]नाः पश्यन्ति विगतज्वराः ।
नैश्श्रेयसं कर्मपथं समारुह्य यथाक्रमम् ॥ ३७

प्रश्रिता विनयोपेता दमनित्यास्सुसंशिताः ।
प्रयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ॥ ३८

सर्वे वर्णा धर्मकार्याणि सम्यक्
कृत्वा राजन् सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वा धर्मं दारुणं जीवलोके
यान्ति स्वर्गं नात्र कार्यो विचारः ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

1. क-घ—नमस्या ; ग—नास्तपस्यन्ति गंत ; ख—नमस्याम्

## ।। एकाशीत्यधिकद्विशततमोऽध्यायः ।।

भीष्मेण युधिष्ठिरं प्रति धर्मादिसाधनतया मानुष्यप्रशंसापूर्वकं नानाधर्मप्रतिपादकपराशरगीतानुवादः ॥

पराशरः—

पिता सखायो गुरवस्स्त्रियश्च
न निर्गुणा नाम भवन्ति लोके ।
अनन्यभक्ताः प्रियवादिनश्च
हिताश्च वश्याश्च तथैव राजन् ॥ १

पिता परं दैवतं मानवानां
मातुर्विशिष्टं पितरं वदन्ति ।
ज्ञानस्य लाभं परमं वदन्ति
जितेन्द्रियार्थाः परमाप्नुवन्ति ॥ २

[1]रणाजिरे यस्तु शराग्निसंस्तरे
नृपात्मजो घातमवाप्य दह्यते ।
प्रयाति लोकानमरैस्सुदुर्लभान्
निषेवते स्वर्ग[2]फलं यथासुखम् ॥ ३

1. ख—जितेन्द्रियार्थाः परमाप्नुवन्ति इत्येकः पादोऽधिकः पाठः

2 ग—फलं सुपुष्कलम्

श्रान्तं भीतं [1]भ्रष्टशस्त्रं रुदन्तं
पराङ्मुखं परिबर्हैश्च हीनम् ।
अनुद्यन्तं रोगिणं याचमानं
न वै हिंस्याद्बालवृद्धौ च राजन् ॥ ४

परिबर्हैस्सुसंयुक्तम् उद्यतं तुल्यतां गतम् ।
अतिक्रमेत्तं नृपतिस् सङ्ग्रामे क्षत्रियात्मजम् ॥ ५

तुल्यादिह वधश्श्रेयान् विशिष्टाच्चेति निश्चयः ।
[2]विहीनात् कातराच्चैव नृपाणां गर्हितो वधः ॥ ६

पापात् पापसमाचाराद् विहीनाच्च नराधिप ।
पाप एव वधः प्रोक्तो नरकायेति निश्चयः ॥ ७

न कश्चि[3]त्त्राति वै राजन् दिष्टान्तवशमागतम् ।
सावशेषायुषं वाऽपि कश्चिन्नैवापकर्षति ॥ ८

स्निग्धैश्च क्रियमाणानि [4]कर्माणि विनिवर्तयेत् ।
हिंसात्मकानि सर्वाणि नायुरिच्छेत् परायुषा ॥ ९

गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम् ।

---

1. ग—न्यस्तशस्त्रं
2. ग—विहीनाद्गर्हिताच्चैव नृ ; क-घ—निहीनात् (विहीनात्)
3. क-ख-घ—त्रायते
4. ख-घ-अयं पादोऽनन्तरश्च न स्तः

निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥ १०
आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति ।
द्वितीयं कारणं तत्र किञ्चिदन्यन्न विद्यते ॥ ११
[1]यथा ह्यगारं भवति कारणैरुपपादितम् ।
तथा शरीरं भवति देहाद्येनोपपादितम् ॥ १२
[2]अध्वानुगतिकश्चायं प्राप्तश्चायं गृहाद्गृहम् ।
द्वितीयं कारणं तत्र नान्यद्विद्येत किञ्चन ॥ १३
तद्देहं देहिनां युक्तं पञ्चभूतेषु वर्तते ।
सिरास्नाय्वस्थिसङ्घातं बीभत्सामेध्यसङ्कुलम् ॥ १४
भूतानामिन्द्रियाणां च गुणानां च समागमम् ।
[3]त्वग्गतं देहमित्याहुर् विद्वांसोऽध्यात्मचिन्तकाः ॥ १५
गुणैरपि परिक्षीणं शरीरं मन्दतां गतम् ।
शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम् ॥ १६
भूतैः प्रकृतिमापन्नैस् ततो भूमौ निमज्जति ।
भावितं कर्मयोगेन जायते तत्र तत्र ह ॥ १७
इदं शरीरं वैदेह म्रियते तत्र तत्र ह ।
तत्प्रपाते परो दृष्टो विसर्गः कर्मणस्तथा ॥ १८

---

1. अ-क-ख-घ—नास्तीदमर्धम्
2. ख-ग-घ—अध्वानं गतकश्चायं
3. ख—अटन्तं; घ—अटतं; ग—त्वगन्तं

न जायते तु नृपते कश्चित् कालमयं पुनः ।
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् ॥ १९
स पुनर्जायते राजन् प्राप्येहायतनं पुनः ।
मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः ॥ २०
द्विविधानां च भूतानां जङ्गमाः परमा नृप ।
जङ्गमानामपि तथा द्विपदाः परमा गताः ॥ २१
द्विपदानामपि तथा द्विजा वै परमा मताः ।
द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः ॥ २२
प्राज्ञानामात्मसम्बुद्धास् सम्बुद्धानाममानिनः ॥ २२॥
जातमन्वेति मरणं नृणामिति विनिश्चयः ।
अन्तवन्ति हि कर्माणि सेवन्ते गुणतः प्रजाः ॥ २३॥
आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत् ।
नक्षत्रे च मुहूर्ते च पुण्ये राजन् स पुण्यकृत् ॥ २४॥
अयोजयित्वा क्लेशेन जनं प्राप्य च दुष्कृतम् ।
मृत्युना प्राकृतेनेह कर्म कृत्वाऽऽत्मशक्तितः ॥ २५॥
विषमुद्बन्धनं दाहो दस्युहस्तात्तथा वधः ।
दंष्ट्रिभ्यश्च [1]नखिभ्यश्च प्राकृतो वध उच्यते ॥ २६॥
न चैभिः पुण्यकर्माणो युज्यन्ते चाभिसन्धिजैः ।

---

1. ख-ग—पशुभ्यश्च

एवंविधैश्च बहुभिर् अपरैः प्राकृतैरपि ॥ २७॥

ऊर्ध्वं भित्त्वा प्रतिष्ठन्ते प्राणाः पुण्यकृतां नृप ।
मध्यतो मध्यपुण्यानाम् अधो दुष्कृतकर्मणाम् ॥ २८॥

एकश्शत्रुर्न द्वितीयोऽस्ति शत्रुर्
अज्ञानतुल्यः पुरुषस्य राजन् ।
येनावृतः कुरुते सम्प्रयुक्तो
घोराणि कर्माणि सुदारुणानि ॥ २९॥

प्रबोधनार्थं श्रुतिधर्मयुक्तान्
वृद्धानुपास्येह भजेत बुद्धिम् ।
प्रयत्नसाध्यो हि स राजपुत्र
प्रज्ञाशरेणोन्मथितः परैति ॥ ३०॥

अधीत्य वेदांस्तपसा ब्रह्मचारी
यज्ञाञ् शक्त्या सन्निसृज्येह पञ्च ।
वनं गच्छेत् पुरुषो धर्मकामश्
श्रेयः कृत्वा स्थापयित्वा स्ववंशम् ॥ ३१॥

उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः ।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम् ॥ ३२॥

इयं हि योनिः प्रथमा यां प्राप्य जगतीपते ।
आत्मा वै शक्यते त्रातुं कर्मभिश्शुभलक्षणैः ॥ ३३॥

कथं न विप्रणश्येम योनितोऽस्या इति प्रभो ।
कुर्वन्ति धर्मं मनुजाश् श्रुतिप्रामाण्यदर्शनात् ॥ ३४॥

यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः ।
धर्मावमन्ता कामात्मा भवेत् स खलु वञ्चितः ॥ ३५॥

यस्तु प्रीतिपुरोगेण चक्षुषा तात पश्यति ।
दीपोपमानि भूतानि यावदर्चिर्न [1]नश्यति ॥ ३६॥

सान्त्वेनानुप्रदानेन प्रियवादेन चाप्युत ।
समदुःखसुखो भूत्वा स परत्र महीयते ॥ ३७॥

दानं त्यागश्शोभनो मूर्तिमद्भ्यो
भूयः प्लाव्यं तपसा वै शरीरम् ।
सरस्वतीनैमिशपुष्करेषु
ये चाप्यन्ये पुण्यदेशाः पृथिव्याम् ॥ ३८॥

गृहेषु येषामसवः पतन्ति
तेषामथो निर्हरणं प्रशस्तम् ।
यानेन वै प्रापणं च श्मशाने
शौचेन्धनं विधिना चैव दाहः ॥ ३९॥

इष्टिः पुष्टिर्यजनं याजनं च
दानं पुण्यानां कर्मणां च प्रयोगः ।

---

1. अ-घ—पश्यति

शक्त्या पित्र्यं यच्च किञ्चित् प्रशस्तं
सर्वाण्यात्मार्थे मानवो यः करोति ॥ ४०॥

धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप ।
श्रेयसोऽर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ॥ ४१॥

भीष्मः—

एतद्वै सर्वमाख्यातं मुनिना सुमहात्मना ।
विदेहराजाय पुरा श्रेयसोऽर्थे नराधिप ॥ ४२॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

## ॥ द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति श्रेयस्साधनकलापप्रतिपादकपराशरगीतानुवादसमापनम् ॥

---

भीष्मः—

पुनरेव तु पप्रच्छ जनको मिथिलाधिपः ।
पराशरं महात्मानं धर्मे परमनिश्चयम् ॥ १

जनकः—

किं श्रेयः का गतिर्ब्रह्मन् किं कृतं न विनश्यति ।

क गतो न निवर्तेत तन्मे ब्रूहि द्विजोत्तम ॥ २

पराशरः—

असङ्गश्श्रेयसो मूलं [1]ज्ञानं वचै परा गतिः ।
चीर्णं तपो न प्रणश्येत् संसिद्धो न निवर्तते ॥ ३

[2]छित्त्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते ।
दत्त्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुते ॥ ४

यो ददाति सहस्राणि गवामश्वशतानि च ।
अभयं यश्च भूतेभ्यस् स दानमभिवर्तते ॥ ५

वसन् विषयमध्येऽपि न वसत्येव बुद्धिमान् ।
संवसत्येव दुर्बुद्धिर् असत्सु विषयेष्वपि ॥ ६

नाधर्मश्श्लिष्यते प्राज्ञम् आपः पुष्करपर्णवत् ।
अप्राज्ञमधिकं पापं श्लिष्यते जतुकाष्ठवत् ॥ ७

नाधर्मः कारणापेक्षी कर्तारमभिमुञ्चति ।
कर्ता खलु यथाकालं तत् सर्वमभिपद्यते ॥ ८

न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः ॥ ८॥

बुद्धिकर्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते ।
शुभाशुभेषु सक्तानां प्राप्नोति सुमहद्भयम् ॥ ९॥

---

1. अ-क-ख-घ—ज्ञानं ज्ञानगतिः परा

2. ग—छित्त्वा सङ्गात्मकं पाशं

वीतरागो जितक्रोधस् सम्यग्भवति यस्सदा ।
विषये वर्तमानोऽपि न स पापेन युज्यते ॥ १०॥

मर्यादायां धर्मसेतुर् निबद्धो नैव सीदति ।
पुष्टस्रोत इवासक्तस् [1]स्फीतिर्भवति सञ्चयः ॥ ११॥

यथा भानुगतं तेजो मणिश्शुद्धस्समाधिना ।
आदत्ते राजशार्दूल तथा योगः प्रवर्तते ॥ १२॥

[2]यथाऽनिलानामिह पुण्यसंश्रयात्
पृथक् पृथग्याति गुणोऽपि साम्यताम् ।
तथा नराणां भुवि भावितात्मनां
यथाश्रयं सत्त्वगुणः प्रवर्तते ॥ १३॥

जहाति [3]राजन् विहितेन सम्पदस्
सदश्वयानं विविधाश्च याः क्रियाः ।
त्रिविष्टपे जातमतिर्यदा नरस्
तदाऽस्य बुद्धिर्विषयेषु [4]बद्ध्यते ॥ १४॥

प्रसक्तबुद्धिर्विषयेषु यो नरो
न विन्दते ह्यात्महितं कदाचन ।

---

1. ग—स्थिरीभवति
2. घ—अर्धद्वयं नास्ति
3. ग—दारान् विविधाश्च
4. ग—भिद्यते ; अ-क—बुध्यते

स सर्वभावानुगतेन चेतसा
नृपामिषेणेव झषोऽपकृष्यते ॥ १५॥

सङ्घातवन्मर्त्यलोकः परस्परमपाश्रितः ।
कदलीगर्भनिस्सारो नौरिवाप्सु निमज्जति ॥ १६॥

न धर्मकालः पुरुषस्य निश्चितो
न चापि मृत्युः पुरुषं प्रतीक्षते ।
सदा हि धर्मस्य क्रियैव शोभना
तदा नरो मृत्युमुखेऽतिवर्तते ॥ १७॥

यथाऽन्धस्स्वगृहे युक्त अभ्यासादेव गच्छति ।
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥ १८॥

मरणं जन्मनि प्रोक्तं जन्म वै मरणं श्रितम् ।
अविद्वान् मोक्षधर्मेषु अन्धो भ्रमति चक्रवत् ॥ १९॥

यथा मृणालानुगतम् आशु मुञ्चति कर्दमम् ।
तथाऽऽत्मा पुरुषस्येह मनसा परिमुच्यते ॥ २०॥

मनः प्रणयते त्मानं स एनमभियुञ्जति ।
[1]युक्तो यदा स भवति तदा तं पश्यते परम् ॥ २१॥

परार्थे वर्तमानस्तु स्वं कार्यं योऽतिवर्तते ।
इन्द्रियार्थेषु सक्तस्स स्वकार्यात् परिहीयते ॥ २२॥

---

1. ख-ग—नास्तीदमर्धम्

अधस्तिर्यग्गतिं चैव स्वर्गे चैव परां गतिम् ।
प्राप्नोति सुकृतैरात्मा प्राज्ञस्येहेतरस्य च ॥ २३॥

मृन्मये भाजने पक्वे यथा वै नश्यति द्रवः ।
तथा शरीरं तपसा तप्तं विषयमश्नुते ॥ २४॥

विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् ।
यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति ॥ २५॥

नीहारेणेव संवीतश् शिश्नोदरपरायणः ।
जात्यन्ध इव पन्थानम् आवृतात्मा न बुध्यते ॥ २६॥

वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् ।
तथा मर्त्यार्णवाज्जन्तोः कर्मविज्ञानतो गतिः ॥ २७॥

अहोरात्रमये लोके जरारूपेण सञ्चरन् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥ २८॥

स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते ।
नाकृत्वा लभते कश्चित् किञ्चिदत्र प्रियाप्रियम् ॥ २९॥

शयानं यान्तमासीनं प्रवृत्तं विषयेषु च ।
शुभाशुभानि कर्माणि प्रपद्यन्ते नरं सदा ॥ ३०॥

न ह्यन्यत्तीरमासाद्य पुनस्तर्तुं व्यवस्यति ।
दुर्बलो दृश्यते ह्यस्य विनिपातो महार्णवे ॥ ३१॥

यथा भारावसक्ता हि नौर्महाम्भसि तन्तुना ।
तथा मनोभियोगाद्वै शरीरं प्रविकर्षति ॥ ३२॥

यथा समुद्रमभितस् संस्यूतास्सरितः पराः ।
तथाऽन्या प्रकृतिर्योगाद् अभिसंसीयते सदा ॥ ३३॥

स्नेहपाशैर्बहुविधैर् आसक्तमनसो नराः ।
प्रकृतिस्थाश्च सीदन्ति जले सैकतवेश्मवत् ॥ ३४॥

शरीरगृहसंस्थस्य शौचतीर्थस्य देहिनः ।
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥ ३५॥

विस्तराः क्लेशसंयुक्तास् सङ्क्षेपास्तु सुखावहाः ।
परार्था विस्तरास्सर्वे त्यागमात्महितं विदुः ॥ ३६॥

सङ्कल्पजो मित्रवर्गो ज्ञातयः कारणात्मकाः ।
भार्या पुत्रश्च दासश्च स्वमर्थमनुयुञ्जते ॥ ३७॥

न माता न पिता किञ्चित् कस्यचित् प्रतिपद्यते ।
दानपथ्याशनो जन्तुस् स्वकर्मफलमश्नुते ॥ ३८॥

माता पुत्रः पिता भ्राता भार्या मित्रजनस्तथा ।
अष्टापदपदस्थाने त्वक्षमुद्रेव लक्ष्यते ॥ ३९॥

सर्वाणि कर्माणि पुराकृतानि
शुभाशुभान्यात्मनो यान्ति जन्तोः ।

उपस्थितं कर्मफलं विदित्वा
बुद्धिं तथा चोदयतेऽन्तरात्मा ॥ ४०॥

व्यवसायं समाश्रित्य सहायान् योऽधिगच्छति ।
न तस्य कश्चिदारम्भः कदाचिदवसीदति ॥ ४१॥

अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम् ।
न श्रीस्सन्त्यजते नित्यम् आदित्यमिव रश्मयः ॥ ४२॥

आस्तिक्यव्यवसायाभ्याम् उपायान्वितया धिया ।
य आरभत्यनिन्द्यात्मा न सोऽर्थैः परिसीदति ॥ ४३॥

सर्वस्स्वानि शुभाशुभानि नियतं कर्माणि जन्तुस्स्वयं
गर्भात् सम्प्रतिपद्यते तदुभयं यत्नेन पूर्वं कृतम् ।
मृत्युश्चापरिहारवान् समगतिः कालेन विच्छेदिता
[1]दारैश्चूर्णसमानसारविहितं कर्मान्तिकं प्रापयेत् ॥ ४४॥

स्वरूपतामात्मकृतं च विस्तरं
कुलान्वयं द्रव्यसमृद्धिसञ्चयम् ।
नरो हि सर्वो लभते यथाकृतं
शुभाशुभेनात्मकृतेन कर्मणा ॥ ४५॥

---

1. ख—दाराश्चूर्ण ग—दारोच्छूर्णमिवाश्मसार

भीष्मः—

इत्युक्तो जनको राजन् याथातथ्यं मनीषिणा ।
श्रुत्वा [1]धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]
॥ पराशरगीता समाप्ता ॥

---

## ॥ त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति मोक्षसाधनप्रतिपादकहंससाध्यसंवादानुवादः ॥

---

युधिष्ठिरः—

सत्यं दमं क्षमां प्रज्ञां प्रशंसन्ति पितामह ।
विद्वांसो मनुजा लोके कथमेतत् [2]परन्तप ॥ १

भीष्मः—

अत्र ते वर्तयिष्येऽहम् इतिहासं पुरातनम् ।
साध्यानामिह संवादं हंसस्य च युधिष्ठिर ॥ २

हंसो भूत्वाऽथ सौवर्णस् त्वजो [3]नित्यं प्रजापतिः ।

---

1. क-ख-घ—धर्मभृतां 2. ग-घ—पितामह
3. क-ख-घ—नित्यः

स वै पर्येति लोकांस्त्रीन् अथ साध्यानुपागमत् ॥ ३

साध्याः—

शकुने वयं स्म देवा वै साध्यास्त्वामनुयुञ्ज्महे ।
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ॥ ४

श्रुतोऽसि नः पण्डितो धीरवादी
साधुश्शब्दः पतते ते पतत्रिन् ।
किं मन्यसे श्रेष्ठतमं द्विज त्वं
कस्मिन् मनस्ते रमते महात्मन ॥ ५

तन्नः कार्यं पक्षिवर प्रशाधि
यत् कार्याणां मन्यसे श्रेष्ठमेकम् ।
यत् कृत्वा वै पुरुषस्सर्वबन्धैर्
विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ ६

हंसः—

इदं कार्यममृताशाश्शृणुध्वं
तपो दमस्सत्यमात्माभिगुप्तिः ।
ग्रन्थीन् विमुच्य हृदयस्य सर्वान्
प्रियाप्रिये स्वं वशमानयीत ॥ ७

नारुन्तुदस्स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।

यया॒ऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ ८

वाक्सायका वदनान्निष्पतन्ति
यैराहतश्शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान् पण्डितो नावसृजेत् परेषु ॥ ९

परश्चेदेनमतिवादबाणैर्
भृशं विध्येच्छम एवेह कार्यः ।
संरोष्यमाणः प्रतिमृष्यते यस्
स आदत्ते सुकृतं वै परस्य ॥ १०

[1]क्षेपावमानादभिषङ्गव्यलीकं
निगृह्णाति ज्वलितं यश्च मन्युम् ।
अदुष्टचेता मुदितोऽनसूयुस्
स आदत्ते सुकृतं वै परेषाम् ॥ ११

आक्रुश्यमानो न वदामि किञ्चित्
क्षमाम्यहं ताड्यमानश्च नित्यम् ।
श्रेष्ठं ह्येतद्यत् क्षमामाहुरार्यास्
सत्यं तथैवार्जवमानृशंस्यम् ॥ १२

1. ख—अर्धद्वयं नास्ति

वेदस्योपनिषत् सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्याग एतत् सत्यानुशासनम् ॥ १३

वाचो वेगं मनसः क्रोधवेगं
विवित्सावेगमुदरोपस्थवेगम् ।
एतान् वेगान् यो विषहेदुदीर्णांस्
तं मन्येऽहं ब्राह्मणं वै मुनिं च ॥ १४

अक्रोधनः क्रुध्यतां वै विशिष्टस्
तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषा[1]न्मानुषाश्च प्रधानास्
तथाऽ[2]ज्ञानां ज्ञानविद्वै प्रधानः ॥ १५

आक्रुश्यमानो नाक्रोशेन्मन्युरेवं तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १६

यो नात्युक्तः प्राह रूक्षं प्रियं वा
यो वा हतो न प्रतिहन्ति वैरात् ।
पापं च यो नेच्छति तस्य हन्तुस्
तस्मै ह देवास्स्पृहयन्ते सदैव ॥ १७

पापीयसः क्षमेतैव श्रेयसस्सदृशस्य च ।
विमानितो हतोऽक्रुष्ट एवं सिद्धिं गमिष्यति ॥ १८

---

1. ग—न्मानुषो वै विशिष्टः
2. ग—ऽज्ञानाज्ज्ञानवान् वै विशिष्टः

सदाऽहमार्यान् निभृतो ह्युपासे
न मे विवित्सा[1] संहृतो नोत बाधः ।
न चाप्यन्यं लिप्समानः परैमि
न चापि किञ्चिद्विषमेण यामि ॥ १९

नाहं शप्तः प्रतिशपामि कञ्चिद्
दमं द्वारं ह्यमृतस्येह वेद्मि ।
गुह्यं ब्रह्म तदिदं वो ब्रवीमि
न मानुषाच्छ्रेष्ठतरं हि किञ्चित् ॥ २०

विमुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन् धीरो धैर्येण सिध्यति ॥ २१

यस्सर्वेषां भवति ह्यर्चनीय
उत्सेचने स्तम्ब इवाभिजातः ।
यस्मै वाचं [2]सुप्रसन्नां वदन्ति
स वै देवान् गच्छति संयतात्मा ॥ २२

न तथा वक्तुमिच्छन्ति कल्याणान् पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥ २३

यस्य वाङ्मनसी गुप्ते सम्यक् प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥ २४

---

1. ग—सङ्क्तो नोत बाधः
2. ग—सुप्रशस्तां

आक्रोशनावमानाभ्याम् अबुधाद्वर्धते बुधः ।
तस्मान्न वर्धयेन्[1]मन्युं न चात्मानं विहिंसयेत् ॥ २५

अमृतस्येव सन्तृप्येद् अवमानस्य वै द्विजः ।
सुखं ह्यवमतश्शेते योऽवमन्ता स नश्यति ॥ २६

यत् क्रोधनो यजते यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघश्श्रमो भवति हि क्रोधनस्य ॥ २७

चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक् चतुर्थी स धर्मवित् ॥ २८

सत्यं दमं ह्यार्जवमानृशंस्यं
धृतिं तितिक्षामतिसेवमानः ।
स्वाध्यायनित्योऽस्पृहयन् परेषाम्
एकान्तशील्यूर्ध्वगतिर्भवेत ॥ २९

सर्वान् वेदाननुचरन् वत्सवच्चतुरस्तनान् ।
न पावनतमं किञ्चित् सत्यादध्यगमं क्वचित् ॥ ३०

आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रहितश्चरन् ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ३१

1. ख-ग-घ—दम्यं

याद्दशैस्संविवदते याद्दशांश्चोपसेवते ।
याद्दगिच्छेच्च भवितुं ताद्दग्भवति पूरुषः ॥ ३२

यदि सन्तं सेवते यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रागवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ३३

सदा देवास्साधुभिस्संवदन्ते
न मानुषं विषयं यान्ति द्रष्टुम् ।
नेन्दुस्समस्स्यादसमो हि वायुर्
उच्चावचं विपयं यस्स वेद ॥ ३४

अदुष्टं वर्तते यस्तु हृदयान्तरपूरुषे ।
तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ ३५

शिश्नोदरे येऽभिनिरतास्सदैव
स्तेना नरा वाक्परुषाश्च नित्यम् ।
अपेतधर्मानिति तान् विदित्वा
दूराद्देवास्सम्परिवर्जयन्ति ॥ ३६

न वै देवा हीनसत्त्वेन तोष्यास्
सर्वाशिना दुष्कृतकर्मणा वा ।

सत्यव्रता ये तु नराः कृतज्ञा
धर्मे रतास्तैस्सह सम्भजन्ते ॥ ३७

अव्याहृतं व्याहृताच्छ्रेय आहुस्
सत्यं वदेद्व्या[1]हृतं तद्द्वितीयम् ।
धर्म्यं वदेद्व्याहृतं तत्तृतीयं
प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ३८

साध्याः—

केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ ३९

हंसः—

अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात् त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति ॥ ४०

साध्याः—

कस्स्विदेको रमते ब्राह्मणानां
कस्स्विदेको बहुभिर्जोषमास्ते ।
कस्स्विदेको बलवान् दुर्बलोऽपि
कस्स्विदेषां कलहं नान्ववैति ॥ ४१

---

1. क-ख-घ—हृतोऽर्धमेकं नास्ति

हंसः—

[1]प्राज्ञ एको रमते ब्राह्मणानां
प्राज्ञ एको बहुभिर्जोषमास्ते ।
प्राज्ञ एको बलवान् दुर्बलोऽपि
प्राज्ञ एषां कलहं नान्ववैति ॥ ४२

साध्याः—

किं ब्राह्मणानां देवत्वं किञ्च साधुत्वमुच्यते ।
असाधुत्वं च किं तेषां किमेषां मानुषं मतम् ॥ ४३

हंसः—

स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुषमुच्यते ॥ ४४

भीष्मः—

[2]इत्युक्त्वा परमो देवो भगवान् नित्य अव्ययः ।
साध्यैर्देवगणैस्सार्धं दिवमेवारुरोह सः ॥ ४५

एतद्यशस्यमायुष्यं पुण्यं स्वर्गाय च ध्रुवम् ।
दर्शितं देवदेवेन परमेणाव्ययेन च ॥ ४६

---

1. ख-घ—अर्धद्वयं नास्ति

2. अ-क-ख-घ—अर्धचतुष्टयं नास्ति

संवाद इत्ययं श्रेष्ठस् साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिस् सद्भावस्सत्यमुच्यते ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]

---

## ॥ चतुरशीत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति योगनिरूपणम् ॥

---

युधिष्ठिरः—

साङ्ख्ये योगे च मे तात विशेषं वक्तुमर्हसि ।
तव सर्वज्ञ सर्वं हि विदितं कुरुसत्तम ॥ १

भीष्मः—

साङ्ख्यास्साङ्ख्यं प्रशंसन्ति योगं योगा द्विजातयः ।
वदन्ति कारणैश्श्रैष्ठ्यं स्वपक्षोद्भावनाय वै ॥ २

अनीश्वरः कथं मुच्येद् इत्येवं शत्रुकर्शन ।
वदन्ति कारणैश्श्रैष्ठ्यं योगास्सम्यङ्मनीषिणः ॥ ३
वदन्ति कारणं चेदं साङ्ख्यास्सम्यग्द्विजातयः ॥ ३॥

विज्ञायेह गतीस्सर्वा विरक्तो विषयेषु यः ।

ऊर्ध्वं स देहमुत्सृज्य विमुच्येदिति नान्यथा ॥ ४॥
एतदाहुर्महाप्राज्ञास् साङ्ख्या वै मोक्षदर्शिनः ॥ ५

स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् ।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैश्शिष्टसम्मतैः ॥ ६

प्रत्यक्षहेतवो योगास् साङ्ख्याश्शास्त्रविनिश्चयाः ।
उभे चैते मते [1]युक्ते मम तात युधिष्ठिर ॥ ७

उभे चैते मते ज्ञाने नृपते शिष्टसम्मते ।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥ ८

तुल्यं शौचं तयोरेकं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः[2] ॥ ९

युधिष्ठिरः—

यदि तुल्यं व्रतं शौचं दया चात्र पितामह ।
तुल्यं न दर्शनं कस्मात् तन्मे ब्रूहि [3]पितामह ॥ १०

भीष्मः—

रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्त्वाऽऽदितो दोषान् पञ्चैतान् प्राप्नुवन्ति तत् ॥ ११

यथा चानिमिषास्स्थूला जालं छित्त्वा पुनर्जलम् ।

---

1. ग—तत्त्वे
2. ग—तयोस्तु दर्शनं सम्यक् सूक्ष्माभावे प्रसज्यते। [अधिकः पाठः]
3. ग—महामते

प्राप्नुवन्ति तथा योगास् तत्पदं वीतकल्मषाः ॥ १२

तथैव वागुरां छित्त्वा [1]बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्तास्सर्वबन्धनैः ॥ १३

लोभजानि तथा राजन् बन्धनानि बलान्विताः ।
छित्त्वा योगात् परं मार्गं गच्छन्ति विमलं शिवम् ॥ १४

अबलाश्च मृगा राजन् वागुरासु तथा परे ।
विनश्यन्ति न सन्देहस् तद्वद्योगबलादृते ॥ १५

बलहीनाश्च कौन्तेय यथा जालं गता झषाः ।
अन्तं गच्छन्ति राजेन्द्र योगास्तद्वत् सुदुर्बलाः ॥ १६

यथा च शकुनास्सूक्ष्मं प्राप्य जालमरिन्दम ।
तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः ॥ १७

कर्मजैर्बन्धनैर्बद्धास् तद्वद्योगाः परन्तप ।
अबला वै विनश्यन्ति विमुच्यन्ते बलान्विताः ॥ १८

अल्पकश्च यथा राजन् वह्निश्शाम्यति दुर्बलः ।
आक्रान्त इन्धनैस्स्थूलैस् तद्वद्योगबलं प्रभो ॥ १९

स एव च यदा राजन् वह्निर्जातबलः पुनः ।
समीरणयुतः कृत्स्नां दहेत् क्षिप्रं महीमपि ॥ २०

तद्वज्जातबलो योगी दीप्ततेजा महाबलः ।

---

1. ख—पलायन्ते

अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥ २१

दुर्बलश्च यथा राजन् स्रोतसा ह्रियते नरः ।
बलहीनस्तथा योगी विषयैर्ह्रियतेऽवशः ॥ २२

तदेव च यथा स्रोतो विष्टम्भयति वारणः ।
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान् बहून् ॥ २३

विशन्ति चावशाः पार्थ योगाद्योगबलान्विताः ।
प्रजापतीनृषीन् देवान् महाभूतानि चेश्वराः ॥ २४

न यमो नान्तकः [1]क्रुद्धो न मृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्यामिततेजसः ॥ २५

आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगी कुर्याद्बलं प्राप्य तैश्च सर्वैश्चरेन्महीम् ॥ २६

प्राप्नुयाद्विषयांस्तैश्च पुनश्चोग्रं तपश्चरेत् ।
सङ्क्षिपेच्च पुनः पार्थ सूर्यस्तेजोगुणानिव ॥ २७

बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।
विमोक्षे प्रभविष्णुत्वम् उपपन्नमसंशयम् ॥ २८

बलानि योगे प्रोक्तानि मयैतानि विशां पते ।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥ २९

---

1. ग—क्रूरो

आत्मनश्च समाधाने धारणां प्रति चाभि भो ।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ ३०

अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तस्सम्यक् तथा योगी मोक्षं प्राप्नोत्यसंशयम् ॥ ३१

स्नेहपूर्णे यथा पात्रे दीपमादाय निश्चलम् ।
पुरुषो यत्त आरोहेत् सोपानं युक्तमानसः ॥ ३२

युक्तस्तथाऽयमात्मानं [1]योगः पार्थिव निश्चलम् ।
करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ ३३

यथा च नावं कौन्तेय कर्णधारस्समाहितः ।
महार्णवगतां शीघ्रं नयेत् पार्थिव पत्तनम् ॥ ३४

तद्वदात्मसमाधानं युक्त्वा योगेन योगवित् ।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ ३५

सारथिश्च यथा युक्त्वा सदश्वान् सुसमाहितः ।
[2]देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥ ३६

तथैव नृपते योगी धारणासु समाहितः ।
प्राप्नोत्याशु परं स्थानं लक्ष्यं मुक्त इवाशुगः ॥ ३७

आवेश्यात्मनि चात्मानं योगी तिष्ठति योऽचलः ।

1. ग—योगी 2. ख—अर्धद्वयं नास्ति

जलं हन्तेव मीनानां पदमाप्नोति सोऽजरम् ॥ ३८

नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः ।
दर्शने [1]श्रवणे चैव घ्राणे चामितविक्रम ॥ ३९

स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः ।
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशां पते ॥ ४०

स शीघ्रममलप्रख्यं कर्म कृत्वा शुभाशुभम् ।
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ ४१

युधिष्ठिरः—

आहारान् कीदृशान् कृत्वा कानि जित्वा च भारत ।
योगी बलमवाप्नोति तद्भवान् वक्तुमर्हति ॥ ४२

भीष्मः—

कणानां भक्षणे युक्तः पिण्याकस्य च [2]भारत ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥ ४३

भुञ्जानो यावकं रूक्षं दीर्घकालमरिन्दम ।
एकारामो विशुद्धात्मा योगी बलमवाप्नुयात् ॥ ४४

पक्षान् मासानृतूंश्चैव सञ्चरंश्च [3]शुभांस्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥ ४५

---

1. क-ख-ग-घ—स्पर्शने 2. ग—भक्षणे
3. ग—गुहांस्तथा

अखण्डमपि वा मासं सततं मनुजेश्वर ।
उपोष्य सम्यक् शुद्धात्मा योगी बलमवाप्नुयात् ॥ ४६

कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं निद्रां तथा श्वासं पौरुषान् विषयांस्तथा ॥ ४७

अरतिं दुर्जयां चैव घोरां तृष्णां च भारत ।
स्पर्शान् सर्वांस्तथा तन्द्रीं दुर्जयां नृपसत्तम ॥ ४८

दीपयन्ति महात्मानस् सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्राज्ञा ध्यानाध्ययनसम्पदा ॥ ४९

दुर्गस्त्वेष मतः पन्था ब्राह्मणानां विपश्चिताम् ।
न कश्चिद्व्रजति ह्यस्मिन् क्षेमेण भरतर्षभ ॥ ५०

यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥ ५१

[1]अभक्तमटवीप्रायं दावदग्धमहीरुहम् ।
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ॥ ५२

योगमार्गं तथाऽऽसाद्य यः कश्चिद्व्रजते द्विजः ।
क्षेमेणोपरमेन्मार्गो बहुदोषो हि स स्मृतः ॥ ५३

सुस्थेयं क्षुरधारासु निशितासु महीपते ।
धारणासु तु योगस्य दुस्स्थेयमकृतात्मभिः ॥ ५४

1. अ—अभक्ष

विपन्ना धारणास्तात नयन्ति नशुभां गतिम् ।
नेतृहीना यथा नावः पुरुषानर्णवे नृप ॥ ५५

यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्म दुःखं च सुखं च स विमुञ्चति ॥ ५६

नानाशास्त्रेषु निष्पन्नं लोकेष्वेवमुदाहृतम् ।
परं योगं तु यत् कृत्स्नं निश्चितं तद्द्विजातिषु ॥ ५७

परं हि तद्ब्रह्ममयं महात्मा
ब्रह्माणमीशं वरदं च विष्णुम् ।
भवं च धर्मं च षडाननं च
षड्ब्रह्मपुत्रांश्च महानुभावान् ॥ ५८

तमश्च कष्टं सुमहद्रजश्च
सत्त्वं च शुद्धं प्रकृतिं परां च ।
सिद्धिं च देवीं वरुणस्य पत्नीं
तेजश्च कृत्स्नं सुमहच्च [1]धैर्यम् ॥ ५९

ताराधिपं वै विमलं सतारं
विश्वांश्च देवा[2]नुरगान् पितॄंश्च ।
शैलांश्च कृत्स्नानुदधींश्च घोरान्
नदीश्च सर्वास्सवनान् घनांश्च ॥ ६०

1. ग—सूर्यम् 2. क-ख-घ—नसुरान्

नागान् नगान् यक्षगणान् दिशश्च
गन्धर्वसङ्घान् पुरुषान् स्त्रियश्च ।
परात् परं प्राप्य महान् महात्मा
विशेत्तु योगी नचिराद्विमुक्तः ॥ ६१

कथा च सेयं नृपते प्रसक्ता
देवे महावीर्यतमे शुभेयं ।
योगान् सर्वानभिभूयेह मर्त्यान्
नारायणात्मा कुरुते महात्मा ॥ ६२

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
[ अस्मिन्नध्याये ६२ श्लोकाः ]

---

## ॥ पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति साङ्ख्यनिरूपणम् ॥

---

युधिष्ठिरः—

सम्यक् त्वयाऽयं नृपते वर्णितश्शिष्टसम्मतः ।
योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ॥ १

साङ्ख्ये त्विदानीं कृत्स्नेन विधिं प्रब्रूहि पृच्छते ।

त्रिषु लोकेषु विज्ञानं सर्वं तद्विदितं हि ते ॥ २

भीष्मः—

शृणु मे त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनाम् ।
[1]विहितं यदिदं बुद्धैः कपिलादिभिरीश्वरैः ॥ ३

यस्मिन्नविभ्रमाः केचिद् दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन् बहवो दोषहानिश्च केवला ॥ ४

ज्ञानेन परिसङ्ख्याय सदोषान् विषयान् नृप ।
मानुषान् दुर्जयान् कृत्स्नान् पैशाचान् विषयांस्तथा ॥ ५

[2]राक्षसान् विषयाञ् ज्ञात्वा यक्षाणां विषयांस्तथा ।
[3-4]विषयानौरगाञ् ज्ञात्वा गान्धर्वान् विषयांस्तथा ॥ ६

पितॄणां विषयाञ् ज्ञात्वा तिर्यक्षु चरतां नृप ।
सुपर्णविषयाञ् ज्ञात्वा मरुतां विषयांस्तथा ॥ ७

राजर्षिविषयाञ् ज्ञात्वा ब्रह्मर्षिविषयांस्तथा ।
आसुरान् विषयाञ् ज्ञात्वा वैश्वदेवांस्तथैव च ॥ ८

देवर्षिविषयाञ् ज्ञात्वा योगानामपि चेश्वरान् ।
विषयांश्च प्रशान्तानां ब्रह्मणो विषयांस्तथा ॥ ९

आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः ।

---

1. ग—विदितं यतिभिर्मुक्तैः
2. घ—अर्धद्वयं नास्ति
3. ग—अर्धचतुष्टयं नास्ति
4. घ—अर्धत्रयं नास्ति

सुखस्य च परं तत्त्वं विज्ञाय वदतां वर ॥ १०

प्राप्ते काले च यद्दुःखं [1]सततं विषयैषिणाम् ।
तिर्यक्षु पततां दुःखं पततां नरके च यत् ॥ ११

स्वर्गस्य च गुणान् कृत्स्नान् दोषान् सर्वांश्च भारत ।
वेदवादे च ये दोषा गुणा ये चापि वैदिकाः ॥ १२

ज्ञानयोगे च ये दोषा गुणा योगे च ये गुणाः ।
साङ्ख्यज्ञाने च ये दोषास् तथैव च गुणा नृप ॥ १३

[2]इतरेषु च ये दोषा गुणास्तेषु च भारत ।
परिसङ्ख्याय सङ्ख्यानं मत्वा साङ्ख्यं गुणाधिकम् ॥ १४

सत्त्वं दशगुणं ज्ञात्वा [3]रजो नवगुणं तथा ।
तमश्चाष्टगुणं ज्ञात्वा बुद्धिं सप्तगुणां तथा ॥ १५

षड्गुणं च मनो ज्ञात्वा नभः पञ्चगुणं तथा ।
बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं महत् ॥ १६

द्विगुणं च रजो ज्ञात्वा सत्त्वमेकगुणं पुनः ।
सर्गं विज्ञाय तत्त्वेन प्रलयं प्रेक्षणात्मना ॥ १७

ज्ञानविज्ञानसम्पन्नाः कारणैर्भावितैश्शुभैः ।

---

1. ग—पततां वि
2. अ-क-ख-घ—अर्धद्वयं नास्ति
3. ख-घ—अयं पादोऽनन्तरश्च न स्तः

प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥ १८
रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च ।
शब्दे सक्तं तथा श्रोत्रं जिह्वां रसगुणेषु च ॥ १९

[1]त्वचं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितम् ।
[2]विष्णौ क्रान्तं बलं शक्रे काष्ठे सक्तं तथाऽनलम् ॥ २०

अप्सु देवीं तथा सक्ताम् अपस्तेजसि चाश्रिताः ।
तेजस्सूक्ष्मे च संयुक्तं वायुं नभसि चाश्रितम् ॥ २१

[3]नभो महति संयुक्तं महद्बुद्धौ च संश्रितम् ।
[4]बुद्धिं तमसि संसक्तां तमो रजसि संश्रितम् ॥ २२

रजस्सत्त्वे तथा सक्तं सत्त्वं सक्तं तथाऽऽत्मनि ।
सक्तमात्मानमीशे च देवे नारायणे तथा ॥ २३

देवं मोक्षे च संयुक्तं मोक्षं सक्तं तु न क्वचित् ।
ज्ञात्वा सत्त्वयुतं देहं वृतं षोडशभिर्गुणैः ॥ २४

स्वभावं चेतनां चैव ज्ञात्वा वै देहमाश्रिते ।
मध्यस्थमेकमात्मानं पापं यस्मिन् न विद्यते ॥ २५

---

1. अ-क-ख-घ—तनुम्
2. ग—मोहं तमसि संयुक्तं लोभमर्थेषु संश्रितम् ।    [अधिकः पाठः]
3. ग—नभो मनसि संयुक्तं मनो बुद्धौ च संस्थितम् ।    [पाठान्तरम्]
4. अ-क-ख-घ—नास्त्योदमर्थम्

द्वितीयं कर्म विज्ञाय नृपते विषयैषिणाम् ।
इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि संश्रितान् ॥ २६

प्राणापानौ समानं च व्यानोदानौ च तत्त्वतः ।
अवाक् चैवानिलं ज्ञात्वा प्रवहं चानिलं पुनः ॥ २७

सप्तवातांस्तथा शेषान् सप्तधा विहितान् पुनः ।
प्रजापतीनृषींश्चैव मार्गांश्च सुबहून् वरान् ॥ २८

सप्तर्षींश्च बहून् ज्ञात्वा राजर्षींश्च परन्तप ।
सुरर्षीन् महतश्चान्यान् महर्षीन् सूर्यसन्निभान् ॥ २९

[1]ऐश्वर्याद्‍च्यावितान्छ्रुत्वा कालेन महता नृप ।
महतां भूतसङ्घानां श्रुत्वा नाशं च पार्थिव ॥ ३०

गतिं चाप्यशुभां ज्ञात्वा नृपते पापकर्मणाम् ।
वैतरण्यां च यद्दुःखं पतितानां यमक्षये ॥ ३१

योनीषु च विचित्रासु संसारानशुभांस्तथा ।
जठरे चाशुभं वासं शोणितोदकभाजने ॥ ३२

श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ।
शुक्रशोणितसङ्घाते मज्जास्नायुपरिग्रहे ॥ ३३

सिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ ।

---

1. ग—ऐश्वर्यात्प्यायितान्श्रुत्वा

विज्ञायाहितमात्मानं योगांश्च विविधान् नृप ॥ ३४
तामसानां च जन्तूनां रमणीयावृतात्मनाम् ।
सात्त्विकानां च जन्तूनां कुत्सितं भरतर्षभ ॥ ३५
गर्हितं महतामर्थे साङ्ख्यानां विदितात्मनाम् ।
उपप्लवांस्तथा घोराञ् शशिनस्तेजसस्तथा ॥ ३६
ताराणां पतनं दृष्ट्वा नक्षत्राणां च पर्ययम् ।
द्वन्द्वानां विप्रयोगं च विज्ञाय कृपणं नृप ॥ ३७
अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम् ।
बाल्ये मोहं च विज्ञाय क्षयं देहस्य चाशुभम् ॥ ३८
रागे मोहे च सम्प्राप्ते क्वचित् सत्त्वं समाश्रितम् ।
सहस्रेषु नराः केचिन्मोक्षबुद्धिं समाश्रिताः ॥ ३९
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ।
बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः ॥ ४०
विषयाणां च दौरात्म्यं विज्ञाय नृपते पुनः ।
गतासूनां च कौन्तेय देहान् दृष्ट्वा तथाऽशुभान् ॥ ४१
वासं कुलेषु जन्तूनां दुःखं विज्ञाय भारत ।
ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम् ॥ ४२
सुरापानेषु सक्तानां ब्राह्मणानां दुरात्मनाम् ।
गुरुदारप्रसक्तानां गतिं विज्ञाय चाशुभाम् ॥ ४३

जननीषु च वर्तन्ते येन सम्यग्युधिष्ठिर ।
सदेवकेषु लोकेषु येन वर्तन्ति मानवाः ॥ ४४

ज्ञानेन तेन विज्ञाय गतिं चाशुभकर्मणाम् ।
तिर्यग्योनिगतानां च विज्ञाय गतयः पृथक् ॥ ४५

वेदवादांस्तथा चित्रान् ऋतूनां पर्ययांस्तथा ।
क्षयं संवत्सराणां च मासानां प्रक्षयं तथा ॥ ४६

पक्षक्षयं तथा दृष्ट्वा दिवसानां च सङ्क्षयम् ।
क्षयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा ॥ ४७

वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः ।
क्षयं धनानां च तथा पुनर्वृद्धिं तथैव च ॥ ४८

संयोगानां क्षयं दृष्ट्वा युगानां च विशेषतः ।
क्षयं च दृष्ट्वा शैलानां क्षयं च सरितां तथा ॥ ४९

वर्णानां च क्षयं दृष्ट्वा क्षयान्तं च पुनः पुनः ।
जरामृत्यू तथा जन्म दृष्ट्वा दुःखानि चैव ह ॥ ५०

देहदोषांस्तथा ज्ञात्वा तेषां दुःखं च तत्त्वतः ।
देहविक्लवतां चैव सम्यग्विज्ञाय भारत ॥ ५१

आत्मदोषांश्च विज्ञाय सर्वानात्मनि संश्रितान् ।
स्वदेहादुत्थितान् गन्धांस् तथा विज्ञाय चाशुभान् ॥ ५२

[1]मूत्रश्लेष्मपुरीषादीन् स्वेदजांश्च सुकुत्सितान् ॥ ५२॥

युधिष्ठिरः—

कान् स्वगात्रोद्भवान् दोषान् पश्यस्यमितविक्रम ।
एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः ॥ ५३॥

भीष्मः—

[2]पञ्च दोषान् प्रभो देहे प्रवदन्ति मनीषिणः ।
मार्गज्ञाः कापिलास्साङ्ख्याश् शृणु तानरिसूदन ॥ ५४॥

कामक्रोधौ भयं निद्रा पञ्चमश्श्वास उच्यते ।
एते दोषाश्शरीरेषु दृश्यन्ते सर्वदेहिनाम् ॥ ५५॥

छिन्दन्ति क्षमया क्रोधं कामं सङ्कल्पवर्जनात् ॥ ५६

सत्त्वसंसेवनान्निद्राम् अप्रमादाद्भयं तथा ।
छिन्दन्ति पञ्चमं [3]श्वासम् अल्पाहारतया नृप ॥ ५७

गुणान् गुणशतैर्ज्ञात्वा दोषान् दोषशतैरपि ।
हेतून् हेतुशतैश्चित्रैश् चित्रान् विज्ञाय तत्त्वतः ॥ ५८

अपां फेनोपमं लोकं विष्णोर्मायाशतैः कृतम् ।
चित्रभित्तिप्रतीकाशं नलसारमनर्थकम् ॥ ५९

तमश्श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसन्निभम् ।

---

1. अ-क-ख-घ—नास्तीदमर्धम्
2. ग—पञ्च देहोद्भवान् दोषान्
3. ग—श्वासं लघ्वाहार

क्लेशप्रायं सुखाधीनं नाशोत्तरमभावगम् ॥ ६०

रजस्तमसि सम्मग्नं पङ्के द्विपमिवावशम् ।
साङ्ख्या राजन् महाप्राज्ञास् त्यक्त्वा देहं प्रजाकृतम् ॥ ६१

ज्ञानज्ञेयेन साङ्ख्येन व्यापिना महता नृप ।
राजसानशुभान् गन्धांस् तामसांश्च तथैव च ॥ ६२

पुण्यांश्च सात्त्विकान् गन्धान् स्पर्शजान् देहसंश्रितान् ।
छित्त्वाऽऽशु ज्ञानशस्त्रेण तपोदण्डेन भारत ॥ ६३

ततो दुःखोदधिं घोरं चिन्ताशोकमहाह्रदम् ।
व्याधिमृत्युमहाग्राहं महाभयमहोरगम् ॥ ६४
तमःकूर्मं रजोमीनं प्रज्ञया सन्तरन्त्युत ॥ ६४॥

स्नेहपङ्कं जरादुर्गं स्पर्शद्वीपमरिन्दम ।
कर्मागाधं सत्यतीरं स्थिरव्रतमिदं नृप ॥ ६५॥

हिंसाशीघ्रमहावेगनानारसमहाकरम् ॥ ६६

नानाप्रीतिमहारत्नं दुःखज्वरसमीरणम् ।
शोकतृष्णामहावर्तं तीक्ष्णव्याधिमहारुजम् ॥ ६७

अस्थिसङ्घातसङ्घाटं श्लेष्मफेनमरिन्दम ।
दानमुक्ताकरं भीमं शोणितह्रदविद्रुमम् ॥ ६८

हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम् ।

रोदनास्रमलक्षारं सङ्गत्यागपरायणम् ॥ ६९
पुनराजन्मलोकौघं पुत्रबान्धवपत्तनम् ।
अहिंसासत्यमर्यादं प्राणत्यागमहोर्मिणम् ॥ ७०
वेदान्तगमनोत्तारं सर्वभूतदयोदकम् ।
मोक्षदुर्लभ्यविषयं वडबामुखसागरम् ॥ ७१
तरन्ति मुनयस्सिद्धा ज्ञानयानेन भारत ॥ ७१॥
तीर्त्वा सुदुस्तरं राजन् विशन्ति विमलं नभः ॥ ७२
तत्र तान् सुकृतान् साङ्ख्यान् सूर्यो वहति रश्मिभिः ।
पद्मतन्तुवदाविश्य प्रावहं विषयं नृप ॥ ७३
तत्र तान् प्रवहो वायुः प्रतिगृह्णाति भारत ।
वीतरागान् यतीन् सिद्धान् वीर्ययुक्तांस्तपोऽन्वितान् ॥ ७४
सूक्ष्मश्शीतस्सुगन्धश्च सुखस्पर्शश्च भारत ।
सप्तानां मरुतां श्रेष्ठो लोकान् गच्छति यश्शुभान् ॥ ७५
स तान् वहति कौन्तेय [1]नभसः परमां गतिम् ।
[2]नभो वहति कौन्तेय रजसः परमां गतिम् ॥ ७६

---

1. क-रजसः; ख—रजसः; नभसः; ग—मनसः
2. ख-घ—अर्धद्वयं नास्ति
ग—मनो वहति लोकेश तमसः परमां गतिम् ।
तमो वहति राजेन्द्र रजसः परमां गतिम् ॥
रजो वहति राजेन्द्र सत्त्वस्य परमां गतिम् । [पाठान्तरम्]

रजो वहति कौन्तेय सत्त्वस्य परमां गतिम् ।
सत्त्वं वहति शुद्धात्मा परं नारायणं प्रभुम् ॥ ७७

प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ ७७॥

परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति चाभि भो ॥ ७८॥

परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् ॥ ७९

युधिष्ठिरः—

स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः ।
आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ ॥ ८०

यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि ।
त्वदृते मानवं नान्यं प्रष्टुमर्हामि कौरव ॥ ८१

मोक्षे दोषो महानेष प्राप्य सिद्धिं गतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥ ८२

प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ।
मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत् ॥ ८३

भीष्मः—

यथान्यायं त्वया तात प्रश्नः पृष्टस्सुसङ्कटः ।
[1]वृद्धानामपि सम्मोहः प्रश्नेऽस्मिन् भरतर्षभ ॥ ८४

---

1. क-ख-ग—वृद्धानामपि सन्देहः

[1]तथाऽपि तत्त्वं परमं शृणु सम्यङ्मयेरितम् ॥ ८४॥

बुद्धिश्च परमा यत्र कापिलानां महात्मनाम् ।
इन्द्रियाणि न बुध्यन्ते स्वदेहे देहिनो नृप ॥ ८५॥

करणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ॥ ८६

आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु ।
विनश्यन्ति न सन्देहः फेना इव महार्णवे ॥ ८७

इन्द्रियैस्सह सुप्तस्य देहिनश्शत्रुतापन ।
सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ॥ ८८

स पश्यति यथान्यायं स्पर्शान् स्पृशति चाभि भो ।
बुध्यमानो यथापूर्वम् अखिलेनैव भारत ॥ ८९

इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात् प्रलीयन्ते सर्पा हतविषा इव ॥ ९०

इन्द्रियाणां तु सर्वेषां स्वस्थानेष्वेव सर्वशः ।
आक्रम्य गतयस्सूक्ष्माश्चरत्यात्मा न संशयः ॥ ९१

सत्त्वस्य च गुणान् कृत्स्नान् रजसश्च गुणान् पुनः ।
गुणांश्च तमसस्सर्वान् गुणान् बुद्धेश्च भारत ॥ ९२

गुणांश्च मनस[2]स्तत्त्वं नभसश्च गुणांस्तथा ।

1. ख-घ—अतापि		2. ख-ग-घ—स्तद्वत्

गुणान् वायोश्च धर्मात्मंस् [1]तेजसश्च गुणान् पुनः ॥ ९३
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि ।
सर्वात्मना गुणैर्व्याप्तः क्षेत्रज्ञस्स युधिष्ठिर ॥ ९४
[2]आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानम् इन्द्रियाणि च तं विभो ॥ ९५
प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणात्मानं निर्द्वन्द्वं प्रकृतेः परम् ॥ ९६
विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥ ९७
[3]शिष्टं चात्र मनस्तात इन्द्रियाणि च भारत ।
आगच्छन्ति यथाकालं गुरोस्सन्देशकारिणः ॥ ९८
शक्यं चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना ।
एवं युक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा ॥ ९९
साङ्ख्या राजन् महाप्राज्ञा गच्छन्ति परमां गतिम् ।
ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते ॥ १००
अत्र ते संशयो मा भूज् ज्ञानं साङ्ख्यं परं मतम् ।

---

1. ख-ग-घ—तेजसां च
2. ग—अर्धद्वयं नास्ति; अर्धचतुष्टयानन्तरमस्ति
3. ग—मनो...याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं विभो ॥ [अधिकः पाठः]

अक्षरं ध्रुवमव्यक्तं पूर्णं ब्रह्म सनातनम् ॥ १०१

अनादिमध्यनिधनं निर्द्वन्द्वं [1]कर्तृ शाश्वतम् ।
कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः ॥ १०२

यतस्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यच्च शंसन्ति शास्त्राणि वदन्ति परमर्षयः ॥ १०३

सर्वे विप्राश्च देवाश्च तथा शास्त्रविदो जनाः ।
ब्रह्मण्यं परमं देवम् अनन्तं परतोऽच्युतम् ॥ १०४

प्रार्थयन्तश्च तं विप्रा वदन्ति शुभबुद्धयः ।
सम्यग्युक्तास्तथा योगास् साङ्ख्याश्चामितदर्शनाः ॥ १०५

[2]अमूर्तेस्तस्य कौन्तेय साङ्ख्यं मूर्तिरिति श्रुतिः ।
अभिज्ञानानि तस्याहुर् मतं हि भरतर्षभ ॥ १०६

द्विविधानीह भूतानि पृथिव्यां पृथिवीपते ।
जङ्गमाजङ्गमाख्यानि जङ्गमं तु विशिष्यते ॥ १०७

ज्ञानं महद्यद्धि महत्सु राजन्
वेदेषु साङ्ख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणं
साङ्ख्यागतं तन्निखिलं नरेन्द्र ॥ १०८

---

1. ग—ब्रह्म　　2. ग—आत्मर्द्धेस्तस्य

यच्चेतिहासेषु महत्सु दृष्टं
यच्चार्थशास्त्रे नृप शिष्टजुष्टे ।
ज्ञानं च लोके यदिहास्ति किञ्चित्
साङ्ख्यागतं तच्च महन्महात्मन् ॥ १०९

शमश्च दृष्टः परमं बलं च
ज्ञानस्य सौक्ष्म्यं च यथावदुक्तम् ।
तपांसि सूक्ष्माणि सुखानि चैव
साङ्ख्ये यथावद्विहितानि राजन् ॥ ११०

विपर्यये तस्य हि पार्थ देवान्
गच्छन्ति साङ्ख्याः सततं सुखेन ।
तांश्चानुसञ्चार्य ततः कृतार्थाः
पतन्ति विप्रेषु यतेषु भूयः ॥ १११

हित्वा च देहं प्रविशन्ति मोक्षं
दिवौकसो द्यामिव पार्थ साङ्ख्याः ।
ततोऽधिकं तेऽभिरता महार्थे
साङ्ख्ये द्विजाः पार्थिव शिष्टजुष्टे ॥ ११२

तेषां न तिर्यग्गमनं हि दृष्टं
नावाग्गतिः पापकृतां निवासः ।

न चाबुधा नो अपि ते न सिद्धा
ये ज्ञानमेतन्नृपतेऽनुरक्ताः ॥ ११३

साङ्ख्यं विशालं परमं पुराणं
महार्णवं [1]विविधमुदारकान्तम् ।
कृत्स्नं च साङ्ख्यं नृपते महात्मा
नारायणो धारयतेऽप्रमेयः ॥ ११४

एतन्मयोक्तं नरदेव तत्त्वं
नारायणो विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं
संहारकाले च तदत्ति भूयः ॥ ११५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥
[ अस्मिन्नध्याये ११५ श्लोकाः ]

---

1. ख—विपुल; ग—विपुलमुदाहरन्ति



## ॥ षडशीत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति क्षराक्षरलक्षणप्रतिपादकजनकवसिष्ठसंवादानुवादः ॥

युधिष्ठिरः—

किं तदक्षरमित्युक्तं यस्मान्नावर्तते पुनः ।
[1]किं च तत् क्षरमित्युक्तं यस्मादावर्तते पुनः ॥ १

अक्षरक्षरयोर्व्यक्तिं इच्छाम्यरिनिषूदन ।
उपलब्धुं महाबाहो तत्त्वेन कुरुनन्दन ॥ २

त्वं हि ज्ञाननिधिर्विप्रैर् उच्यसे वेदपारगैः ।
ऋषिभिश्च महाभागैर् यतिभिश्च महात्मभिः ॥ ३

शेषमल्पं दिनानां ते दक्षिणायनभास्करे ।
आवृत्ते भगवत्यर्के गन्तासि परमां गतिम् ॥ ४

त्वयि प्रतिगते श्रेयः कुतश्श्रोष्यामहे वयम् ।
कुरुवंशप्रदीपस्त्वं ज्ञानद्रव्येण दीप्यसे ॥ ५

तदेतच्छ्रोतुमिच्छामि त्वत्तः कुरुकुलोद्वह ।
न तृप्यामीह राजेन्द्र शृण्वन्नमृतमीदृशम् ॥ ६

1. ख-घ—नास्तीदमर्धम्

भीष्मः—

अत्र ते वर्तयिष्येऽहम् इतिहासं पुरातनम् ।
वसिष्ठस्य च संवादं करालजनकस्य च ॥ ७

वसिष्ठं श्रेष्ठमासीनम् [1]ऋषीणां भास्करद्युतिम् ।
पप्रच्छ जनको राजा ज्ञानं नैश्श्रेयसं परम् ॥ ८

परमध्यात्मकुशलम् अध्यात्मगतिनिश्चयम् ।
मैत्रावरुणिमासीनम् अभिवाद्य कृताञ्जलिः ॥ ९

स्वक्षरं प्रश्रितवचो मधुरं चाप्यनुल्बणम् ।
पप्रच्छर्षिवरं राजा करालजनकः पुरा ॥ १०

जनकः—

भगवञ् श्रोतुमिच्छामि परं ब्रह्म सनातनम् ।
यस्मान्न पुनरावृत्तिम् आप्नुवन्ति मनीषिणः ॥ ११

यच्च तत् क्षरमित्युक्तं यथेदं क्षरते जगत् ।
यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमनामयम् ॥ १२

वसिष्ठः—

श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत् ।
यन्न क्षरति पूर्वेण यावत् कालेन चाप्यथ ॥ १३

युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्गुणम् ।
दशकल्पशतावृत्तं तदहर्ब्राह्ममुच्यते ॥ १४

1. ख — इतः षट् पादा न सन्ति

रात्रिश्चैतावती राजन् यस्यान्ते प्रतिबुध्यते ।
सृजत्यनन्तकर्माणं महान्तं भूतमग्रजम् ॥ १५

मूर्तिमन्तममूर्त्यात्मा विश्वं शम्भुस्स्वयम्भुवम् ।
अणिमा लघिमा प्राप्तिर् ईशानं ज्योतिरव्ययम् ॥ १६

सर्वतःपाणिपादं सत् सर्वतोक्षिशिरोमुखम् ।
सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १७

हिरण्यगर्भो भगवान् एष बुद्धिरिति स्मृतः ।
महानिति च योगेषु विरिञ्च इति चाप्युत ॥ १८

साङ्ख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः ।
विचित्ररूपो विश्वात्मा एकोऽक्षर इति स्मृतः ॥ १९

कृतं नैकात्मकं येन वृतं त्रैलोक्यमात्मना ।
तथैव बहुरूपत्वाद् विश्वरूप इति स्मृतः ॥ २०

एष वै विक्रियापन्नस् सृजत्यात्मानमात्मना ।
अहङ्कारं महातेजाः प्रजापतिरहङ्कृतम् ॥ २१

अव्यक्ताद्व्यक्तमापन्नं विद्यासर्गं वदन्ति तम् ।
महतश्चाप्यहङ्कारम् अविद्यासर्गमेव च ॥ २२

[1]अविदिश्च विदिश्चैव समुत्पन्नावथैकतः ।

1. ख—अविरश्च विरिश्चैव ? अपारे च परश्चैव इति लक्षाभरणम्
ग—अच् परश्चच् परश्चैव ?
घ—अविरिश्च विरिश्चैव ?

विद्याविद्येति विख्याते श्रुतिश्चाध्यात्मचिन्तकैः ॥ २३
भूतसर्गमहङ्कारात् तृतीयं विद्धि पार्थिव ।
अहङ्कारेषु भूतेषु चतुर्थं विद्धि वैकृतम् ॥ २४
वायुर्ज्योतिरथाकाशम् आपोऽथ पृथिवी तथा ।
शब्दस्स्पर्शश्च रूपं च रसो गन्धस्तथैव च ॥ २५
एवं युगपदुत्पन्नं दशवर्गमसंशयम् ।
पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् ॥ २६
श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणमेव च पञ्चमम् ।
वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ २७
बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च ।
सम्भूतानीह युगपन्मनसा सह पार्थिव ॥ २८
एषा तत्त्वचतुर्विंशत् सर्वाकृतिषु वर्तते ।
यां ज्ञात्वा नानुशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ २९
एतद्देहे समाख्यातं त्रैलोक्ये सर्वदेहिषु ।
वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ॥ ३०
सयक्षभूतगन्धर्वे सकिन्नरमहोरगे ।
सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ ३१
सदंशकीटमशके [1]सपत्रिक्रिमिकीटके ।

1. ब—स पूतिक्रिमिभूषिके

[1]मूषिके शुनि श्वपाके वै सचाण्डाले सपुल्कसे ॥ ३२
[2]हस्त्यश्वखरशार्दूले [3]सवृके गवि चैव हि ।
यच्च मूर्तिमयं किञ्चित् सर्वत्रैतन्निदर्शनम् ॥ ३३

जले भुवि तथाऽऽकाशे नान्यथेति विनिश्चयः ।
स्थानं देहवतामस्ति इत्येवमनुशुश्रुमः ॥ ३४

कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञकम् ।
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ ३५

एतच्च क्षरमित्युक्तं क्षरतीदं यथा जगत् ।
जगन्मोहात्मकं प्राहुर् अव्यक्तं व्यक्तसंज्ञकम् ॥ ३६

महांश्चैवाग्रजो नित्यम् एतत् क्षेत्रनिदर्शनम् ।
कथितं ते महाराज यस्मान्नावर्तते पुनः ॥ ३७

पञ्चविंशतिमो विष्णुर् निस्तत्त्वस्तत्त्वसंज्ञकः ।
तत्त्वसंश्रयणादेनं तत्त्वमाहुर्मनीषिणः ॥ ३८

यन्मर्त्यमसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति ।
चतुर्विंशतिमोऽव्यक्तो ह्यमूर्तः पञ्चविंशकः ॥ ३९

स एव हृदि सर्वासु मूर्तिष्वात्माऽवतिष्ठते ।

---

1. ख-घ—शुनि श्वपाके वैणे च ; सहश्वपाके सशुनि
2. ग—सहस्त्यश्वे सशार्दूले सऋक्षगवि
3. क-ख-घ—स वृक्षे

[1]चेतयंश्चेतनान् नित्यं सर्वमूर्तिरमूर्तिमान् ॥ ४०

सर्गप्रत्ययधर्मिण्याम् असर्गप्रत्ययात्मकः ।
गोचरे वर्तते नित्यं निर्गुणो गुणसंज्ञके ॥ ४१

एवमेष महानात्मा सर्गप्रलयकोविदः ।
विकुर्वाणः प्रकृतिमान् अभिमन्यत्यबुद्धिमान् ॥ ४२

तमस्सत्त्वरजोयुक्तस् तासु तास्विह योनिषु ।
लीयतेऽप्रतिबुद्धत्वाद् अबुद्धजनसेवनात् ॥ ४३

सहवासान्निवासात्मा नान्योहऽमिति मन्यते ।
योऽहं सोऽहमिति ह्युक्त्वा स गुणाननुवर्तते ॥ ४४

तमसा तामसान् भावान् विविधान् प्रतिपद्यते ।
रजसा राजसांश्चैव सात्त्विकान् सत्त्वसंश्रयात् ॥ ४५

शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु ।
सर्वाण्यन्यानि रूपाणि जानीहि प्राकृतानि वै ॥ ४६

तामसा निरयं यान्ति राजसा मानुषांस्तथा ।
सात्त्विका देवलोकाय गच्छन्ति सुखभागिनः ॥ ४७

निष्कैवल्येन पापेन तिर्यग्योनिमवाप्नुयात् ।
पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ॥ ४८

---

1. ग—चेतनोऽचेतनो नित्यः सर्वज्ञत्वादमूर्तिमान् । [पाठान्तरम्]

एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः ।
पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्तते ॥ ४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
[अस्मिन्नध्याये ४९ श्लोकाः]

## ॥ सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति जीवानामज्ञाननिमित्तकानर्थप्राप्त्यादिप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥

वसिष्ठः—

एवमप्रतिबुद्धत्वाद् अबुद्धमनुवर्तनात् ।
देही देहसहस्राणि सदा समभिपद्यते ॥ १

तिर्यग्योनौ मनुष्यत्वे कदाचिद्देवतास्वपि ।
उपपद्यति संयोगाद् गुणैस्सह गुणक्षयात् ॥ २

मानुषत्वाद्दिवं याति देवो मानुष्यमेव च ।
मानुष्यान्निरयं स्थानम् आनन्त्यं प्रतिपद्यते ॥ ३

कोशकारो यथाऽऽत्मानं कीटस्समवरुन्धति ।
[1]सूत्रतन्तुगुणैर्नित्यं तथाऽयमगुणो गुणैः ॥ ४

1. क—सूक्ष्म

द्वन्द्वमेति च निर्द्वन्द्वस् तासु तास्विह योनिषु ।
शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ॥ ५

गलोदरे प्लीहरोगे ज्वरे मण्डविषूचिके ।
श्वित्रे कुष्ठेऽग्निदग्धे च सिध्मापस्मारयोरपि ॥ ६

यानि चान्यानि द्वन्द्वानि प्राकृतानि शरीरिषु ।
उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते ॥ ७
अभिमन्यत्यभीमानात् तथैव सुकृतान्यपि ॥ ७॥
शुक्लवासाश्च [1]दुर्वासाश् शायी नित्यमधस्तथा ॥ ८

मण्डूकशायी च तथा वीरासन[2]गतस्तथा ।
चीरधारणमाकाशे शयनं स्थानमेव च ॥ ९

इष्टकाप्रस्तरे चैव कण्टकप्रस्तरे तथा ।
भस्मप्रस्तरशायी च भूमिशय्यानुलेपनः ॥ १०

वीरस्थानेऽम्बुपङ्के च शयनं फलकेषु च ।
विविधासु च शय्यासु फलगृद्ध्याऽन्वितोऽफलः ॥ ११
मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि च ।
[3]शणवालपरीधानो व्याघ्रचर्मपरिच्छदः ॥ १२
सिंहचर्मपरीधानः पट्टवासास्तथैव च ।

1. ग—दिग्वासाः 2. क-ख-घ—रत
3. क-ख-ग-घ—शाणीवाल

[1]कीटकार्पासवसनश् चीरवासास्तथैव च ॥ १३

वस्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् ॥ १३॥

भोजनानि विचित्राणि [2]व्रतानि विविधानि च ॥ १४

एकवस्त्रान्तराशित्वम् एक [3]कालिकभोजनम् ।

चतुर्थाष्टमकालश्च षष्ठकालिक एव च ॥ १५

षड्रात्रभोजनश्चैव [4]तथैवाष्टाहभोजनः ।

सप्तरात्रदशाहारो द्वादशाहार एव च ॥ १६

[5]मासोपवासी मूलाशी फलाहारस्तथैव च ।

वायुभक्षोऽम्बुपिण्याकगोमयादान एव च ॥ १७

गोमूत्रभोजनश्चैव शाकपुष्पाद एव च ।

शैवालभोजनश्चैव तथाऽऽचामेन वर्तयन् ॥ १८

वर्तयञ् जीर्णपर्णैश्च प्रकीर्णफलभोजनः ।

विविधानि च कृच्छ्राणि सेवते [6]सुखकाङ्क्षया ॥ १९

चान्द्रायणानि विधिना चीर्णानि विविधानि च ।

चातुराश्रम्यपन्थानम् आश्रयत्याश्रमानपि ॥ २०

---

1. अ-क—नास्तीदमर्धम् 2. ग—रत्नानि

3. क-ख-ग-घ—मेकाह

4. अ-क-घ—इतो दश पादा न सन्ति

5. ग—कोश एवेदमर्धं वर्तते

6. ग—फलकाङ्क्षया

उपासीनश्च पाषण्डान् गुहाश्शैलांस्तथैव च ।
विविक्ताश्च शिलाच्छायास् तथा प्रस्रवणानि च ॥ २१

विविधानि च जप्यानि व्रतानि विविधानि च ।
नियमान् सुविचित्रांश्च विविधानि तपांसि च ॥ २२

यज्ञांश्च विविधाकारान् विधींश्च विविधांस्तथा ।
[1]वणिक्पथं द्विजं क्षत्रं वैश्यं शूद्रं तथैव च ॥ २३

दानं च विविधाकारं दीनान्धकृपणादिषु ।
अभिमन्यत्यसम्बोधात् तथैव त्रिविधान् गुणान् ॥ २४

सत्त्वं रजस्तमश्चैव धर्मार्थौ काममेव च ।
[2]प्रकृत्याऽऽत्मानमेवात्मा एवं प्रविभजत्युत ॥ २५

स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रिये ।
याजनाध्यापने दानं तथैवाहुः प्रतिग्रहम् ॥ २६

यजनाध्ययने चैव यच्चान्यदपि किञ्चन ।
जन्ममृत्युविवादे च तथा विशसनेऽपि च ॥ २७

शुभाशुभमयं सर्वम् एतदाहुः क्रियाफलम् ॥ २७॥

प्रकृतिः कुरुते देवी महाप्रलयमेव च ।
दिवसान्ते गुणानेतान् आवृत्यैकोऽवतिष्ठते ॥ २८॥

रश्मिजालमिवादित्यस् तत्तत्काले नियच्छति ।

---

1. ग—इदमर्धं नास्ति 2. ग—इदमर्धं नास्ति

एवमेषोऽसकृत् सर्वं क्रीडार्थमभिमन्यते ॥ २९॥

आत्मा रूपगुणानेतान् विविधान् हृदयप्रियान् ।
एवमेष विकुर्वाणस् सर्गप्रलयकर्मणी ॥ ३०॥

क्रियाक्रियापथे रक्तस् त्रिगुणास्त्रिगुणातिगः ।
क्रियाक्रियापथोपेतस् तथा तदभिमन्यते ॥ ३१॥

मम द्वन्द्वान्यथैतानि मम वर्तन्ति नित्यशः ।
[1]ममैवैतानि जायन्ते बाधन्ते तानि मामिति ॥ ३२॥

निस्तर्तव्यान्यथैतानि सर्वाणीति नराधिप ।
मन्यत्ययं ह्यबुद्धित्वात् तथैव सुकृतान्यपि ॥ ३३॥

भोक्तव्यानि मयैतानि देवलोकगतेन वै ।
इहैव चैतद्भोक्ष्यामि शुभाशुभफलोदयम् ॥ ३४॥

[2]पुण्यमेव तु कर्तव्यं नाकृत्वा सुखमेधते ।
यावदन्तं च मे सौख्यं जात्यां जात्यां भविष्यति ॥ ३५॥

भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकम् ।
मम दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥ ३६॥

निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः ।

---

1. ग—इदमर्धं नास्ति
2. ख-ग—पुण्यमेव च कर्तव्यं तत्कृत्वा सुसुखं मम ।
घ—सुखमेव [पाठान्तरम्]

मनुष्यत्वाच्च देवत्वं देवत्वात् पौरुषं पुनः ॥ ३७॥
मानुषत्वाच्च निरयं पर्यायेणोपगच्छति ॥ ३८
य एवं वेत्ति नित्यं वै निरात्मात्मगुणैर्वृतः ।
तेन देवमनुष्येषु निरये चोपपद्यते ॥ ३९
ममत्वेनावृतो नित्यं तत्रैव परिवर्तते ।
सर्गकोटिसहस्राणि मरणान्तासु योनिषु ॥ ४०
य एवं कुरुते कर्म शुभाशुभफलात्मकम् ।
[1]स एवं फलमश्नाति त्रिषु लोकेषु मूर्तिमान् ॥ ४१
प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥ ४२
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ।
त्रीणि स्थानानि चैतानि जानीयात् प्राकृतानि ह ॥ ४३
अलिङ्गां प्रकृतिं त्वाहुर् लिङ्गैरनुमिमीमहे ।
तथैव पौरुषं लिङ्गम् अनुमानाद्धि गम्यते ॥ ४४
स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ।
प्राणद्वाराण्यधिष्ठाय कर्मणाऽऽत्मनि मन्यते ॥ ४५
श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाणि च ।
वागादीनि प्रवर्तन्ते गुणेष्वेव गुणैस्सह ॥. ४६

1. ग—अर्धद्वयं नास्ति

अहमेतानि वै कुर्वन् मय्येतानीन्द्रियाणि ह ।
निरिन्द्रियो हि मन्येत व्रणवानस्मि निर्व्रणः ॥ ४७

अलिङ्गो लिङ्गमात्मानम् [1]अकालः कालमात्मनः ।
असत्त्वस्सत्त्वमात्मानम् अतत्त्वस्तत्त्वमात्मनः ॥ ४८

अमृत्युर्मृत्युमात्मानम् अतमास्तम आत्मनः ।
अक्षेत्रः क्षेत्रमात्मानम् असर्गस्सर्गमात्मनः ॥ ४९

अतपास्तप आत्मानम् अगतिर्गतिमात्मनः ।
अभवो भवमात्मानम् अभयो भयमात्मनः ॥ ५०

अकर्ता चैव कर्तृत्वम् अबीजो बीजमात्मनः ।
अक्षरः क्षरमात्मानम् अबुद्धिस्त्वभिमन्यते ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥
[ अस्मिन्नध्याये ५१ श्लोकाः ]

---

1. ख-घ—इतः चतुर्दश पादा न सन्ति

## ॥ अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति प्राणिनां शरीरादिसम्बन्धादिप्रकारप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥



वसिष्ठः—

एवमप्रतिबुद्धत्वाद् अबुद्धजनसेवनात् ।
सर्गकोटिसहस्राणि [1]पतनान्तानि गच्छति ॥ १

धाम्नो धामसहस्राणि मरणान्तानि गच्छति ।
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ॥ २

चन्द्रमा इव कोशानां पुनस्तत्र सहस्रशः ।
लीयतेऽप्रतिबुद्धत्वाद् एवमेष ह्यबुद्धिमान् ॥ ३

कला पञ्चदशी योनिस् तद्धाम इति पठ्यते ।
नित्यमेतद् विजानीहि सोमः षोडशमी कला ॥ ४

कलया जायतेऽजस्रं पुनः पुनरबुद्धिमान् ।
धाम तस्योपयुञ्जन्ति [2]पितृदेवगणाः पुनः ॥ ५

षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् ।
न तूपयुज्यते देवैर् देवानुपयुनक्ति सा ॥ ६

---

1. ग—मरणान्तानि
2. ख-घ—भूय एव दिवौकसः  ग—भूय एव तु जायते

एवं तां क्षपयित्वा हि जायते नृपसत्तम ।
[1]सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते ॥ ७

तदेवं षोडशकलं देहमव्यक्तसंज्ञकम् ।
ममायमिति मन्वानस् तत्रैव परिवर्तते ॥ ८

पञ्चविंशस्तथैवात्मा तस्यैवाप्रतिबोधनात् ।
[2]विमलस्य विशुद्धस्य शुद्धामलनिषेवणात् ॥ ९

[3]अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ।
[4]अबुद्धसेवनाच्चापि बुद्धोऽप्यबुधतां व्रजेत् ॥ १०

तथैवाप्रतिबुद्धोऽपि विज्ञेयो नृपसत्तम ।
प्रकृतेस्त्रिगुणायास्तु सेवनात् [5]त्रिगुणो भवेत् ॥ ११

करालजनकः—

अक्षरक्षरयोरेष द्वयोस्सम्बन्ध उच्यते ।
स्त्रीपुंसोर्वाऽपि भगवन् सम्बन्धस्तद्वदुच्यते ॥ १२

ऋते न पुरुषेणेह स्त्री गर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो रूपं निर्वर्तयेत्तथा ॥ १३

अन्योन्यस्यैव सम्बन्धाद् अन्योन्यगुणसंश्रयात् ।

---

1. ख—अर्धत्रयं नास्ति
2. ग—इदमर्धं नास्ति
3. ग—अशुद्धभावः शुद्धात्मा
4. ग—अशुद्धसेवनाच्चैव
5. ग—प्राकृतो

[1]रूपं निर्वर्तयत्येतद् एवं सर्वासु योनिषु ॥ १४

[2]स्त्रीपुंसोरभिसंरोधाद् अन्योन्यगुणसंश्रयात् ।
ऋतौ निर्वर्तते रूपं तद्वक्ष्यामि निदर्शनम् ॥ १५

ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा ।
अस्थि स्नायु च मज्जानं जानीमः पितृतो द्विज ॥ १६

त्वङ्मांसं शोणितं चेति मातृजान्यपि शुश्रुमः ।
एवमेतद्द्विजश्रेष्ठ वेदशास्त्रेषु पठ्यते ॥ १७

प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।
वेदशास्त्रप्रमाणं च प्रमाणं तु सनातनम् ॥ १८

एवमेवाभिसम्बद्धौ नित्यं प्रकृतिपूरुषौ ।
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते ॥ १९

अथवाऽनन्तरकृतं किञ्चिदेव निदर्शनम् ।
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा ॥ २०

मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ।
अदेहमजरं नित्यम् अतीन्द्रियमनीश्वरम् ॥ २१

वसिष्ठः—

यदेतदुक्तं भवता वेदशास्त्रनिदर्शनम् ।

---

1. ग—अर्धद्वयं नास्ति
2. क-ख-घ—स्त्यर्थमभिसंरोधाद्

एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् ॥ २२
धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः ।
न तु ग्रन्थस्य तत्त्वज्ञो यथावत् त्वं नरेश्वर ॥ २३
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस् तस्य तद्धारणं वृथा ॥ २४
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
[1]यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य तद्धारणं वृथा ॥ २५
ग्रन्थस्यार्थं च पृष्टस्संस् तादृशो वक्तुमर्हति ।
यथातत्त्वाधिगमनाद् अर्थं तस्य स विन्दति ॥ २६
यस्तु संसत्सु कथयेद् ग्रन्थार्थं स्थूलबुद्धिमान् ।
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥ २७
निर्णयाद्वाऽपि छिद्रात्मा न तं वक्ष्यति तत्त्वतः ।
सोऽपहास्यात्मतामेति यस्माच्चावाप्तवानपि ॥ २८
तस्मात् त्वं शृणु राजेन्द्र यथैतदनुदृश्यते ।
याथातथ्येन साङ्ख्येषु योगेषु च महत्सु च ॥ २९
यदेव योगाः पश्यन्ति साङ्ख्यास्तदनुचक्षते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ३०
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च ।

1. ख—अर्धत्रयं नास्ति    घ—अर्धचतुष्टयं नास्ति

एतदैन्द्रियकं तात यच्च त्वमिदमात्थ वै ॥ ३१

द्रव्याद्द्रव्यस्य निष्पत्तिम् इन्द्रियादिन्द्रियं तथा ।
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ॥ ३२

निरिन्द्रियस्याबीजस्य निर्द्रव्यस्यास्य देहिनः ।
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ॥ ३३

गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च ।
एवं गुणाः प्रकृतितो जायन्ते निविशन्ति च ॥ ३४

त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च ।
अष्टैतान्यथ शुक्रेण जानीहि प्राकृतानि वै ॥ ३५

पुमांश्चैवापुमांश्चैव त्रिलिङ्गं प्राकृतं स्मृतम् ।
नैवापुमान् पुमांश्चैव स लिङ्गीत्यभिधीयते ॥ ३६

अलिङ्गा प्रकृतिर्लिङ्गैर् उपलभ्यति साऽऽत्मजैः ।
यथा पुष्पफलैर्नित्यम् ऋतवो मूर्तयस्तथा ॥ ३७

एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते ।
पञ्चविंशतिमस्तात लिङ्गेष्वनियतात्मकः ॥ ३८

अनादिनिधनोऽनन्तस् सर्वदर्शी निरामयः ।
केवलं त्वभिमानित्वाद् गुणेष्वगुण उच्यते ॥ ३९

गुणा गुणवतस्सन्ति निर्गुणस्य कुतो गुणाः ।
तस्मात्तेन विजानन्ति ये जना गुणदर्शिनः ॥ ४०

यदा त्वेष गुणानेत्य निर्गुणस्त्वभिमन्यते ।
तदा स गुणवानेव परमेणानुपश्यति ॥ ४१

यत्तद् बुद्धेः परं प्राहुस् साङ्ख्ययोगाश्च सर्वशः ।
बुध्यमानं महाप्राज्ञम् अबुद्धपरिवर्जनात् ॥ ४२

अप्रबुद्धमथाऽव्यक्तं सगुणं प्राहुरीश्वरम् ।
निर्गुणं चेश्वरं नित्यम् अधिष्ठातारमेव च ॥ ४३

प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः ।
साङ्ख्ययोगे च कुशला बुध्यन्ते परमर्षिणः ॥ ४४

यदा प्रबुद्धास्त्वव्यक्तम् अवस्थाजन्मभीरवः ।
बुध्यमानं न बुध्यन्ते गमयन्ति समं तदा ॥ ४५

एतन्निदर्शनं सम्यग् असम्यक्चार्थदर्शनम् ।
बुध्य[1]मानप्रबुद्धाभ्यां पृथक् पृथगरिन्दम ॥ ४६

परस्परेणैतदुक्तं क्षराक्षरनिदर्शनम् ।
एकत्वमक्षरं प्राहुर् नानात्वं क्षरमुच्यते ॥ ४७

पञ्चविंशतिनिष्ठोऽयं यदा सम्यक् प्रचक्षते ।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ॥ ४८

[2]तत्त्वनिस्तत्त्वयोरेतत् पृथगेव निदर्शनम् ।

---

1. ग—मानः प्रबुद्धः स्यात् पृथ
2. ग—न तत्त्वमेतयोरेतत्

पञ्चविंशतितत्त्वं तु तत्त्वमाहुर्मनीषिणः ॥ ४९

निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम् ।
वर्गस्य वर्गमाचारं [1]तस्मात् सत्त्वात् सनातनम् ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

---

## ॥ एकोननवत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति साङ्ख्यप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥

---

जनकः—

नानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम ।
पश्यामि वाऽभिसन्दिग्धम् एतयोर्वै निदर्शनम् ॥ १

तथाऽबुद्धप्रबुद्धाभ्यां बुध्यमानस्य चानघ ।
स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः ॥ २

अक्षरक्षरयोरुक्तं त्वया यदपि कारणम् ।
तदप्यस्थिरबुद्धित्वात् प्रनष्टमिव मेऽनघ ॥ ३

---

1. ग—तत्त्वं तत्त्वात् सनातनम्

तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनम् ।
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ॥ ४
विद्याविद्ये च भगवन्नक्षरं क्षरमेव च ।
साङ्ख्यं योगं च कात्स्न्र्येन पृथक् चैवापृथक् च ह ॥ ५

वसिष्ठः—

हन्त तेऽहं प्रवक्ष्यामि यदेतदनुपृच्छसि ।
योगकृत्यं महाराज पृथगेव शृणुष्व मे ॥ ६
योगकृत्यं तु योगानां ध्यानमेव परं बलम् ।
तच्चापि द्विविधं ध्यानम् आहुर्वेदविदो जनाः ॥ ७
एकाग्रता च मनसः प्राणायामस्तथैव च ।
प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा ॥ ८
मूत्रोत्सर्गे पुरीषे च भोजने च नराधिप ।
द्विकालं नाभियुञ्जीत शेषं युञ्जीत तत्परः ॥ ९
इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्य मनसा मुनिः ।
दशद्वादशभिर्वाऽपि चतुर्विंशात् परं ततः ॥ १०
तं चोदनाभिर्मतिमान् आत्मानं चोदयेदथ ।
तिष्ठन्तमजरं तं तु यत्तदुक्तं मनीषिभिः ॥ ११
तैश्चात्मा सततं ज्ञेय इत्येवमनुशुश्रुमः ।
द्रुतं ह्यहीनमनसा नान्यथेति विनिश्चयः ॥ १२

[1]विमुक्तस्सर्वसङ्गेभ्यो लघ्वाहारो जितेन्द्रियः ।
पूर्वरात्रेऽपररात्रे च धारयेत मनो त्मनि ॥ १३

स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलाधिप ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥ १४

स्थाणुवच्चाप्यकम्प्यस्स्याद् दारुवच्चापि निश्चलः ।
बुधा विधिविधानज्ञास् तदा युक्तं प्रचक्षते ॥ १५

न शृणोति न चाघ्राति न रस्यति न पश्यति ।
न च स्पर्शं विजानाति न सङ्कल्पयते मनः ॥ १६

न चाभिमन्यते किञ्चिन्न च बुध्यति काष्ठवत् ।
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ॥ १७

निवाते हि यथा दीपो दीप्यमानः प्रदृश्यते ।
निरिङ्गश्चाचलश्चोर्ध्वं न तिर्यग्गतिमाप्नुयात् ॥ १८

तदा तमनुपश्येत यस्मिन् दृष्टे तु कथ्यते ।
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ॥ १९

विधूम इव सप्तार्चिर् आदित्य इव रश्मिमान् ।
वैद्युतोऽग्निरिवाकाशे दृश्यतेऽऽत्मा तथाऽऽत्मनि ॥ २०

यं पश्यन्ति महात्मानो धृतिमन्तो मनीषिणः ।
ब्राह्मणा ब्रह्मयोनिस्था ह्ययोनिममृतात्मकम् ॥ २१

1. ख-घ—अर्धपञ्चकं नास्ति

तदेवाहुरणुभ्योऽणुं तन्महद्भ्यो महत्तरम् ।
तत्तत्र सर्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते ॥ २२

बुद्धिद्रव्येण दृश्येत मनोदीपेन लोककृत् ।
महतस्तमसस्तात पारे तिष्ठति [1]तामसः ॥ २३

स आत्मेति च वै प्रोक्तस् तत्त्वज्ञैर्वेदपारगैः ।
विमलो वितमस्कश्च निर्लिङ्गो लिङ्गसंज्ञकः ॥ २४

योगमेतत्तु योगानाम् एवं योगस्य लक्षणम् ।
एवं पश्यं प्रपश्यन्ति आत्मस्थमजरं परम् ॥ २५

योगदर्शनमेतावद् उक्तं ते तत्त्वतो मया ।
साङ्ख्यज्ञानं प्रवक्ष्यामि परिसङ्ख्यानिदर्शनम् ॥ २६

[2]अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः ।
तस्मान्महत् समुत्पन्नं द्वितीयं राजसत्तम ॥ २७

अहङ्कारस्तु महतस् तृतीय इति नश्श्रुतम् ।
पञ्चभूतान्यहङ्काराद् आहुस्साङ्ख्यनिदर्शिनः ॥ २८

एताः प्रकृतयस्त्वष्टौ विकाराश्चापि षोडश ।
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि तु ॥ २९

एतावदेव तत्त्वानां साङ्ख्यमाहुर्मनीषिणः ।
साङ्ख्ये विधिविधानज्ञा नित्यं साङ्ख्यपथे रताः ॥ ३०

1. क—मानसः 2. ख—अर्धचतुष्टयं नास्ति

यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते ।
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ॥ ३१

अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः ।
गुणा गुणेषु सततं सागरस्योर्मयो यथा ॥ ३२

सर्गप्रलय एतावान् प्रकृतेर्नृपसत्तम ।
एकत्वं प्रलये चास्य बहुत्वं च यदाऽसृजत् ॥ ३३

एवमेव च राजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः ।
अधिष्ठाता य इत्युक्तस् तस्याप्येतन्निदर्शनम् ॥ ३४

एकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववित् ।
एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात् ॥ ३५

बहुधाऽऽत्मानमकरोत् प्रकृतिः प्रसवात्मिका ।
तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधितिष्ठति ॥ ३६

अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः ।
अधिष्ठानादधिष्ठाता क्षेत्राणामिति नश्श्रुतम् ॥ ३७

क्षेत्रं जानाति चाव्यक्तं क्षेत्रज्ञ इति चोच्यते ।
अव्यक्ते च पुरे शेते पुरुषश्चेति कथ्यते ॥ ३८

अन्यदेव च क्षेत्रं स्याद् अन्यः क्षेत्रज्ञ उच्यते ।
क्षेत्रमव्यक्तमित्युक्तं ज्ञाता वै पञ्चविंशकः ॥ ३९

[1]अन्यदेव च ज्ञानं स्याद् अन्यज्ज्ञेयं तदुच्यते ।
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ॥ ४०

अव्यक्तं क्षेत्रमित्युक्तं तथा तत्त्वं तथेश्वरम् ।
अनीश्वरमतत्त्वं च तत्त्वे तत् पञ्चविंशकम् ॥ ४१

साङ्ख्यदर्शनमेतावत् परिसङ्ख्यानिदर्शनम् ।
साङ्ख्यं प्रकुरुते चैव प्रकृतिं च प्रचक्षते ॥ ४२

तत्त्वानि च चतुर्विंशत् परिसङ्ख्याय तत्त्वतः ।
साङ्ख्याःसह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ॥ ४३

पञ्चविंशोऽप्रबुद्धात्मा बुध्यमान इति स्मृतः ।
यदा तु बुध्यते त्मानं तदा भवति केवलः ॥ ४४

सम्यग्दर्शनमेतावद् भाषितं तव तत्त्वतः ।
एवमेतद्विजानन्तस् साम्यतां प्रतियान्त्युत ॥ ४५

सम्यङ्निदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा ।
गुणतत्त्वान्यथैतानि निर्गुणस्त्वन्यथा भवेत् ॥ ४६

न त्वेवं वर्तमानानाम् आवृत्तिर्विद्यते पुनः ।
विद्यतेऽक्षरभावत्वं [2]यो नैवं वेत्ति पार्थिव ॥ ४७

पश्येरन्नेकमतयो न सम्यक् तेषु दर्शनम् ।

---

1. ग—अर्धद्वयं नास्ति
2. ख—परं परममव्ययम्; घ—अपरं परमव्ययम्

तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिन्दम ॥ ४८

सर्वमेतद्विजानन्तो नासर्वस्य प्रबोधनात् ।
व्यक्तीभूता भविष्यन्ति व्यक्तस्य वशवर्तिनः ॥ ४९

सर्वमव्यक्तमित्युक्तम् असर्वः पञ्चविंशकः ।
य एनमभिजानन्ति न भयं तेषु विद्यते ॥ ५०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
[ अस्मिन्नध्याये ५० श्लोकाः ]

## ॥ नवत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विद्याविद्यादिप्रतिपादकवसिष्ठकरालजनक-संवादानुवादः ॥

वसिष्ठः—

साङ्ख्यदर्शनमेतावद् उक्तं ते नृपसत्तम ।
विद्याविद्ये त्विदानीं मे त्वं निबोधानुपूर्वशः ॥ १

[1]अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मि वै ।
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम् ॥ २

1. ख-घ—अमेयमाहु

[1]एकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववित् ।
[2]परस्परमविद्या वै तं निबोधानुपूर्वशः ॥ २
यथोक्तमृषिभिस्तात साङ्ख्यस्यास्य निदर्शनम् ॥ ३॥

कर्मेन्द्रियाणां सर्वेषां विद्या बुद्धीन्द्रियं स्मृतम् ।
बुद्धीन्द्रियाणां च तथा विशेषा इति नश्श्रुतम् ॥ ४॥

विशेषेण मनस्तेषां विद्यामाहुर्मनीषिणः ।
मनसः पञ्च भूतानि विद्या इत्यभिचक्षते ॥ ५॥

अहङ्कारस्तु भूतानां पञ्चानां नात्र संशयः ।
अहङ्कारस्य च तथा बुद्धिर्विद्या नरेश्वर ॥ ६॥

बुद्धेः प्रकृतिरव्यक्तं तत्त्वानां परमेश्वरम् ।
विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमस्स्मृतः ॥ ७॥

अव्यक्तस्य परं प्राहुर् विद्यां वै पञ्चविंशकम् ।
सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव ॥ ८॥

ज्ञानमव्यक्तमित्युक्तं ज्ञेयं वै पञ्चविंशकम् ।
तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशकः ॥ ९॥

विद्याविद्येऽर्थतत्त्वेन मयोक्ते ते विशेषतः ।
अक्षरं च क्षरं चैव तदुक्तं तन्निबोध मे ॥ १०॥

---

1. ब—नास्तीदमर्धम्
2. ग—परं परं च विद्या वै तन्निबो

उभावेतौ क्षरावुक्तावुभावेतौ न चाक्षरौ ।
कारणं तु प्रवक्ष्यामि यथाज्ञानं तु तत्त्वतः ॥ ११॥

अनादिनिधनावेतावुभावेवेश्वरौ मतौ ।
तत्त्वसंज्ञावुभावेतौ प्रोच्येते ज्ञानचिन्तकैः ॥ १२॥

सर्गप्रलयधर्मित्वाद् अव्यक्तं प्राहुरक्षरम् ।
तदेतद्गुणसर्गाय विकुर्वाणं पुनः पुनः ॥ १३॥

गुणानां महदादीनाम् उत्पद्यन्ति परम्परा ।
अधिष्ठानात् क्षेत्रमाहुर् एतत्तत् पञ्चविंशकम् ॥ १४॥

[1]यदा तु गुणजालं तद् अव्यक्तात्मनि सङ्क्षिपेत् ।
तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते ॥ १५॥

गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् ।
क्षेत्रज्ञोऽपि यदा तात तत् क्षेत्रे सम्प्रलीयते ॥ १६॥

तदाऽक्षरत्वं प्रकृतिर् गच्छते गुणसंज्ञिता ।
निर्गुणत्वं च वैदेह गुणेष्वप्रतिवर्तनात् ॥ १७॥

एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षये ।
प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम ॥ १८॥

क्षरो भवत्येष यदा तदा गुणवतीमथ ।
प्रकृतिं त्वभिजानाति निर्गुणत्वं तथाऽऽत्मनः ॥ १९॥

---

1. ख-घ—यदा जालं तदा व्यक्तोऽपरमात्मनि सङ्क्षिपेत् । [पाठान्तरम्]

तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ॥ २०
अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान् ।
तदैषा त्वन्यतामेति न च मिश्रकतां व्रजेत् ॥ २१
प्रकृत्या चैष राजेन्द्र न मिश्रोऽन्यस्य दृश्यते ॥ २१॥
यदा तु गुणजालं तत् प्राकृतं विजुगुप्सते ।
पश्यते चापरं पश्यं तदा पश्यन् न संस्वजेत् ॥ २२॥
किमहं कृतवानेवं योऽहं कालमिमं जनम् ।
[1]मत्स्यो जालं ह्यविज्ञानाद् अनुवर्तितवांस्तथा ॥ २३॥
अहमेव हि सम्मोहाद् अन्यमन्यं जनाज्जनम् ।
मत्स्यो यथोदकज्ञानाद् अनुवर्तितवानिह ॥ २४॥
मत्स्योऽन्यत्वमथो ज्ञानाद् उदकादभिमन्यते ।
आत्मनस्तद्वदज्ञानाद् अन्यत्वं चैव वेद्म्यथ ॥ २५॥
ममास्तु धिगबुद्धस्य योऽहमज्ञ इमं पुनः ।
अनुवर्तितवान् मोहाद् अन्यमन्यं जनाज्जनम् ॥ २६॥
अयमत्र भवेद्बन्धुर् अनेन सह मे क्षमम् ।
साम्यमेकत्वतां यातो यादृशस्तादृशस्त्वहम् ॥ २७॥
तुल्यतामिह पश्यामि सदृशोऽहमनेन वै ।

1. ग—यथा मत्स्योदकं जानन्ननुवर्तितवांस्तथा । [ पाठान्तरम् ]
ख-घ—यथा मत्स्योदकज्ञानाद्

[1]अयं हि विमलोऽव्यक्तम् अहमीदृशकस्तथा ॥ २८॥
सोऽहमज्ञानसम्मोहाद् अज्ञया सम्प्रवृत्तवान् ।
ससङ्गया हि निस्सङ्गस् स्थितः कालमिमं त्वहम् ॥ २९॥
अनयाऽहं वशीभूतः कालमेतं न बुद्धवान् ।
उच्चमध्यमनीचानां तामहं कथमावसे ॥ ३०॥
सहानया यया चेह सहवासमिमं कथम् ।
गच्छाम्यबुधभावत्वाद् एषेदानीं स्थिरीभवेत् ॥ ३१॥
सहवासं न यास्यामि कालमेतं हि वञ्चनात् ।
वञ्चितोऽस्म्यनया यद्धि निर्विकारो विकारया ॥ ३२॥
न चायमपराधोऽस्या अपराधो ह्ययं मम ।
योऽहमत्राभवं सक्तः पराङ्मुखमुपस्थितः ॥ ३३॥
अतोऽस्मि बहुरूपासु स्थितो मूर्तिष्वमूर्तिमान् ।
अमूर्तिश्चापि मूर्त्यात्मा ममत्वेन प्रधर्षितः ॥ ३४॥
प्रकृतेरनयत्वेन तासु तास्विह योनिषु ।
निर्ममस्य ममत्वेन किं कृतं तासु तासु च ॥ ३५॥
योनीषु वर्तमानेन नष्टसंज्ञेन चेतसा ।
न ममात्रानया कार्यम् अहङ्कारकृतात्मना ॥ ३६॥
आत्मानं बहुधा कृत्वा सेयं भूयो युनक्ति·माम् ।

1. ग—अहं हि

इदानीमेव बुद्धोऽस्मि निर्ममो निरहङ्कृतः ॥ ३७॥
ममत्वमनया नित्यम् अहङ्कारकृतात्मकम् ।
अवेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ॥ ३८॥
अनेन साम्यं यास्यामि नानयाऽहमचेतसा ।
क्षमं मम सहानेन नैकत्वमनया सह ॥ ३९॥
एवं परमसम्बोधात् पञ्चविंशोऽनुबुद्धवान् ।
अक्षरत्वं निगच्छेत त्यक्त्वा क्षरमनामयम् ॥ ४०॥
अव्यक्तं व्यक्तधर्माणं सगुणं निर्गुणं तथा ।
निर्गुणं प्रथमं दृष्ट्वा तादृग्भवति मैथिल ॥ ४१॥
अक्षरक्षरयोरेतद् उक्तं तव निदर्शनम् ।
मयेदं ज्ञानसम्पन्नं यथाश्रुतिनिदर्शनात् ॥ ४२॥
निस्सन्दिग्धं च सूक्ष्मं च विबुद्धं विमलं तथा ।
प्रवक्ष्यामि तु ते भूयस् तन्निबोध यथाश्रुतम् ॥ ४३॥
साङ्ख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात् ।
यदेव साङ्ख्यशास्त्रोक्तं योगदर्शनमेव तत् ॥ ४४॥
प्रबोधनकरं ज्ञानं साङ्ख्यानामवनीपते ।
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ ४५॥
[1]बृहच्चैव हि तच्छास्त्रम् इत्याहुः कुशला जनाः ।

1. पृथक् चैव हि

अस्मिंश्च शास्त्रे योगानां पुनर्दधि पुनश्शरः ॥ ४६॥

पञ्चविंशात् परं तत्त्वं न पश्यति नराधिप ।
साङ्ख्यानां तु परं तन्त्रं यथावदनुवर्णितम् ॥ ४७॥

बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ।
बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ॥ ४८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
[ अस्मिन्नध्याये ४८॥ श्लोकाः ]

---

## ॥ एकनवत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति बुद्धाबुद्धस्वरूपनिरूपकवसिष्ठकरालजनक-संवादानुवादसमापनम् ॥

---

वसिष्ठः—

अप्रबुद्धमथाव्यक्तम् इमं गुणविधिं शृणु ।
गुणान् धारयते ह्येषा सृजत्याक्षिपते तथा ॥ १

अजस्रं त्विह क्रीडार्थं विकुर्वन्ति नराधिप ।
आत्मानं बहुधा कृत्वा तान्येव तु विचक्षते ॥ २

एतदेवं विकुर्वाणं बुध्यमानोऽनुबुध्यते ।

अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ ३

न त्वेनं बुध्यतेऽव्यक्तं सगुणं वाऽथ निर्गुणम् ।
कदाचित्तेन खल्वेतद् आहुरप्रतिबुद्धकम् ॥ ४

बुध्यते यदि वाऽव्यक्तम् एतद्वै पञ्चविंशकम् ॥ ४॥

बुध्यमानो भवत्येष सङ्गात्मक इति श्रुतिः ।
अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युत ॥ ५॥

अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्युत ।
पञ्चविंशकमात्मानं न चासावपि बुध्यते ॥ ६॥

षड्विंशं विमलं बुद्धम् अप्रमेयं सनातनम् ।
स तु तं पञ्चविंशं च चतुर्विंशं च बुध्यते ॥ ७॥

दृश्यादृश्ये ह्यनुगतम् उभावेव महाद्युती ।
अव्यक्तं न तु तद्ब्रह्म बुध्यते तात केवलम् ॥ ८॥

केवलं पञ्चविंशं तु चतुर्विंशोऽनुपश्यति ।
बुध्यमानो यदात्मानम् अन्योऽहमिति मन्यते ॥ ९॥

तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ।
बुध्यते परमं बुद्धं विशुद्धमचलोपमम् ॥ १०॥

षड्विंशं राजशार्दूल तथा बुद्धत्वतां व्रजेत् ।
ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मिणम् ॥ ११॥

निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् ।
ततः केवलधर्मोऽसौ भवत्यव्यक्तदर्शनात् ॥ १२॥

केवलेन समागम्य विमुक्तो त्मानमाप्नुयात् ।
एतं वै तत्त्वमित्याहुर् निस्तत्त्वमजरामरम् ॥ १३॥

तत्त्वसंश्रयणादेतत् तत्त्ववन्न च मैथिल ।
पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः ॥ १४॥

न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वेष बुद्धिमान् ।
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य लक्षणम् ॥ १५॥

षड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयम् ॥ १६॥

षड्विंशेन प्रबुद्धेन बुध्यमानो ह्यबुद्धिमान् ।
एवं नानात्वमित्युक्तं साङ्ख्यश्रुतिनिदर्शनात् ॥ १७॥

चेतनेन समेतस्य पञ्चविंशतिकस्य च ।
एकत्वं चैव तत्त्वस्य यदा बुद्ध्वा न बुध्यते ॥ १८॥

बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्मा भवत्येष निस्सङ्गात्मा नराधिप ॥ १९॥

निस्सङ्गात्मानमासाद्य षड्विंशकमजं विभुम् ।
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्धि बुध्यते ॥ २०॥

[1]चतुर्विंशमगाधं च षड्विंशस्य प्रबोधनात् ।
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ २१॥

प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात् ।
नानात्वैकत्वमेतावद् द्रष्टव्यं शास्त्रदृष्टिभिः ॥ २२॥

मशकोदुम्बरे यद्वद् अन्यत्वं तद्वदेतयोः ।
मत्स्योऽम्भसि यथा तद्वद् अन्यत्वमुपलभ्यते ॥ २३॥

एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एतद्धि मोक्ष इत्युक्तम् अव्यक्तज्ञानसंज्ञितम् ॥ २४॥

पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तते ।
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् ॥ २५॥

सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मी च भवत्येष समेत्य वै ॥ २६॥

विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ २७॥

वियोगधर्मिणा चैव वियोगात्मा भवत्यपि ।
[2]विमोक्षिणा विमोक्षी च समेत्येह तथा भवेत् ॥ २८॥

शुद्धधर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।

---

1. अ-क-घ—बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल । [अधिकः पाठः]
2. अ-क-घ—वियुक्तधर्मिणा चैव वियुक्तात्मा भवत्यथ । [अधिकः पाठः]

विमलात्मा च भवति समेत्य विमलात्मना ॥ २९॥
केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमुपाश्नुते ॥ ३०॥

एतावदेतत् कथितं मया ते
तथ्यं महाराज यथार्थतत्त्वम् ।
अमत्सरत्वं प्रतिगृह्य चार्थं
सनातनं ब्रह्म विशुद्धमाद्यम् ॥ ३१॥

नावेदनिष्ठस्य जनस्य राजन्
प्रदेयमेतत् परमं त्वया भवेत् ।
विवित्समानाय विबोधकारकं
प्रबोधहेतोः प्रणतस्य शासनम् ॥ ३२॥

न देयमेतच्च तथाऽनृतात्मने
शठाय क्लीबाय न जिह्मबुद्धये ।
न पण्डितज्ञानपरोपतापिने
देयं त्वयेदं विनिबोध यादृशे ॥ ३३॥

श्रद्धान्विताताथ गुणान्विताय
परापवादाद्विरताय नित्यम् ।
विशुद्ध[1]योगाय बुधाय चैव
क्रियावतेऽथ क्षमिणे हिताय ॥ ३४॥

---

1. ख—यौनाय

विविक्तशीलाय विधिप्रियाय
विवादहीनाय बहुश्रुताय ।
द्विजातये चैव दमक्षमान्विते
शक्ताय चैवात्मसमाय देहिनाम् ॥ ३५॥

एतैर्गुणैर्हीनतमे न देयम्
एतत् परं ब्रह्म विशुद्धमाहुः ।
न श्रेयसा योक्ष्यति तादृशे कृतं
धर्मप्रवक्तारमपात्रदानात् ॥ ३६॥

पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते
भवेत् प्रदेयं परमं नरेन्द्र ॥ ३७॥

कराल मा ते भयमस्ति किञ्चिद्
एतच्छ्रुतं ब्रह्म परं त्वयाऽद्य ।
यथावदुक्तं परमं पवित्रं
विशोकमत्यन्तमनादिमध्यम् ॥ ३८॥

अगाधजन्मामरणं च राजन्
निरामयं [1]वीतभयं शिवं च ।

1. अ—नित्यमजं

समीक्ष्य मोहं त्यज चाऽद्य सर्वं
ज्ञानस्य तत्त्वार्थमिमं विदित्वा ॥ ३९॥

अवाप्तमेतद्धि पुरा सनातना-
द्धिरण्यगर्भाद्गुवतो नराधिप ।
प्रसाद्य यत्नेन तमुग्रतेजसं
सनातनं ब्रह्म यथाऽद्य वै त्वया ॥ ४०॥

पृष्टो यथाऽद्यास्मि त्वया नरेन्द्र
तथा मयेदं त्वयि चोक्तमद्य ।
यथाऽवाप्तं ब्रह्मणो मे नरेन्द्र
महाज्ञानं मोक्षविदां नरेन्द्र ॥ ४१॥

भीष्मः—

[1]एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः ।
पञ्चविंशो महाराज परमर्षिनिदर्शनात् ॥ ४२॥

पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च ।
न यो बुध्यति तत्त्वेन बुध्यमानोऽजरामरम् ॥ ४३॥

एतन्निश्श्रेयस्करं ज्ञानं ते परमं मया ।
कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप ॥ ४४॥

हिरण्यगर्भादृषिणा वसिष्ठेन महात्मना ।

1. ख—अर्धंद्वयं नास्ति

वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ॥ ४५॥

नारदाद्विदितं मह्यम् एतद्ब्रह्म सनातनम् ।
मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत् परमं पदम् ॥ ४६॥

येन क्षराक्षरे वित्ते भयं तस्य न विद्यते ।
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव ॥ ४७॥

अविज्ञानाच्च मूढात्मा पुनः पुनरुपाद्रवत् ।
प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ॥ ४८॥

देवलोकं तथा तिर्यङ्मानुष्यमपि चाश्नुते ।
यदि बुध्यति कालेन तस्मादज्ञानसागरात् ॥ ४९॥
[1]उत्तीर्णोऽस्मादगाधात् स परमाप्नोति शोभनम् ॥ ५०॥

अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते ।
अहन्यहनि मज्जन्ति यत्र भूतानि भारत ॥ ५१॥

तस्मादगाधादव्यक्ताद् उत्तीर्णस्त्वं सनातनात् ।
तस्मात् त्वं विरजाश्चैव वितमस्कश्च पार्थिव ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
[ अस्मिन्नध्याये ५२ श्लोकाः ]

---

1. अ-क-ख-घ—नास्तीदमर्धम्

## ॥ द्विनवत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्रेयस्साधनधर्मप्रतिपादकजनकानुशासनानुवादः ॥

भीष्मः—

मृगयां विचरन् कश्चिद् विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रम् ऋषिं वंशधरं भृगोः ॥ १

तमासीनमुपासीनः प्रणम्य शिरसा मुनिम् ।
पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥ २

वसुमान्—

भगवन् किमिदं श्रेयः प्रेत्य वाऽपीह वा भवेत् ।
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ॥ ३

भीष्मः—

सत्कृत्य परिपृष्टस्तु सुमहात्मा महातपाः ।
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥ ४

ऋषिः—

मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि ।
भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः ॥ ५

धर्मस्सदा हितः पुंसां धर्मश्चैवाश्रयस्सताम् ।
धर्माल्लोकास्त्रयस्तात प्रवृत्तास्सचराचराः ॥ ६

स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥ ७

यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना ।
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ॥ ८

[1]असता धर्मकामेन विशुद्धं कर्म दुष्करम् ।
[2]सता तु धर्मकामेन सुकरं कर्म दुष्करम् ॥ ९

वने ग्राम्यसुखाचारो यथा ग्राम्यस्तथैव सः ।
ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥ १०

मनोवाक्कर्मगे धर्मे कुरु श्रद्धां समाहितः ।
निवृत्तौ वा प्रवृत्तौ वा सम्प्रधार्य गुणागुणान् ॥ ११

नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता ।
प्रार्थितं [3]व्रतशौचाभ्यां सत्कृतं देशकालयोः ॥ १२

शुभेन विधिना लब्धम् अर्हाय प्रतिपादयेत् ।
क्रोधमुच्छिद्य दत्त्वा च नानुतप्येन्न कीर्तयेत् ॥ १३

अनृशंसश्शुचिर्दान्तस् सत्यवागार्जवे स्थितः ।
योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्विजः ॥ १४

संस्कृता चैकपत्नी च जात्या योनिरिहेष्यते ।

1. ब—नास्तीदमर्धम्  2. ग—इदमर्धं नास्ति
3. ग—ब्राह्मणेभ्यश्च

ऋग्यजुस्सामगो विद्वान् षट्कर्मा पात्रमुच्यते ॥ १५
स एव धर्मस्सोऽधर्मस् तं तं प्रति नरं भवेत् ।
पात्रकर्मविशेषेण देशकालाववेक्ष्य च ॥ १६
लीलयाऽल्पं यथा गात्रात् प्रमृज्याद्रजसः पुमान् ।
बहुयत्नेन महता पापनिर्हरणं तथा ॥ १७
विरिक्तस्य यथा सम्यग् घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्य धर्मस्सुखावहः ॥ १८
मानसं सर्वभूतेषु वर्तते वै शुभाशुभे ।
अशुभेभ्यस्समाक्षिप्य शुभेष्वेवावधारय ॥ १९
सर्वं सर्वेण सर्वत्र क्रियमाणं च पूजय ।
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् ॥ २०
अधृतात्मन् धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान् भव ।
अप्रशान्तः प्रशाम्य त्वम् अप्राज्ञः प्राज्ञवच्चर ॥ २१
तेजसा शक्यते प्राप्तुम् उपायस्सहचारिणा ।
इह च प्रेत्य च श्रेयस् तस्य मूलं धृतिः परा ॥ २२
राजर्षिरधृतिस्स्वर्गात् पतितो हि महाभिषक् ।
ययातिः क्षीणपुण्योऽपि धृत्या लोकानवाप्तवान् ॥ २३
तपस्विनां धर्मभृतां विदुषां चोपसेवनात् ।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे ॥ २४

भीष्मः—

स तु स्वभावसम्पन्नस् तच्छ्रुत्वा मुनिभाषितम् ।
विनिवर्त्य मनः कामाद् धर्मे बुद्धिं चकार ह ॥ २५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
[ अस्मिन्नध्याये २५ श्लोकाः ]

---

## ॥ त्रिनवत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भूतसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्य-संवादानुवादः ॥

---

युधिष्ठिरः—

धर्माधर्मविमुक्तं यद् विमुक्तं सर्वसंश्रयात् ।
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः ॥ १

यच्छिवं नित्यमभयं नित्यं चाक्षरमव्ययम् ।
शुचि नित्यमनायासं तद्भवान् वक्तुमर्हति ॥ २

भीष्मः—

अत्र ते वर्तयिष्येऽहम् इतिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ ३

याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः ।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदां वरः ॥ ४

जनकः—

कतीन्द्रियाणि विप्रर्षे कति प्रकृतयस्स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ॥ ५

प्रभवं चाप्ययं चैव कालसङ्ख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ॥ ६

अज्ञानात् परिपृच्छामि त्वं हि ज्ञानमयो निधिः ।
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ॥ ७

याज्ञवल्क्यः—

श्रूयतामवनीपाल यदेवमनुपृच्छसि ।
योगानां परमं ज्ञानं साङ्ख्यानां च विशेषतः ॥ ८

न तवाविदितं किञ्चिन्मां तु जिज्ञासते भवान् ।
पृष्टेन चापि वक्तव्यम् एष धर्मस्सनातनः ॥ ९

अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ।
[1]अथ सप्त तु व्यक्तानि प्राहुरध्यात्मचिन्तकाः ॥ १०

अव्यक्तश्च महांश्चैव तथाऽहङ्कार एव च ।
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ॥ ११

---

1. ग—आसां तु सप्त व्यक्ता वै प्रा

एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ।
श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ॥ १२

शब्दस्स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ १३

एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥ १४

मनष्षोडशमं प्राहुर् अध्यात्मगतिचिन्तकाः ।
त्वं चैवान्ये च विद्वांसस् तत्त्वबुद्धिविशारदाः ॥ १५

अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव ।
प्रथमं सर्गमित्येवं प्राहुः प्राधानिकं बुधाः ॥ १६

महतश्चाप्यहङ्कार उत्पद्यति नराधिप ।
द्वितीयं सर्गमित्याहुर् एतं बुद्ध्यात्मकं नृप ॥ १७

अहङ्काराच्च सम्भूतं मनो भूतगुणात्मकम् ।
तृतीयस्सर्ग इत्येष आहङ्कारिक उच्यते ॥ १८

मनसस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतन्मानसं [1]चिन्तनात्मकम् ॥ १९

शब्दस्स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
पञ्चमं सर्गमित्याहुर् भौतिकं भूतचिन्तकाः ॥ २०

---

1. क-ख-घ—परिचक्षते

श्रोत्रं त्वक् चापि चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
सर्गं तु षष्ठमित्याहुर् बहुचिन्तात्मकं नृप ॥ २१

[1]अधस्स्रोतेन्द्रियग्राम उत्पद्यति नराधिप ।
सप्तमं सर्गमित्याहुर् एतदैन्द्रियकं नृप ॥ २२

ऊर्ध्वं स्रोतस्तथा तिर्यग् उत्पद्यति नराधिप ।
अष्टमं सर्गमित्याहुर् [2]एतदार्जवकं स्मृतम् ॥ २३

तिर्यक् स्रोतस्त्वधस्स्रोताद् उत्पद्यति महीपते ।
नवमं सर्गमित्येतद् आहुरार्जवकं बुधाः ॥ २४

एतानि नवसर्गाणि तत्त्वानि च नराधिप ।
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनात् ॥ २५

अत ऊर्ध्वं महाराज गुणस्यैकस्य तत्त्वतः ।
महात्मभिरनुप्रोक्तां कालसङ्ख्यां निबोध मे ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
[ अस्मिन्नध्याये २६ श्लोकाः ]

---

1. ख—अर्धद्वयं नास्ति 2. ग—इतः चत्वारः पादा न सन्ति

## ॥ चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति अण्डादिसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥



याज्ञवल्क्यः—

अव्यक्तस्य नरश्रेष्ठ कालसङ्ख्यां निबोध मे ।
पञ्चकल्पसहस्राणि द्विगुणान्यहरुच्यते ॥ १
[1]रात्रिमेतावतीं चास्य प्राहुरध्यात्मचिन्तकाः ।
सृजत्योषधिमेवाग्रे जीवनं सर्वदेहिनाम् ॥ २
ततो ब्रह्माणमसृजद्धिरण्याण्डसमुद्भवम् ।
सा मूर्तिस्सर्वभूतानाम् इत्येवमनुशुश्रुमः ॥ ३
संवत्सरमुषित्वाऽण्डे निष्क्रम्य च महामुनिः ।
सन्दधेऽर्धं महीं कृत्स्नां दिवमर्धं प्रजापतिः ॥ ४
द्यावापृथिव्यावित्येतद् राजन् वेदेषु पठ्यते ।
तयोश्शकलयोर्मध्यम् आकाशमकरोत् प्रभुः ॥ ५
एतस्यापि च सङ्ख्यातं वेदवेदाङ्गपारगैः ।
दशकल्पसहस्राणि पादोनान्यहरुच्यते ॥ ६
रात्रिमेतावतीं चास्य प्राहुरध्यात्मचिन्तकाः ।

1. ग—रात्रिरेतावती चास्य प्रतिबुध्य नराधिप । [पाठान्तरम्]

सृजत्यहङ्कारमृषिर् भूतं दिव्यात्मकं तथा ॥ ७

चतुरश्चापरान् पुत्रान् देहात् पूर्वं महानृषिः ।
ते वै पितृभ्यः पितरश् श्रूयन्ते राजसत्तम ॥ ८

देवाः पितॄणां च सुता देवैर्लोकास्समावृताः ।
चराचरा नरश्रेष्ठ इत्येवमनुशुश्रुमः ॥ ९

परमेष्ठी त्वहङ्कारस् सृजन् भूतानि पञ्चधा ।
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ॥ १०

एतस्यापि निशामाहुस् तृतीयमिह कुर्वतः ।
पञ्च कल्पसहस्राणि तावदेवाहरुच्यते ॥ ११

शब्दस्स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ॥ १२

यैराविष्टानि भूतानि अहन्यहनि पार्थिव ।
अन्योन्यं स्पृहयन्त्येते अन्योन्यस्याहिते रताः ॥ १३

अन्योन्यमभिपद्यन्ते अन्योन्यस्पर्धिनस्तथा ।
ते बध्यमाना अन्योन्यं गुणैर्हारिभिरव्ययाः ॥ १४

इहैव परिवर्तन्ते तिर्यग्योनिप्रवेशिनः ।
त्रीणि कल्पसहस्राणि एतेषामहरुच्यते ॥ १५

रात्रिरेतावती चैव मनसश्च नराधिप ।

मनश्चरति राजेन्द्र चरितं सर्वमिन्द्रियैः ॥ १६
न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति ।
चक्षुः पश्यति रूपाणि मनसा तु न चक्षुषा ॥ १७
मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति ।
तथेन्द्रियाणि सर्वाणि पश्यन्तीत्यभिचक्षते ॥ १८
[1]न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति ।
मनस्युपरते राजन्निन्द्रियोपरमो भवेत् ॥ १९
न चेन्द्रियेपूपरमे मनस्युपरमो भवेत् ।
एवं मनःप्रधानानि इन्द्रियाणि विभावयेत् ॥ २०
इन्द्रियाणां हि सर्वेषाम् ईश्वरं मन उच्यते ।
एतद्वशे हि भूतानि सर्वाणीह महायशः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

1. ग—इदमर्धं नास्ति

## ॥ पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जगत्प्रलयप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥

याज्ञवल्क्यः—

तत्त्वानां सर्गसङ्ख्या च कालसङ्ख्या तथैव च ।
मया प्रोक्ताऽनुपूर्व्येण संहारमपि मे शृणु ॥ १

यथा संहरते जन्तून् ससर्ज च पुनः पुनः ।
अनादिनिधनो ब्रह्मा नित्य ईश्वर एव च ॥ २

अहःक्षयमथो बुद्ध्वा निशि स्वप्नमनास्तथा ।
चोदयामास भगवान् अव्यक्तोऽहङ्कृतं नरम् ॥ ३

ततश्शतसहस्रांशुर् अव्यक्तेनाभिचोदितः ।
कृत्वा द्वादशधाऽऽत्मानम् आदित्यो ज्वलदग्निवत् ॥ ४

चतुर्विधं प्रजाजालं निर्दहत्याशु तेजसा ।
जराय्वण्डस्वेदजानि उद्भिज्जं च नराधिप ॥ ५

एतदुन्मेषमात्रेण विनष्टं स्थाणुजङ्गमम् ।
कूर्मपृष्ठसमा भूमिर् भवत्यथ [1]समन्ततः ॥ ६

जगद्दग्ध्वाऽमितबलः केवलां जगतीं ततः ।

1. घ—न संशयः

अम्भसा बलिना क्षिप्रम् आपूर्यति समन्ततः ॥ ७
ततः कालाग्निमासाद्य तदम्भो याति सङ्क्षयम् ।
विनष्टेऽम्भसि राजेन्द्र जाज्वलत्यनलो महान् ॥ ८

तमप्रमेयातिबलं ज्वलमानं विभावसुम् ।
ऊष्माणं सर्वभूतानां सप्तार्चिषमथाञ्जसा ॥ ९

भक्षयामास बलवान् वायुरष्टात्मको बली ।
विचरन्नमितप्राणस् तिर्यगूर्ध्वमधस्तथा ॥ १०

तमप्रतिबलं भीमम् आकाशं ग्रसते पुनः ।
[1]आकाशमप्रतिबलं मनो ग्रसति चारिकम् ॥ ११

मनो ग्रसति सर्वात्मा सोऽहङ्कारः प्रजापतिः ।
अहङ्कारो महानात्मा भूतभव्यभविष्यवित् ॥ १२

तमप्यनुपमात्मानं विश्वशम्भुः प्रजापतिः ।
अणिमा लघिमा प्राप्तिर् ईशानो ज्योतिरव्ययः ॥ १३

सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।
सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १४

हृदयं सर्वभूतानां पर्वणाऽङ्गुष्ठमात्रकः ।
अणुर्ग्रसत्यनन्तं हि महात्मा विश्वमीश्वरः ॥ १५

1. ग—आकाशमप्यतिनदन्मनो ग्रसति

ततस्समभवत् सर्वम् अक्षयाऽव्ययमव्रणम् ।
भूतभव्यभविष्याणां स्रष्टारमनघं तथा ॥ १६

एषोऽप्यव्ययस्ते राजेन्द्र यथावत् परिभाषितः ।
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ षण्णवत्यधिकद्विशततमोऽध्यायः ॥



याज्ञवल्क्येन जनकं प्रति इन्द्रियतद्विषयतदभिमानिदेवताकथनम् ॥
१ ॥ तथा सत्त्वादिगुणत्रयकार्यधर्मप्रतिपादनम् ॥ २ ॥

---

याज्ञवल्क्यः—

पादावध्यात्ममित्याहुर् ब्राह्मणास्तत्त्वदर्शिनः ।
गन्तव्यमधिभूतं तु विष्णुस्तत्राधिदैवतम् ॥ १

पायुरध्यात्ममित्याहुर् यथातत्त्वार्थदर्शिनः ।
विसर्गमधिभूतं तु मित्रस्तत्राधिदैवतम् ॥ २

उपस्थोऽध्यात्ममित्याहुर् यथायोगनिदर्शिनः ।
अधिभूतं तथाऽऽनन्दो दैवतं च प्रजापतिः ॥ ३

हस्तावध्यात्ममित्याहुर् [1]यथाश्रुतिनिदर्शिनः ।
कर्तव्यमधिभूतं तु [2]इन्द्रस्तत्राधिदैवतम् ॥ ४
[3]वागध्यात्ममिति प्राहुर् यथाश्रुतिनिदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ ५
चक्षुरध्यात्ममित्याहुर् यथायोगनिदर्शिनः ।
रूपमत्राधिभूतं तु सूर्यस्तत्राधिदैवतम् ॥ ६
श्रोत्रमध्यात्ममित्याहुर् [4]यथाशास्त्रनिदर्शिनः ।
शब्दमत्राधिभूतं तु दिशस्तत्राधिदैवतम् ॥ ७
जिह्वामध्यात्ममित्याहुर् यथातत्त्वनिदर्शिनः ।
रस एवाधिभूतं तु आपस्तत्राधिदैवतम् ॥ ८
घ्राणमध्यात्ममित्याहुर् यथाश्रुतिनिदर्शिनः[5] ।

---

1. ग—यथासांख्यनिदर्शनम्

2. ख—चत्वारः पादा न सन्ति

घ—आदानमधिभूतं तु विष्णुस्; अ—शब्दमत्राधिभूतं तु दिश
वागध्यात्ममिति प्राहुर्योगतत्त्वार्थवेदिनः ।
वचनं त्वधिभूतं तु अग्निस्तत्राधिदैवतम् ॥
त्वगध्यात्ममिति प्राहुः ऋषिस्तत्त्वावदर्शिनः ।
स्पर्शस्तत्राधिभूतं तु वायुस्तत्राधिदैवतम् ॥ [ अधिकः पाठः ]

3. अ—अर्धद्वयं नास्ति

4. ग—यथाश्रुतिनिदर्शनम्; घ—योगिनस्तत्त्वदर्शिनः

5. घ—घ्रातव्यमधिभूतं तु अश्विनावधिदैवतम् ।
मनस्त्वध्यात्ममित्याहुर्योगिनस्तत्त्वचिन्तकाः ॥ [ अधिकः पाठः ]

[1]गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम् ॥ ९
त्वगध्यात्ममिति प्राहुस् तत्त्वबुद्धिविशारदाः ।
स्पर्श एवाधिभूतं तु पवनश्चाधिदैवतम् ॥ १०
मनोऽध्यात्ममिति प्राहुर् यथाश्रुतिनिदर्शनम् ।
[2]मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम् ॥ ११
आहङ्कारिकमध्यात्मम् आहुस्तत्त्वनिदर्शिनः ।
अभिमानोऽधिभूतं तु [3]विरिञ्चोऽत्राधिदैवतम् ॥ १२
बुद्धिरध्यात्ममित्याहुर् यथा[4]वेदनिदर्शिनः ।
बोद्धव्यमधिभूतं तु क्षेत्रज्ञोऽत्राधिदैवतम् ॥ १३
एषा ते व्यक्तितो राजन् विभूतिरनुवर्णिता ।
आदौ मध्ये तथाऽन्ते च यथावत् तत्त्वहेतुभिः ॥ १४
प्रकृतिर्गुणान् विकुरुते स्वच्छन्देनात्मकाम्यया ।
क्रीडनार्थं महाराज शतशोऽथ सहस्रशः ॥ १५
यथा दीपसहस्राणि दीपान् मर्त्या प्रकुर्वते ।
प्रकृतिस्सा विकुरुते पुरुषस्य गुणान् बहून् ॥ १६
सत्यं दानमनुद्वेगः प्रीतिः प्राकाश्यमेव च ।

---

1. अर्धचतुष्टयं ग-कोश एकस्मिन्नेव वर्तते
2. घ—अर्धद्वयं नास्ति
3. ग—रुद्रश्चात्राधिदैवतम्
4. घ—वेदार्थवेदिनः

सुखं शुद्धत्वमारोग्यं सन्तोषश्श्रद्दधानता ॥ १७
अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता ।
समता सत्यमानृण्यम् मार्दवं ह्रीरचापलम् ॥ १८
शौचमार्तव[1]माचारम् अलौल्यं हृद्यसम्भ्रमः ।
इष्टापूर्तविशेषाणां कृतानामविकत्थनम् ॥ १९
दानेन चानुग्रहणम् अस्पृहा परमार्थतः ।
सर्वभूतदया चैव सत्त्वस्यैते गुणास्स्मृताः ॥ २०
रजोगुणानां सङ्घातो रूपमैश्वर्यविग्रहौ ।
अत्यागित्वमकारुण्यं सुखदुःखोपसेवनम् ॥ २१
परापवादेषु रतिर् विवादानां च सेवनम् ।
अहङ्कारस्त्वसत्कारश् चिन्ता वैरोपसेवनम् ॥ २२
[2]परिभाषोपहरणं ह्रीनाशोऽनार्जवं तथा ।
भेदः परुषता चैव कामक्रोधौ मदस्तथा ॥ २३
दर्पो द्वेषोऽतिवादश्च एते प्रोक्ता रजोगुणाः ।
तामसानां तु सङ्घातम् प्रवक्ष्याम्युपधार्यताम् ॥ २४
मोहोऽप्रकाशस्तामिस्रम् अन्धतामिस्रसंज्ञितम् ।
मरणं त्वन्धतामिस्रं तामिस्रं क्रोध उच्यते ॥ २५

---

1. ग—माचारस्त्वपारुष्यमपैशुनम्
2. ग—परिभावोऽपहरणं ; घ—परिहासोऽपहरणं

तमसो लक्षणानीह भक्ष्याणामतिरोचनम् ।
भोजनानामपर्याप्तिस् तथा पेयेष्वतृप्तता ॥ २६

गन्धवासो विहारेषु शयनेष्वासनेषु च ।
दिवास्वप्ने विवादे च प्रमादेषु च वै रतिः ॥ २७

नृत्यवादित्रगीतानाम् अज्ञानाच्छ्रद्दधानता ।
द्वेषो धर्मविशेषाणाम् एते वै तामसा गुणाः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ सप्तनवत्यधिकद्विशततमोऽध्यायः ॥

---

याज्ञवल्क्येन जनकं प्रति सात्त्विकादितारतम्यनिरूपणम् ॥ १ ॥ जनकेन याज्ञवल्क्यं प्रति तत्त्वकथनप्रार्थना ॥ २ ॥ याज्ञवल्क्येन जनकं प्रति साङ्ख्यदर्शनकथनम् ॥ ३ ॥

---

याज्ञवल्क्यः—

एते प्रधानस्य गुणास् त्रयः पुरुषसत्तम ।
कृत्स्नस्य चैव जगतस् तिष्ठन्त्यनपगास्सदा ॥ १

शतधा सहस्रधा चैव तथा शतसहस्रधा ।

कोटिशश्च करोत्येषा प्रकृत्याऽऽत्मानमात्मना ॥ २
सात्त्विकस्योत्तमं स्थानं [1]राजसस्येह मध्यमम् ।
तामसस्याधमं स्थानं प्राहुरध्यात्मचिन्तकाः ॥ ३
केवलेनेह पुण्येन गतिमूर्ध्वामवाप्नुयात् ॥ ३॥
पुण्यपापेन मानुष्यम् अधर्मेणाप्यधोगतिम् ।
द्वन्द्वमेषां त्रयाणां तु सन्निपातं च तत्त्वतः ॥ ४॥
सत्त्वस्य रजसश्चैव तमसश्च शृणुष्व मे ॥ ५
सत्त्वस्य तु रजो [2]द्वन्द्वं रजसश्च तमस्तथा ।
तमसश्च तथा सत्त्वं सत्त्वस्याव्यक्तमेव च ॥ ६
अव्यक्तस्सत्त्वसंयुक्तो देवलोकमवाप्नुयात् ॥ ६॥
रजस्सत्त्वसमायुक्तो मानुषेषूपपद्यते ।
रजस्तमोभ्यां संयुक्तस् तिर्यग्योनिषु जायते ॥ ७॥
रजस्सत्त्वतमोभिश्च युक्तो मानुष्यमाप्नुयात् ॥ ८
पुण्यपापविमुक्तानां स्थानमाहुर्महात्मनाम् ।
शाश्वतं चाव्ययं चैवम् अचलं चाक्षरं च ह ॥ ९
ज्ञानिनां सम्भवं श्रेष्ठं स्थानमव्रणमच्युतम् ।
अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम् ॥ १०

---

1. अ-क-ख-घ—अयं पादोऽनन्तरश्च न स्तः
2. ग—द्वद्वं

अव्यक्तस्थं परं यत्तत् पृष्टस्तेऽहं नराधिप ।
स एष प्रकृतिस्थो हि [1]तत्स्थ इत्यभिधीयते ॥ ११

अचेतनश्चैव मतः प्रकृतिस्थश्च पार्थिव ।
एतेनाधिष्ठितश्चैव सृजते संहरत्यपि ॥ १२

जनकः—

अनादिनिधनावेतावुभावेव महामुने ।
अमूर्तिमन्तावचलावप्रकम्प्यौ [2]गुणागुणौ ॥ १३

अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः ।
चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः ॥ १४

त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे ।
साफल्यं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः ॥ १५

निस्तत्त्वं केवलत्वं च विनाभावं तथैव च ।
[3]दैवतानि च मे ब्रूहि देहं यान्याश्रितानि वै ॥ १६

तथैवोत्क्रमणस्थानं देहिनो वै वियुज्यतः ।
कालेन यद्धि प्राप्नोति स्थानं तद्ब्रूहि मेऽनघ ॥ १७

साङ्ख्यज्ञानं च तत्त्वेन पृथग्योगं तथैव च ।
अरिष्टानि च तत्त्वेन वक्तुमर्हसि सत्तम ॥ १८

1. क-ख-ग-घ—तस्थुर्
2. क-ख-ग-घ—गुणागुणौ
3. ग—इदमर्धं नास्ति

विदितं सर्वमेतत्ते पाणावामलकं यथा ॥* १८॥

याज्ञवल्क्यः—

न शक्यो निर्गुणस्तात गुणीकर्तुं विशां पते ।
गुणवांश्चाप्यगुणवान् यथातत्त्वं निबोध मे ॥ १९॥

गुणी हि गुणवानेव निर्गुणश्चागुणस्तथा ।
प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः ॥ २०॥

गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते ।
उपयुङ्क्ते च तानेव स चैवाज्ञस्स्वभावतः ॥ २१॥

[1]अव्यक्तस्तु न जानीते पुरुषोऽज्ञस्स्वभावतः ।
न मत्तः परमस्तीति नित्यमेवाभिमन्यते ॥ २२॥

अनेन कारणेनैतद् अव्यक्तं स्यादचेतनम् ।
नित्यत्वादक्षरत्वाच्च क्षराणां तत्त्वतोऽन्यथा ॥ २३॥

यदज्ञानेन कुरुते गुणसर्गं पुनः पुनः ।
यदात्मानं न जानीते तदव्यक्तमिहोच्यते ॥ २४॥

कर्तृत्वाच्चैव तत्त्वानां तत्त्वधर्मी तथोच्यते ।
कर्तृत्वाच्चापि सर्गाणां सर्गधर्मी तथोच्यते ॥ २५॥

कर्तृत्वाच्चैव योनीनां योनिधर्मी तथोच्यते ।

---

* ग-कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

1. घ—नास्तीदमर्धम्

[1]कर्तृत्वात् प्रकृतीनां च तथा प्रकृतिधर्मि वै ॥ २६॥
कर्तृत्वाच्चापि बीजानां बीजधर्मी तथोच्यते ।
[2]गुणानां प्रसवत्वाच्च तथा प्रसवधर्मि च ॥ २७॥
कर्तृत्वात् प्रलयानां तु तथा प्रलयधर्मि च ।
कर्तृत्वाद्भावनानां तु तथा प्रभवधर्मि च ॥ २८॥
[3]बीजत्वात् प्रकृतित्वाच्च प्रलयत्वात् तथैव च ।
उपेक्षितत्वादन्यत्वाद् अभिमानाच्च केवलम् ॥ २९॥
मन्यन्ते [4]यतयस्सिद्धा अध्यात्मज्ञा गतज्वराः ।
अनित्यं नित्यमव्यक्तम् एवमेतच्च शुश्रुमः ॥ ३०॥
अव्यक्तैकत्वमित्याहुर् नानात्वं पुरुषे तथा ।
सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः ॥ ३१॥
अन्यस्स पुरुषोऽव्यक्ताद् अध्रुवाद् ध्रुवसंज्ञकः ।
यथा मुञ्ज इषीकायां तथैवैतद्धि जायते ॥ ३२॥
अन्यं तु मशकं विद्याद् अन्यच्चोदुम्बरं तथा ।
न चोदुम्बरसंयोगे मशकस्तत्र लिप्यते ॥ ३३॥
अन्य एव तथा मत्स्यस् तथाऽन्यदुदकं स्मृतम् ।

---

1. ख—अर्धद्वयं नास्ति ;　　घ—नासीदमर्धम्
2. अ-क-ख-घ—अर्धत्रयं नास्ति
3. ख-घ—ते कर्तृत्वादिसर्गाणां सर्गधर्मी तथोच्यते ॥　[अधिकः पाठः]
4. ग—यतयश्शुद्धा अध्यात्मविगतज्वराः

न चोदकस्य स्पर्शेन मत्स्यो लिप्यति कर्हिचित् ॥ ३४॥

अन्यो ह्यग्निरुखाऽप्यन्या नित्यमेवमवेहि भोः ।

न चैव लिप्यते सोऽग्निर् उखासंस्पर्शनेन वै ॥ ३५॥

पुष्करं त्वन्यदेवात्र तथाऽन्यदुदकं स्मृतम् ।

न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम् ॥ ३६॥

एतेषां सह संवासं विवासं चैव नित्यशः ।

यथातथैनं पश्यन्ति न नित्यं प्राकृता जनाः ॥ ३७॥

ये त्वन्यथैनं पश्यन्ति न सम्यक् तेषु दर्शनम् ।

ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ॥ ३८॥

साङ्ख्यदर्शनमेतत्ते परिसङ्ख्यातमुत्तमम् ।

एवं हि परिसङ्ख्याय साङ्ख्याः केवलतां गताः ॥ ३९॥

ये त्वन्ये तत्त्वकुशलास् तेषामेतन्निदर्शनम् ।

अतः परं प्रवक्ष्यामि योगानामपि दर्शनम् ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां

शान्तिपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

[अस्मिन्नध्याये ४०॥ श्लोकाः]

---

## ॥ अष्टनवत्यधिकद्विशततमोऽध्यायः ॥



याज्ञवल्क्येन जनकं प्रति योगनिरूपणम् ॥

याज्ञवल्क्यः—

साङ्ख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे ।
यथाश्रुतं यथादृष्टं तत्त्वेन [1]नृपसत्तम ॥ १

नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम् ।
उभावप्येककार्यौ तावुभावनिधनौ स्मृतौ ॥ २

पृथक् पृथक् तु पश्यन्ति येऽल्पबुद्धिरता नराः ।
वयं तु राजन् पश्याम एकमेवेति निश्चयात् ॥ ३

यदेव योगाः पश्यन्ति तत् साङ्ख्यैरपि दृश्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स तत्त्ववित् ॥ ४

रुद्रप्रधानानपरान् विद्धि योगान् नराधिप ।
तेनैव चाथ देहेन विचरन्ति दिशो दश ॥ ५

यावद्धि प्रलयस्तावत् सूक्ष्मेणाष्टगुणेन वै ।
योगेन लोकान् विचरन् सुखं वसति चानघ ॥ ६

[2]देवेष्वेवाष्टगुणितं योगमाहुर्मनीषिणः ।
सूक्ष्ममष्टगुणं प्राहुर् नेतरं नृपसत्तम ॥ ७

1. ग—मनुजर्षभ　　2. ग—तावदेवाष्टगुणितं

द्विगुणं योगकृत्यं तु योगानामाहुरुत्तमम् ।
सगुणं निर्गुणं चैव [1]यथाशास्त्रनिदर्शनात् ॥ ८

धारणं चैव मनसः प्राणायामश्च पार्थिव ।
प्राणायामो हि सगुणो निर्गुणं धारणं मतम् ॥ ९

[2]यत्र भ्रश्यति मुञ्चन् वै प्राणान् मिथिलसत्तम ।
वाताधिक्यं भवत्येव [3]वाताद्धि न समाचरेत् ॥ १०

निशायाः प्रथमे यामे चोदना द्वादश स्मृताः ।
मध्ये सुप्त्वा परे यामे द्वादशैव तु चोदनाः ॥ ११

तदेवमुपशान्तेन दान्तेनैकान्तशीलिना ।
आत्मारामेण बुद्धेन योक्तव्योऽऽत्मा न संशयः ॥ १२

पञ्चानामिन्द्रियाणां तु दोषानाक्षिप्य पञ्चधा ।
शब्दं स्पर्शं तथा रूपं रसं गन्धं तथैव च ॥ १३

प्रतिभा[4]मुपसर्गं च प्रतिसंहृत्य मैथिल ।
इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह ॥ १४

मनस्तथैवाहङ्कारे प्रतिष्ठाप्य नराधिप ।
अहङ्कारं तथा बुद्धौ बुद्धिं च प्रकृतावपि ॥ १५

---

1. घ—अयं पादोऽनन्तरश्च न स्तः
2. ग—दृश्यते यत्र मुञ्चन् वै
3. ग—तस्माद्धि न
4. ख—मप्रवर्गं च; घ—मपवर्गं च

एवं हि परिसङ्ख्याय ततो ध्यायन्ति केवलम् ।
विरजस्कमलं नित्यम् अनन्तं शुद्धमव्रणम् ॥ १६

तस्थुषं पुरुषं नित्यम् अभेद्यमजरामरम् ।
शाश्वतं चाव्ययं देवं ईशानं ब्रह्म चाव्ययम् ॥ १७

युक्तस्य तु महाराज लक्षणान्युपधारयेत् ।
लक्षणं तु प्रसादस्य यथा तृप्तस्सुखं स्वपेत् ॥ १८

निवाते तु यथा दीपो ज्वलेत् स्नेहसमन्वितः ।
निश्चलोर्ध्वशिखस्तद्वद् युक्तमाहुर्मनीषिणः ॥ १९

पाषाण इव मेघोत्थैर् यथा बिन्दुभिराहतः ।
नालं चालयितुं शक्यस् तथा युक्तस्य लक्षणम् ॥ २०

शङ्खदुन्दुभिनिर्घोषैर् विविधैर्गीतवादितैः ।
क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनम् ॥ २१

तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः ।
सोपानमारुहेद्भीतस् तर्ज्यमानोऽसिपाणिभिः ॥ २२

संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत् ।
तथैवोत्तरमाणस्य एकाग्रमनसस्तथा ॥ २३

स्थिरत्वादिन्द्रियाणां तु निश्चलत्वात्तथैव च ।
एवं युक्तस्य तु मुनेर् लक्षणान्युपधारयेत् ॥ २४

सयुक्तः पश्यते ब्रह्म यत्तत् परममव्ययम् ।
महतस्तमसो मध्ये स्थितं ज्वलनसन्निभम् ॥ २५

एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम् ।
कालेन महता राजञ् श्रुतिरेषा सनातनी ॥ २६

एतद्धि योगं योगानां किमन्यद्योगलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ २७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
[अस्मिन्नध्याये २७ श्लोकाः]

---

## ॥ एकोनशताधिकद्विशततमोऽध्यायः ॥



याज्ञवल्क्येन जनकं प्रति प्राणिनामुत्क्रमणस्थानविशेषप्रयोज्यफलविशेषकथनम् ॥ १ ॥ तथा प्राणिनां मरणसूचकदुःशकुनकथनम् ॥ २ ॥

---

याज्ञवल्क्यः—

तथैवोत्क्रमणं स्थानं शृणुष्वावहितो नृप ।
पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ॥ १

जङ्घाभ्यां तु वसून् देवान् आप्नुयादिति नश्श्रुतम् ।
जानुभ्यां च महाभागान् साध्यान् देवानवाप्नुयात् ॥ २

पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात् ।
पृथिवीं जघनेनाथ ऊरुभ्यां च प्रजापतिम् ॥ ३

पार्श्वाभ्यां मरुतो [1]देवान् नासाभ्यामिन्दुमेव च ।
बाहुभ्यामिन्द्रमित्याहुर् उरसा रुद्रमेव च ॥ ४

ग्रीवया तु मुनिश्रेष्ठं नरमाप्नोत्यनुत्तमम् ।
विश्वान् देवान् मुखेनाथ दिशश्श्रोत्रेण चाप्नुयात् ॥ ५

घ्राणेन गन्धवहनं नेत्राभ्यां सूर्यमेव च ।
भ्रूभ्यामथाश्विनौ देवौ ललाटेन पितॄनथ ॥ ६

ब्रह्माणमाप्नोति विभुं मूर्ध्ना देवाग्रजं तथा ।
एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ॥ ७

अरिष्टानि तु वक्ष्यामि विहितानि मनीषिभिः ।
संवत्सरं वियोगस्य सम्भवे च शरीरिणः ॥ ८

योऽरुन्धतीं न पश्येत दृष्टपूर्वां कदाचन ।
तथैव ध्रुवमित्याहुः पूर्णेन्दुं दीपमेव च ॥ ९

खण्ड[2]भागं दक्षिणतस् तेऽपि संवत्सरायुपः ।
[3]परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिव ॥ १०

आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः ॥ १०॥

---

1. ग—देवानंसाभ्यामिन्दुमाप्नुयात्

2. ग—भासं　　3. अ-क-ख-घ—अर्धद्वयं नास्ति

अतिद्युतिरतिप्रज्ञः अप्रज्ञश्चाद्युतिस्तथा ।
प्रकृतेर्विक्रियापन्नः षण्मासान् मृत्युलक्षणः ॥ ११॥
दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते ।
कृष्णश्यावच्छविच्छायः षण्मासान् मृत्युलक्षणः ॥ १२॥
शीर्णनाभिं यथा चक्रं छिद्रं सोमं प्रपश्यति ।
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ॥ १३॥
शवगन्धमुपाघ्राति सुरभिं प्राप्य यो नरः ।
देवतायतनस्थस्तु [1]सप्तरात्रेण मृत्युभाक् ॥ १४॥
कर्णनासावनमनं दन्तदृष्टिविरागता ।
संज्ञालोपो निरुष्णत्वं सद्यो मृत्युनिदर्शनम् ॥ १५॥
अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ।
मूर्धतश्चोत्पतेद्धूमस् सद्यो मृत्युनिदर्शनम् ॥ १६॥
एतावन्ति त्वरिष्टानि विदित्वा मानवोऽऽत्मनः ।
निशि चाहनि चात्मानं योजयेत् परमात्मना ॥ १७॥
प्रतीक्षमाणस्तत्कालं यत्कालं प्रकृतं भवेत् ॥ १८
अथास्य नेष्टं मरणं स्थातुमिच्छेत् क्रियामिमाम् ।
सर्वगन्धान् रसांश्चैव धारयेत समाहितः ॥ १९
[2]तथा मृत्युमुपादाय तत्परेणान्तरात्मना ।

1. ग—षड्रात्रेण 2. अ-क-ख-घ—अर्धद्वयं नास्ति

स साङ्ख्यधारणां चैव विदित्वा मनुजर्षभ ॥ २०
[1]जयेच्च मृत्युं योगेन तत्परेणान्तरात्मना ।
गच्छेत् प्राप्याक्षयं कृत्स्नम् अजन्म शिवमव्ययम् ॥ २१
शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनशताधिकद्विशततमोऽध्यायः ॥ २९९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
। [अस्मिन्नध्याये २१॥ श्लोकाः]

---

## ॥ त्रिशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति जनकयाज्ञवल्क्यसंवादानुवादः ॥

---

याज्ञवल्क्यः—

अव्यक्तस्थं परं यत्तत् पृष्टस्तेऽहं नराधिप ।
परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप ॥ १

यथार्षेणेह विधिना चरताऽवमतेन ह ।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप ॥ २

महता तपसा देवस् स्थविष्ठस्सेवितो मया ।
प्रीतेन चाहं विभुना सूर्येणोक्तस्तदाऽनघ ॥ ३

---

1. ग—जयेत मृत्युं योगेन

सूर्यः—

वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभम् ।
तं ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः ॥ ४

याज्ञवल्क्यः—

ततः प्रणम्य शिरसा मयोक्तस्तपतां वरः ।
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् ॥ ५

ततो मां भगवानाह वितरिष्यामि ते द्विज ।
सरस्वतीह वाग्भूता शरीरं ते प्रवेक्ष्यति ॥ ६

ततो मां भगवानाह स्वमास्यं विवृतं कुरु ।
विवृतं च ततो मेऽऽस्यं प्रविष्टा च सरस्वती ॥ ७

ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदाऽनघ ।
[1]अविज्ञानादमर्षाच्च भास्करस्य महात्मनः ॥ ८
ततो विदह्यमानं माम् उवाच भगवा[2]नृषिः ॥ ८॥

सूर्यः—

मुहूर्तं सह्यतां दाहस् ततश्शीती भविष्यति ॥ ९

याज्ञवल्क्यः—

शीतीभूतं च मां दृष्ट्वा भगवानाह भास्करः ॥ ९॥

---

1. ग—अवज्ञा+मातुलस्य महात्मनः ।
2. ख—न्हरिः

सूर्यः—

[1]सुप्रतिष्ठास्यते वेदस् सोत्तरस्सखिलो द्विज ॥ १०

कृत्स्नं शतपथं चैव प्रणेष्यसि न संशयः ।
तस्यान्ते चापुनर्भावे तव बुद्धिर्भविष्यति ॥ ११

प्राप्स्यसे च यदिष्टं तत् साङ्ख्ययोगेप्सितं पदम् ॥ ११॥

याज्ञवल्क्यः—

एतावदुक्त्वा भगवान् अस्तमेवाभ्यवर्तत ॥ १२

ततोऽहं व्याहृतं श्रुत्वा गते देवे विभावसौ ।
गृहमागम्य संहृष्टोऽचिन्तयं वै सरस्वतीम् ॥ १३

ततः प्रवृत्ताऽतिशुभा स्वरव्यञ्जनभूषिता ।
ओङ्कारमग्रतः कृत्वा मम देवी सरस्वती ॥ १४

ततोऽहमर्घ्यं विधिवत् सरस्वत्यै न्यवेदयम् ।
[2]तपतां च वरिष्ठाय निषण्णस्तत्परायणः ॥ १५

ततश्शतपथं कृत्स्नं सरहस्यं ससङ्ग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥ १६

ततोऽध्यापितवानस्मि शिष्याणां शतमुत्तमम् ।
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥ १७

1. ग—प्रतिभास्यति ते वेदः
2. ग—परं यतमनाश्चैव नि

ततस्सशिष्येण मया सूर्येणेव गभस्तिभिः ।
व्याप्तो यज्ञो महाराज पितुस्तव महात्मनः ॥ १८

मिषतो [1]देवलस्यापि ततोऽर्धं हृतवान् वसु ।
स्ववेददक्षिणार्थे वै विमर्दे मातुलेन ह ॥ १९

सुमन्तुनाऽथ पैलेन तथा जैमिनिना च वै ।
पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः ॥ २०

दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयाऽनघ ।
उपधारितं तथा चापि पुराणं रोमहर्षणात् ॥ २१

बीजमेतत् पुरस्कृत्य देवीं चैव सरस्वतीम् ।
सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ॥ २२

कर्तुं शतपथं वेदम् अपूर्वं कारितं च मे ।
यथाऽभिलषितं मार्गं तथा तच्चोपपादितम् ॥ २३

शिष्याणां सखिलं कृत्स्नम् अनुज्ञातं ससङ्ग्रहम् ।
सर्वे च शिष्याश्शुचयो गताः परमहर्षिताः ॥ २४

शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिताः ।
प्रतिष्ठाप्य यथाकामं [2]वेद्यं तमनुचिन्तयम् ॥ २५

[3]किमत्र ब्रह्मण्यमृतं किंच वेद्यमनुत्तमम् ।

---

1. ग—देवलस्याथ ततोऽर्घ्यं हृतवानहम्
2. ग—वेद्यं यदनुचिन्तये
3. ग—किमत्र ब्रह्मण्यममृतं

चिन्तये तत्र चागत्य गन्धर्वो मामपृच्छत ॥ २६

विश्वावसुस्तदा राजन् वेदान्तज्ञानकोविदः ।
चतुर्विंशत्ततः प्रश्नान् पृष्ट्वा वेदस्य पार्थिव ॥ २७

पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तदा ।
विश्वाविश्वं तथा [1]राजन् पुरुषं प्रकृतिं तथा ॥ २८
तथैव पुरुषव्याघ्र मित्रं वरुणमेव च ॥ २८॥

ज्ञानं ज्ञेयं तथाऽज्ञानं कस्तपा अतपास्तथा ।
सूर्यातिसूर्य इति च विद्याविद्ये तथैव च ॥ २९॥

वेद्यावेद्ये तथा राजन् अचलं चलमेव च ।
[2]अपूर्वमक्षयं क्षेम्यम् एतत् प्रश्नमनुत्तमम् ॥ ३०॥

अथोक्तस्तु मया राजन् राजा गन्धर्वसत्तमः ।
पृष्टवानानुपूर्व्येण प्रश्नमुत्तममर्थवत् ॥ ३१॥

मुहूर्तमुष्यतां तावद् यावदेनं विचिन्तये ।
बाढमित्येव कृत्वा स तूष्णीं गन्धर्व आस्थितः ॥ ३२॥

ततोन्वचिन्तयमहं भूयो देवीं सरस्वतीम् ।
मनसा स च मे प्रश्नो [3]दुग्धे घृतमिवोत्थितः ॥ ३३॥

तत्रोपनिषदं चैव परिशेषं च पार्थिव ।

---

1. ग—अयं पादोऽनन्तरश्च न स्तः
2. ग—अव्ययं चाक्षयं 3. ग—दध्नोघृत+द्धृत

मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पुनः ॥ ३४॥

चतुर्थी राजशार्दूल विद्यैषा साम्परायिकी ।
उदीरिता मया तुभ्यं पञ्चविंशेऽधितिष्ठता ॥ ३५॥

अथोक्तस्तु मया राजन् राजा विश्वावसुस्तदा ।
श्रूयतां यं भवानस्मान् प्रश्नं सम्पृष्टवानिह ॥ ३६॥

विश्वाविश्वेति यदिदं गन्धर्वेन्द्रानुपृच्छसि ।
[1]विश्वाव्यक्तं परं विद्याद् भूतभव्यभयङ्करम् ॥ ३७॥

त्रिगुणं गुणकर्तृत्वाद् विश्वान्यो निष्कलस्तथा ।
[2]विश्वस्तथैव मिथुनम् एवमेवानुदृश्यते ॥ ३८॥

अव्यक्तं प्रकृतिं प्राहुः पुरुषेति च निर्गुणम् ।
तथैव मित्रं पुरुषं वरुणं प्रकृतिं तथा ॥ ३९॥

ज्ञानं तु प्रकृतिं प्राहुर् ज्ञेयं [3]निष्कलमेव च ।
[4]अज्ञश्च पुरुषस्तस्माज् ज्ञश्च निष्कल उच्यते ॥ ४०॥

[5]कस्तपा अतपाः प्रोक्तः कोऽसौ पुरुष उच्यते ।
तपाः प्रकृतिरित्याहुर् अतपा निष्कलस्स्मृतः ॥ ४१॥

---

1. ग—विश्वमव्यक्तमित्युक्तमविश्वो निष्कलस्तथा । [पाठान्तरम्]
2. ग—विश्वाविश्वेतिमि 3. ग—पुरुषमेव च
4. ग—अज्ञमव्यक्तमित्युक्तं ज्ञस्तु
5. अ-क-ख-घ—नास्तीदमर्धम्

[1]सूर्यमव्यक्तमित्युक्तम् अतिसूर्यस्तु निष्कलः ।
अविद्या प्रोक्तमव्यक्तं विद्या पुरुष उच्यते ॥ ४२॥
तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते ।
चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु ॥ ४३॥
चलां तु प्रकृतिं प्राहुः कारणं क्षेपसर्गयोः ।
अक्षेपसर्गयोः कर्ता निष्कलः पुरुषस्स्मृतः ॥ ४४॥
[2]अजावुभावनादी च अक्षयौ चाप्युभावपि ।
अमूर्तावप्युभौ प्राहुर् अध्यात्मगतिनिश्चयाः ॥ ४५॥
अक्षयत्वात् प्रजनने अजमत्राहुरव्ययम् ॥ ४६
अक्षयं पुरुषं प्राहुः क्षयो ह्यस्य न विद्यते ॥ ४६॥
गुणाक्षयत्वात् [3]प्रकृतिः कर्तृत्वादक्षयं बुधाः ॥ ४७
[4]एषा तेऽन्वीक्षिकी विद्या चतुर्थी साम्परायिकी ॥ ४७॥
[5]विद्योपेतं धनं कृत्वा कर्मणा नित्यकर्मणि ।
एकान्तदर्शना वेदास् सर्वे विश्वावसो स्मृताः ॥ ४८॥

---

1. अ-क-ख-घ—अर्धद्वयं नास्ति
2. ग—इदं अर्धद्वयं नास्ति अत्र ; अर्धत्रयादुपरि वर्तते । [पाठभेदश्च ]
3. ग—प्रकृतेः क्षेम्यं च पुरुषं बुधाः
4. ग—अजावुभावव्ययौ च अक्षयौ चाप्युभावपि ।
अतीन्द्रियावुभौ प्राहुरध्यात्मगतिनिश्चयाः ॥ [ अधिकः पाठः ]
5. ग—विद्यापेतं मनः कृत्वा

जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः ।
वेदार्थं ये न जानन्ति वेद्यं गन्धर्वसत्तम ॥ ४९॥

साङ्गोपाङ्गान् पञ्चवेदान् योऽधीते द्विजसत्तमः ।
वेदवेद्यं न जानीते वेदभारवहो हि सः ॥ ५०॥

यो घृतार्थी खरीक्षीरं मन्थेद्गन्धर्वसत्तम ।
विष्ठां तत्रानुपश्येत न मण्डं नापि वा घृतम् ॥ ५१॥

तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति ।
स केवलं मूढमतिर् वेदभारवहस्स्मृतः ॥ ५२॥

[1]प्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना ।
यथाऽस्य जन्मनिधनं न भवेत पुनः पुनः ॥ ५३॥

अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम् ।
परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः ॥ ५४॥

यदाऽनुपश्यतेऽत्यन्तम् अहन्यहनि काश्यप ।
तदा स केवलीभूतष् षड्विंशमनुपश्यति ॥ ५५॥

अन्यश्च शश्वदव्यक्तं तथाऽन्यः पञ्चविंशकः ।
तत्स्थं समनुपश्यन्ति तमेकमिति साधवः ॥ ५६॥

तेनैवं नाभिजानन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयोद्वेगात् साङ्ख्याश्च परमर्षयः ॥ ५७॥

---

1. ग—द्रष्ट

विश्वावसुः—

पञ्चविंशे यदेतत्ते प्रोक्तं ब्राह्मणसत्तम ।
यथातन्न तथा वेद्मि तद्भवान् वक्तुमर्हति ॥ ५८॥

जैगीषव्यस्यासितस्य देवलस्य च मे श्रुतम् ।
पराशरस्य विप्रर्षेर् वार्षगण्यस्य धीमतः ॥ ५९॥

भृगोः पञ्चशिखस्याथ कपिलस्य शुकस्य च ।
गौतमस्यार्ष्टिषेणस्य गर्गस्य च महात्मनः ॥ ६०॥

नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः ।
सनत्कुमारस्य सतश् शुक्रस्य च महात्मनः ॥ ६१॥

काश्यपस्य पितुश्चैव पूर्वमेव मया श्रुतम् ।
तदनन्तरं च रुद्रस्य विश्वरूपस्य धीमतः ॥ ६२॥

दैवतेभ्यः पितृभ्यश्च दैत्येभ्यश्च ततस्ततः ।
प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्ति ते ॥ ६३॥

तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण ।
भवान् प्रबर्हश्शास्त्राणां प्रगल्भश्चासि बुद्धिमान् ॥ ६४॥

न तवाविदितं किञ्चिद् भवाञ् श्रुतिनिधिः परः ।
कथ्यसे देवलोके च पितृलोके च ब्राह्मण ॥ ६५॥

ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः ।

[1]स्थविष्ठश्चापि भगवान् आदित्यस्तव भाषते ॥ ६६॥

साङ्ख्यज्ञानं त्वया ब्रह्मन् अवाप्तं कृत्स्नमेव ह ।
तथैव योगज्ञानं च याज्ञवल्क्य विशेषतः ॥ ६७॥

निस्सन्दिग्धं प्रबुद्धस्त्वं बुध्यमा[2]नो जरामरम् ।
श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ॥ ६८॥

याज्ञवल्क्यः—

कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम ।
जिज्ञाससि च मां राजंस् तन्निबोध यथाश्रुतम् ॥ ६९॥

अबुध्यमानां प्रकृतिं बुध्यते पञ्चविंशकः ।
न तु बुध्यति गन्धर्व प्रकृतिः पञ्चविंशकम् ॥ ७०॥

अनेनाप्रतिबोधेन प्रधानं प्रवदन्ति तम् ।
साङ्ख्याश्च योगास्तत्त्वज्ञा यथाश्रुतिनिदर्शनात् ॥ ७१॥

पश्यंस्तथैव चापश्यन् पश्यत्यन्यस्सदाऽनघ ।
षड्विंशं पञ्चविंशं च चतुर्विंशं च पश्यति ॥ ७२॥

न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ।
पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम ॥ ७३॥

न चतुर्विंशको ग्राह्यो मनुजैर्ज्ञानदर्शिभिः ।

---

1. ग—पतिश्च तपतां शश्वदा
2. ग—नश्चराचरम्

मत्स्यो वेदकमन्वेति प्रवर्तेति प्रवर्तनात् ॥ ७४॥

यथैष बुध्यते मत्स्यस् तथैषोऽप्यनुबुध्यते ।
स स्नेहात् सहवासाच्च साभिमानाच्च नित्यशः ॥ ७५॥

स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
नोन्मज्जति हि कालस्य समत्वेनाभिसंवृतः ॥ ७६॥

यदा तु मन्यतेऽन्योऽहम् अन्य एष इति द्विजः ।
तदा स केवलीभूतष् षड्विंशमनुपश्यति ॥ ७७॥

अन्यश्च राजन् स परस् तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥ ७८॥

तेनैतन्नाभिनन्दन्ति पञ्चविंशकमव्ययम् ॥ ७९

जन्ममृत्युभयाद्भीता योगास्साङ्ख्याश्च काश्यप ।
षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः ॥ ८०

यदा स केवलीभूतष् षड्विंशमनुपश्यति ।
[1]तदा स सर्वसिद्धत्वान्नपुनर्जन्म विन्दति ॥ ८१

एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् ॥ ८२

पश्यापश्यं यो न पश्येत् क्षेम्यं तत्त्वं च काश्यप ।
केवलाकेवलं चान्यत् पञ्चविंशात् परं च यत् ॥ ८३

---

1. अ-क-ख-घ—नास्तीदमर्धम्

विश्वावसुः—

तथ्यं शुभं चैतदुक्तं त्वया विभो
सम्यक् क्षेम्यं दैवताद्यं यथावत् ।
स्वस्त्यक्षयं भवतश्चास्तु नित्यं
बुद्ध्या सदा बुद्धियुक्तं नमस्ये ॥ ८४

याज्ञवल्क्यः—

एवमुक्त्वा सम्प्रयातो दिवं स
विभ्राजन् वै श्रीमता दर्शनेन ।
तुष्टस्तुष्ट्या परया चाभिनन्द्य
प्रदक्षिणं मम कृत्वा महात्मा ॥ ८५

ब्रह्मादीनां खेचराणां क्षितौ च
ये चाधस्तात् संवसन्ते नरेन्द्र ।
तत्रैव तद्दर्शनं दर्शयन् वै
सम्यक् क्षेम्यं ये पथं संश्रिता वै ॥ ८६

साङ्ख्याःसर्वे साङ्ख्यधर्मे रताश्च
तद्वद्योगा योगधर्मे रताश्च ।
ये चाप्यन्ये मोक्षकामा मनुष्यास्
तेषामेतद्दर्शनं ज्ञानदृष्टम् ॥ ८७

ज्ञानान्मोक्षो जायते पूरुषाणां
नास्त्यज्ञानादेवमाहुर्नरेन्द्र ।
तस्माज्ज्ञानं तत्त्वतोऽन्वेषितव्यं
येनात्मानं मोक्षयेज्जन्ममृत्योः ॥ ८८

प्राप्यं ज्ञानं ब्राह्मणात् क्षत्रियाद्वा
वैश्याच्छूद्रादपि नीचादभीक्ष्णम् ।
श्रद्धातव्यं श्रद्दधानेन नित्यं
न श्रद्धिनं विशतो जन्ममृत्यू ॥ ८९

सर्वे वर्णा ब्राह्मणा ब्रह्मजाश्च
सर्वे नित्यं व्याहरन्ते च ब्रह्म[1] ।
तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि
सर्वं विश्वं ब्रह्म चैतत् समस्तम् ॥ ९०

ब्रह्मास्यतो ब्राह्मणास्सम्प्रसूता
बाहुभ्यां वै क्षत्रियास्सम्प्रसूताः ।
नाभ्यां वैश्याः पादतश्चापि शूद्रास्
सर्वे वर्णा नान्यथा वेदितव्याः ॥ ९१

अज्ञानतः कर्मयोनिं भजन्ते
तां तां राजंस्ते यथा यान्त्यभावम् ।

---

1. ग—येनात्मानं मोक्षयेज्जन्ममृत्योः [अधिकः पाठः]

तथा वर्णा ज्ञानहीनाः पतन्ते
घोरादज्ञानात् प्राकृतं योनिजालम् ॥ १२

तस्माज्ज्ञानं सर्वतो मार्गितव्यं
सर्वत्रस्थं चैतदुक्तं मया ते ।
तत्स्थो ब्रह्मा तस्थिवांश्चापरो यस्
तस्मै नित्यं मोक्षमाहुर्नरेन्द्र ॥ १३

यत्ते पृष्टं तन्मया तूपदिष्टं
याथातथ्यं तद्विशोको भजस्व ।
राजन् गच्छस्वैतदर्थस्य पारं
सम्यक् प्रोक्तं स्वस्ति तेऽस्त्वत्र नित्यम् ॥ १४

भीष्मः—

स एवमनुशिष्टस्तु याज्ञवल्क्येन धीमता ।
प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ॥ १५

गते मुनिवरे तस्मिन् कृत्वा चापि प्रदक्षिणम् ।
दैवरातिर्नरपतिर् आसीनस्तत्र मोक्षवित् ॥ १६

गोकोटिं स्पर्शयामास हिरण्यस्य तथैव च ।
रत्नाञ्जलिमथैकैकं ब्राह्मणेभ्यो ददौ तदा ॥ १७

विदेहराज्यं च तदा प्रतिष्ठाप्य सुतस्य वै ।
यतिधर्ममुपासंश्चाप्यवसन्मिथिलाधिपः ॥ १८

साङ्ख्यज्ञानमधीयानो योगशास्त्रं च कृत्स्नशः ।
धर्माधर्मौ च राजेन्द्र प्राकृतौ परिगर्हयन् ॥ ९९

[1]अनन्त इति कृत्वा स नित्यं केवलमेव च ।
धर्माधर्मौ पुण्यपापे सत्यासत्ये तथैव च ॥ १००

जन्ममृत्यू च राजेन्द्र प्राकृतं परिचिन्तयन् ।
ब्रह्माऽव्यक्तस्य कर्मेदम् इति नित्यं नराधिप ॥ १०१

पश्यन्ति योगास्साङ्ख्याश्च स्वशास्त्रकृतलक्षणाः ।
इष्टानिष्टविमुक्तं हि तस्थौ ब्रह्म परात् परम् ॥ १०२

नित्यं तदाहुर्विद्वांसश् शुचि तस्माच्छुचिर्भव ।
दीयते यच्च लभते दत्तं यच्चानुमन्यते ॥ १०३

[2]अव्यक्तेनेति तच्चिन्त्यम् अन्यथा मा विचिन्तय ।
ददाति च नरश्रेष्ठ प्रतिगृह्णाति यच्च ह ॥ १०४

[3]ददात्यव्यक्तमेवैतत् प्रतिगृह्णाति यच्च ह ।
आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्ततोऽधिको भवेत् ॥ १०५
एवं मन्यस्व सततम् अन्यथा मा विचिन्तय ॥ १०५॥

यस्याव्यक्तं न विदितं सगुणं निर्गुणं पुनः ।

---

1. अ-क-ख-घ—अर्धेमयं नास्ति
2. अ-क-ख-घ—नास्तीदमर्धम्
3. घ—नास्तीदमर्धम्

तेन तीर्थानि यज्ञाश्च सेवितव्या विपश्चिता ॥ १०६॥

न स्वाध्यायैस्तपोभिर्वा यज्ञैर्वा कुरुनन्दन ।
लभतेऽव्यक्तिकं स्थानं [1]व्यक्तं मम महीयते ॥ १०७॥

तथैव महतस्स्थानम् आहङ्कारिकमेव च ।
अहङ्कारात् परं चापि स्थानानि समवाप्नुयात् ॥ १०८॥

ये त्वव्यक्तात् परं नित्यं जानते शाश्वतः परम् ।
जन्ममृत्युवियुक्तं च वियुक्तं सदसच्च यत् ॥ १०९॥

एतन्मयाऽऽप्तं जनकात् पुरस्तात्
तेनापि चाप्तं नृप याज्ञवल्क्यात् ।
ज्ञानं विशिष्टं न तथा हि यज्ञा
ज्ञानेन दुर्गं तरते न यज्ञैः ॥ ११०॥

दुर्गं जन्म निधनं चापि राजन्
न भौतिकं ज्ञानविदो वदन्ति ।
यज्ञैस्तपोभिर्नियमैर्व्रतैश्च
दिवं समासाद्य पतन्ति भूमौ ॥ १११॥

तस्मादुपासस्व परं महच्छुचि
शिवं विमोक्षं विमलं पवित्रम् ।

1. क-ख—ज्ञात्वा व्यक्तं महीपते

[1]क्षेत्रज्ञवित् पार्थिव ज्ञानयज्ञम्
उपास्य वै तत्त्वमृषिर्भविष्यसि ॥ ११२॥

उपनिषदमुपाकरोत्तदा वै
जनकनृपस्य पुरा हि याज्ञवल्क्यः ।
यदुपनिषदि शाश्वताऽव्ययं तच्
छुभममृतत्वमशोकमृच्छति ॥ ११३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिशततमोऽध्यायः ॥ ३०० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
[अस्मिन्नध्याये ११३॥ श्लोकाः]

## ॥ एकाधिकत्रिशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दारापत्यादिषु स्नेहत्यागपूर्वकं धर्माचरण-चोदकजनकपञ्चशिखसंवादानुवादः ॥

युधिष्ठिरः—
ऐश्वर्यं वा महत् प्राप्य धनं वा भरतर्षभ ।
दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् ॥ १
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।

1. ग—क्षेत्रवित्

रसायनप्रयोगैर्वा कैर्नाप्नोति जरान्तकौ ॥ २

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
भिक्षोः पञ्चशिखस्येह संवादं जनकस्य च ३
वैदेहो जनको राजा महर्षिं वेदवित्तमम् ।
पर्यपृच्छत् पञ्चशिखं छिन्नधर्मार्थसंशयम् ॥ ४

जनकः—

केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ ।
तपसा वाऽथ बुद्ध्या वा कर्मणा वा श्रुतेन वा ॥ ५

भीष्मः—

एवमुक्तस्स वैदेहं प्रत्युवाच परोक्षवित् ।
निवृत्तिर्नैतयोरस्ति नातिवृत्तिः कथञ्चन ॥ ६
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोऽयं प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ॥ ७
सर्वभूतसमुच्छेदस् स्रोतसैवोह्यते सदा ।
ऊह्यमानं च मज्जन्तम् अप्लवे कालसागरे ॥ ८
[1]जरामृत्युमहाग्राहे न किञ्चि[2]दवपद्यते ।
नैवास्य भविता कश्चिन्नासौ भवति कस्यचित् ॥ ९

---

1. ग—जन्ममृत्यू महाग्राहौ न कश्चिदतिवर्तते । [पाठान्तरम्]
2. ख—दभिपद्यते

पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः ।
नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ॥ १०

क्षिप्यन्ते तेन तेनैव निष्टनन्तः पुनः पुनः ।
कालेन जाता याता हि वायुनेवाभ्रसञ्चयाः ॥ ११

जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ १२

एवम्भूतेषु भूतेषु नित्यभूताध्रुवेषु च ।
[1]कथं द्रुह्येत जातेषु वृत्तेषु च न सञ्चरेत् ॥ १३

कुतोऽहमागतः कोऽस्मि क गमिष्यामि कस्य वा ।
कस्मिन् स्थितः क भविता कस्सन् किमनुशोचसि । १४

द्रष्टा स्वर्गस्य न ह्यस्ति तथैव नरकस्य च ।
आगमांस्त्वनतिक्रम्य दद्याच्चैव यजेत च ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
॥ अस्मिन्नध्याये १५ श्लोकाः ॥

---

1. ग—कथं हृष्येत जातेषु मृतेषु

## ॥ द्व्यधिकत्रिशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सुलभाजनकसंवादः ॥

युधिष्ठिरः—

अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम ।
कः प्राप्तो नृपतिस्सिद्धिं मोक्षतत्त्वं वदस्व मे ॥ १
संन्यस्यते यथाऽऽत्माऽयं व्यक्तस्यात्मा यथा च यत् ।
परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह ॥ २

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
जनकस्य च संवादं सुलभायाश्च भारत ॥ ३
[1]संन्यासपालकः कश्चिद् बभूव नृपतिः पुरा ।
मैथिलो जनको राजा धर्मध्वज इति श्रुतः ॥ ४
स वेदमोक्षशास्त्रे च स्वे च शास्त्रे कृतागमः ।
इन्द्रियाणि समाधाय शशास वसुधामिमाम् ॥ ५
तस्य वेदविदः प्राज्ञाश् श्रुत्वा तां साधुवृत्तताम् ।
[2]लोकेषु प्रापयन्ति स्म पुरुषाः पुरुषेश्वरम् ॥ ६

1. क-ख-घ—सन्न्यासी पथिकः
2. ग—लोकेष्वस्पृहयंस्तस्मै

अथ धर्मयुगे तस्मिन् योगधर्ममनुष्ठिता ।
चचार वसुधामेका सुलभा नाम भिक्षुकी ॥ ७
तया जगदिदं कृत्स्नम् अटन्त्या मिथिलेश्वरः ।
तत्र तत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥ ८
साऽतिसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया ।
दर्शने जातसङ्कल्पा जनकस्य बभूव ह ॥ ९
तत्र सा विप्रहायाऽथ पूर्वरूपं हि योगतः ।
अबिभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् ॥ १०
चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी ।
विदेहानां पुरीं सुभ्रूर् जगाम कमलेक्षणा ॥ ११
सा प्राप्य मिथिलां रम्यां समृद्धजनसङ्कुलाम् ।
भैक्षचर्यापदेशेन ददर्श मिथिलेश्वरम् ॥ १२
राजा तस्याः परं दृष्ट्वा सौकुमार्यं वपुस्तथा ।
केयं कस्य सुता वेति बभूवागतविस्मयः ॥ १३
ततोऽस्यास्स्वागतं कृत्वा व्यादिश्य च वरासनम् ।
पूजितां पादशौचेन वरान्नेन च तर्पयत् ॥ १४
अथ भुक्तवती प्रीता राजानं मन्त्रिभिर्वृतम् ।
सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकीम् ॥ १५
सुलभा त्वस्य धर्मेषु मुक्तो नेति ससंशया ।

सत्त्वं सत्त्वेन योगज्ञा प्रविष्टाऽभून्महीपते ॥ १६

नेत्राभ्यां नेत्रयोरस्य रश्मीन् संयोज्य रश्मिभिः ।
साधु सञ्चोदयिष्यन्तं योगबन्धैर्बबन्ध ह ॥ १७

जनकोऽप्युत्स्मयन् राजा भावमस्या विशेषयन् ।
प्रतिजग्राह भावेन भावमस्या नृपोत्तम ॥ १८

तदेकस्मिन्नधिष्ठाने संवादश्श्रूयतामयम् ।
छत्रादिषु च [1]मुक्तस्य मुक्तायाश्च त्रिदण्डकैः ॥ १९

जनकः—

भवत्याः क्व च वर्षोऽयं कुतः क्व च गमिष्यसि ।
कस्य च त्वं कुतो वेति पप्रच्छैनां महीपतिः ॥ २०

श्रुते वयसि जातौ च सद्भावो नाधिगम्यते ।
एष्वर्थेषूत्तरं तस्मात् प्रवेद्यं त्वत्समागमे ॥ २१

छत्रादिषु विशेषेषु मुक्तं मां विद्धि सर्वशः ।
सत्त्वरं वेत्तुमिच्छामि मानार्होऽसि मता हि मे ॥ २२

यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा ।
यस्य नान्यः प्रवक्ताऽस्ति मोक्षे तमपि मे शृणु ॥ २३

पाराशर्यसगोत्रस्य वृद्धस्य सुमहात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्यः परमसम्मतः ॥ २४

---

1. ख-घ—युक्तस्य

साङ्ख्यज्ञाने तथा [1]मुख्ये दृष्टार्थेन च तत्त्वतः ।
[2]त्रिविधे मोक्षधर्मेऽस्मिन् गताध्वा छिन्नसंशयः ॥ २५

स यथा शास्त्रदृष्टेन मार्गेणेह परिव्रजन् ।
वार्षिकांश्चतुरो मासान् पुरा मयि सुखोषितः ॥ २६

तेनाहं साङ्ख्यमुख्येन सुदृष्टार्थेन तत्त्वतः ।
श्रावितस्त्रिविधं मोक्षं न च राज्याद्विचालितः ॥ २७

[3]सोऽहं तामखिलां विद्यां त्रिविधां मोक्षसंहिताम् ।
मुक्तरागश्चराम्येकः पदे परमके स्थितः ॥ २८

वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः ।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥ २९

ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् ।
महद्द्वन्धप्रमोक्षाय सा सिद्धिर्या द्वयातिगा ॥ ३०

---

1. ख-घ—योगे महीपालविधौ तथा

2. अ-क-घ—अर्धचतुष्टयं नास्ति

3. ग—मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महात्मभिः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविशारदाः ।
कर्मनिष्ठास्तथैवान्ये यतयस्सूक्ष्मदर्शिनः ॥
प्रहायोभयमप्येतज्ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥　[अधिकः पाठः]
(इमे अनन्तरपृष्ठे 38, 39, 40, श्लोकाः)

सेयं परमिका सिद्धिः प्राप्ता निर्द्वन्द्वता मया ।
इहैव गतमोहेन चरता मुक्तसङ्गिना ॥ ३१

यथा क्षेत्रं मृदुभूतम् अद्भिराप्लावितं तथा ।
जनयत्यङ्कुरं कर्म नृणां तद्वत् पुनर्भवम् ॥ ३२

यथा चोत्तापितं बीजं कपाले यत्र तत्र वा ।
प्राप्यचाङ्कुरहेतुत्वम् अबीजत्वान्न जायते ॥ ३३

तद्वद्भगवता तेन शिखाप्रोक्तेन भिक्षुणा ।
ज्ञानं कृतमबीजं मे विषयेषु न जायते ॥ ३४

नाभिषज्जति कस्मिंश्चिन्नानर्थे न परिग्रहे ।
नाभिषज्जति चैतेषु व्यर्थत्वाद्रागदोषयोः ॥ ३५

यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षति ।
सव्यं बाहुं च यस्तक्षेत् समावेतावुभौ मम ॥ ३६

सुखी सोऽहमवाप्तार्थस् समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गस्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥ ३७

[1]मोक्षे हि त्रिविधा निष्ठा दृष्टा पूर्वैर्महर्षिभिः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥ ३८

ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये नियतास्संशितव्रताः ॥ ३९

---

1. ग—अर्धषट्कमत्र नास्ति पूर्वस्मिन् पत्रे लिखितमस्ति

प्रहायोभयमप्येतज् ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥ ४०

यमे च नियमे चैव द्वेषे कामे परिग्रहे ।
माने डम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ॥ ४१

त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन केनचित् ।
छत्रादिषु कथं न स्यात् तुल्यहेतौ परिग्रहे ॥ ४२

येन येन हि यस्यार्थः कारणेनेह कर्मणाम् ।
तत्तदालम्बते द्रव्यं स्वे स्वे द्रव्यपरिग्रहे ॥ ४३

दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरम् ।
उत्सृजन् परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ॥ ४४

आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके ।
राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ॥ ४५

अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम् ।
मुच्यन्ते किं न मुच्यन्ते पदे परमके स्थिताः ॥ ४६

काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुम् ।
लिङ्गान्यन्यार्थमेतानि न मोक्षायेति मे मतिः ॥ ४७

यदि सत्यपि लिङ्गेऽस्मिञ् ज्ञानमेवात्र कारणम् ।
निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ॥ ४८

अथवा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः ।

किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥ ४९

आकिञ्चन्ये न मोक्षोऽस्ति कैञ्चन्ये नास्ति बन्धनम् ।
कैञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥ ५०

तथा धर्मार्थकामेषु तथा राज्यपरिग्रहे ।
बन्धनायतनेष्वेषु विद्ध्यबन्धे पदे स्थितम् ॥ ५१

राज्यैश्वर्यमयः पाशस् स्नेहायतनबन्धनः ।
मोक्षाख्यनिशितेनेह च्छिन्नस्त्यागासिना मया ॥ ५२

सोऽहमेवं गतो मुक्तो जातास्थस्त्वयि भिक्षुकि ।
अयथार्थो हि ते वर्णो वक्ष्यामि शृणु तन्मम ॥ ५३

सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः ।
त्वय्येतानि समस्तानि नियमश्चेति संशयः ॥ ५४

यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम् ।
मुक्तोऽयं स्यान्न वेत्यस्माद्धर्षितो मत्परिग्रहः ॥ ५५

न च कामसमायुक्ते [1]मुक्तेऽप्यस्ति त्रिदण्डकम् ।
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ॥ ५६

मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः ।
आश्रयन्त्यास्स्वभावेन मम पूर्वपरिग्रहम् ॥ ५७

---

1. घ—रक्ते

प्रवेशस्ते कृतः केन मम राष्ट्रे पुरे तथा ।
कस्य वा सन्निसर्गात् त्वं प्रविष्टा हृदये मम ॥ ५८

वर्णप्रवरमुख्याऽसि ब्राह्मणी क्षत्रियस्त्वहम् ।
नावयोरेकयोगोऽस्ति मा कृथा वर्णसङ्करम् ॥ ५९

वर्तसे मोक्षधर्मे त्वं गार्हस्थ्येऽहमाश्रमे ।
अयं चापि सुकष्टस्ते द्वितीयाश्रमसङ्करः ॥ ६०

[1]सगोत्रां वाऽसगोत्रां वा न वेद त्वां न वेत्थ माम् ।
सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसङ्करः ॥ ६१

अथ जीवति ते भर्ता प्रोषितोऽप्यथवा क्वचित् ।
अगम्या परभार्येति चतुर्थो वर्णसङ्करः ॥ ६२

सा त्वमेतान्यकार्याणि कार्यायाक्षिप्य वत्स्यसि ।
अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ॥ ६३

अथवाऽपि स्वतन्त्राऽसि स्वदोषेणेह कर्हिचित् ।
यदि किञ्चिच्छ्रुतं तेऽस्ति सर्वं कृतमनर्थकम् ॥ ६४

[2]इदमन्यदतीवात्र भावस्पर्शविघातकम् ।
[3]अदृष्टं लक्ष्यते लिङ्गं संवक्तव्यं प्रकाशितम् ॥ ६५

---

1. अ-क-ख-घ—अर्धचतुष्टयं नास्ति
2. ग—इदमद्य तुरीयं ते
3. ग—दृष्टाया लक्ष्यते लिङ्गं तद्वक्तव्यं प्र

न मय्येवाभिसन्धिस्ते जयैषिण्या जये कृतः ।
येयं मत्परिषत् कृत्स्ना जेतुमिच्छसि तामपि ॥ ६६

[1]अधो ह्येवं पुनश्चैव त्वं दृष्टिं प्रतिमुञ्चसि ।
मत्पक्षप्रतिघाताय स्वपक्षोद्भावनाय च ॥ ६७

सा स्वेनामर्षजेन त्वं बुद्धिमोहेन मोहिता ।
भूयः क्षिपसि योगास्त्रं विषामृतमिवैकधा ॥ ६८

इच्छतोरत्र यो लाभस् स्त्रीपुंसोरमृतोपमः ।
लाभश्चैव विरक्तस्य सोऽत्र दोषो विषोपमः ॥ ६९

मा प्राक्षीस्साधु जानीष्व स्वशास्त्रमनुपालय ।
कृतेयं हि विजिज्ञासा रक्तो नेति त्वया मम ॥ ७०

एतत् सर्वं प्रतिच्छन्नं मयि नार्हसि गूहितुम् ॥ ७०॥

सा यदि त्वं स्वकार्येण यद्यन्यस्य महीपतेः ।
सा त्वमत्र प्रतिच्छन्ना मयि नार्हसि गूहितुम् ॥ ७१॥

न राजानं मृषा गच्छेन्न [2]द्विजातिं कथञ्चन ।
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषागताः ॥ ७२॥

राज्ञां हि बलमैश्वर्यं ब्रह्म ब्रह्मविदां बलम् ।
रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमम् ॥ ७३॥

---

1. ग—तथाऽभितस्ततश्च त्वं दृष्टिं सम्प्रति
2. ख-घ—विज्ञातुं

अत एतैर्बलैरेते बलिनस्स्वार्थमिच्छता ।
आर्जवेनाभिगन्तव्या विनाशाय ह्यनार्जवम् ॥ ७४॥

सा त्वं जातिं श्रुतं वृत्तं [1]वेषं प्रकृतिमात्मनः ।
कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः ॥ ७५॥

भीष्मः—

इत्येतैरसुखैर्वाक्यैर् अयुक्तैरसमञ्जसैः ।
प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ॥ ७६॥

उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना ।
ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम् ॥ ७७॥

सुलभा—

नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः ।
अपेतमुपपन्नार्थम् अष्टादशगुणान्वितम् ॥ ७८॥

सौक्ष्म्यं सङ्ख्याक्रमौ चोभौ निर्णयस्सप्रयोजनः ।
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ ७९॥

एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां स्वलक्षणम् ।
शृणु सञ्चार्यमाणानां पदार्थे पदवाक्यतः ॥ ८०॥

ज्ञानं ज्ञेयेषु भिन्नेषु यदभेदेन वर्तते ।
तत्रातिशायिनी बुद्धिस् तत् सौक्ष्म्यमिति वर्तते ॥ ८१॥

---

1. ग—भावं

दोषाणां च गुणानां च प्रमाणमविभागतः ।
कञ्चिदर्थमभिप्रेत्य सा सङ्ख्येत्युपधार्यताम् ॥ ८२॥

इदं पूर्वमिदं पश्चाद् वक्तव्यं यद्विवक्षितम् ।
क्रमयोगं तमप्याहुर् वाक्ये वाक्यविदो जनाः ॥ ८३॥

धर्मकामार्थमोक्षेषु प्रतिज्ञाय विशेषतः ।
इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ॥ ८४॥

इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते ।
तत्र या नृपते वृत्तिस् तत्प्रयोजनमिष्यते ॥ ८५॥

तान्येतानि यथोक्तानि सौक्ष्म्यादीनि नराधिप ।
एकार्थसमवेतानि वाक्ये मम निशामय ॥ ८६॥

नापेतार्थं न भिन्नार्थं नापवृत्तं न चाधिकम् ।
नाश्लक्ष्णं न च सन्दिग्धं प्रवक्ष्यामि पदं ततः ॥ ८७॥

न गुर्वक्षरसन्दिग्धं पराङ्मुखपदं न च ।
ननु वृत्तं त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ॥ ८८॥

न न्यूनं कष्टशब्दं वा व्युत्क्रमाभिहितं न च ।
न शेषमनुकल्पेन न निष्कारणहेतुकम् ॥ ८९॥

कामात् क्रोधाद्भयाल्लोभाद् दैन्याच्चानार्यकात्तथा ।
भीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथञ्चन ॥ ९०॥

वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप ।

स ममेति विवक्षायां तदा सोऽर्थः प्रकाशते ॥ ९१॥

वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते ।
स्वार्थमाह परार्थं तत् तदा वाक्यं न रोहति ॥ ९२॥

अथ यस्स्वार्थमुत्सृज्य परार्थं प्राह मानवः ।
विशङ्का जायते तस्मिन् वाक्यं तदपि दोषवत् ॥ ९३॥

यस्तु वक्ता द्वयोरर्थम् अविरुद्धं प्रभाषते ।
श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ॥ ९४॥

तदर्थवदिदं वाक्यम् उपेतं वाक्यसम्पदा ।
अविक्षिप्तमना राजन्नेकाग्रश्श्रोतुमर्हसि ॥ ९५॥

काऽसि कस्य कुतश्चेति त्वयाऽहमभिचोदिता ।
तत्रोत्तरमिदं वाक्यं राजन्नेकमनाश्शृणु ॥ ९६॥

यथा जतु च काष्ठं च पांसवश्चोदबिन्दवः ।
संसिद्धानि तथा राजन् प्राणिनामिह सम्भवः ॥ ९७॥

शब्दस्पर्शरसा रूपं गन्धः पञ्चेन्द्रियाणि तु ।
पृथगात्मा दशात्मानस् संश्लिष्टा जतुकाष्ठवत् ॥ ९८॥

न चैषां चोदना काचिद् अस्तीत्येष विनिश्चयः ॥ ९९

एकैकस्येह विज्ञानं नास्त्यात्मेति तथा परे ।
न वेद चक्षुषश्चक्षुश् श्रोत्रं नात्मनि वर्तते ॥ १००

तथैव व्यभिचारेण न वर्तन्ते परस्परम् ।
प्रश्लिष्टमवजानन्ति यथाऽद्भिरिव पांसवः ॥ १०१

बाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु ॥ १०१॥
रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ।
यथैवात्र तथाऽन्येषु ज्ञानज्ञेयेषु हेतवः ॥ १०२॥
ज्ञानज्ञेयान्तरे तस्मिन् मनो नामापरो गुणः ।
विचारयति येनायं निश्चये साध्वसाधुनी ॥ १०३॥
द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणस्स्मृतः ।
येन संशयपूर्वेषु बोद्धव्येषु व्यवस्यति ॥ १०४॥
अथ द्वादशके तस्मिन् सत्त्वं नामापरो गुणः ।
महासत्त्वोऽल्पसत्त्वो वा जन्तुर्येनानुमीयते ॥ १०५॥
क्षेत्रज्ञ इति चाप्यन्यो गुणस्तत्र चतुर्दशः ।
ममायमिति येनायं मन्यते न च मन्यते ॥ १०६॥
अथ पञ्चदशो राजन् गुणस्तत्रापरस्स्मृतः ।
[1]बृहद्बलस्समूहस्य सामग्र्यं यदिहोच्यते ॥ १०७॥
गुणस्तथाऽपरस्तत्र सङ्घात इति षोडशः ॥
आकृतिर्व्यक्तिरित्येतौ गुणौ यस्मिन् समाश्रितौ ॥ १०८॥
सुखासुखे जन्ममृत्यू लाभालाभौ प्रियाप्रिये ।

---

1. क-ख—स मोहस्य (समूहस्य) घ—समोहस्य

इति चैकोनविंशोऽयं द्वन्द्वयोग इति स्मृतः ॥ १०९॥

ऊर्ध्वमेकोनविंशत्याः कालो नामापरो गुणः ।
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययम् ॥ ११०॥

विंशतिश्चैव सङ्घातो महाभूतानि पञ्च च ।
सदसद्भावयोगौ च गुणावन्यौ प्रकाशकौ ॥ १११॥

इत्येवं विंशतिश्चैव गुणास्सप्त च ये स्मृताः ।
विधिश्शुक्रं बलं चेति त्रय एते गुणाः परे ॥ ११२॥

एवं विंशच्च दश च कलास्संख्यानतस्स्मृताः ।
समग्रं यत्र वर्तन्ते तच्छरीरमिति स्मृतम् ॥ ११३॥

अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति ।
व्यक्तं चासां तथैवान्यस् स्थूलदर्शी प्रपश्यति ॥ ११४॥

अव्यक्तां यदि वा व्यक्तां द्वयीमथ चतुष्टयीम् ।
प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ॥ ११५॥

सेयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता ।
अहं च त्वं च राजेन्द्र ये चाप्यन्ये शरीरिणः ॥ ११६॥

बिन्दुन्यासादयोऽवस्थाश् शुक्रशोणितसम्भवाः ।
यासामेव निपातेन कललं नाम जायते ॥ ११७॥

कललाद्बुद्बुदोत्पत्तिः पेशी वा बुद्बुदात् स्मृता ।

पेश्यास्त्वङ्गाभिनिर्वृत्तिर् नखरोमाणि चाङ्गतः ॥ ११८॥
सम्पूर्णे नवमे मासे जन्तोर्जातस्य मैथिल ।
जायते रूपनामत्वं स्त्रीपुमानिति लिङ्गतः ॥ ११९॥
जातमात्रं तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि ।
कौमारं रूपमापन्नं रूपं तेनोपलभ्यते ॥ १२०॥
कौमाराद्यौवनं चापि स्थाविर्यं चापि यौवनात् ।
[1]अनेन क्रमयोगेन पूर्वं पूर्वं न लक्ष्यते ॥ १२१॥
कलानां पृथगर्थानां वृत्तिभेदः क्षणे क्षणे ।
वर्तते सर्वभूतेषु सौक्ष्म्यात्तन्न विभाव्यते ॥ १२२॥
न चैषामप्ययो राजँल्लक्ष्यते प्रभवो न च ।
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः ॥ १२३॥
तस्यास्यैवं प्रकारस्य सदश्वस्येव धावतः ।
अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः ॥ १२४॥
कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः ।
सम्बन्धः कोऽस्ति भूतानां स्वैरप्यवयवैस्सह ॥ १२५॥
यथाऽऽदित्यान् मणेश्चैव [2]वीरुद्भ्यश्चैव पावकः ॥
जायन्त्येवं समुदयात् कलानामिह जन्तवः ॥ १२६॥

---

1. ग—न चैषामप्ययो राजँल्लक्ष्यते प्रभवो न च। [अधिकः पाठः]
2. ग—काष्ठेभ्यश्चैव पावकः

आत्मन्येवात्मनाऽऽत्मानं यथा त्वमनुपश्यसि ।
एवमेवात्मनाऽऽत्मानम् अन्यस्मिन् किं न पश्यसि ॥ १२७॥

न ह्यात्मनि परस्मिंश्च समतामध्यवस्यसि ।
अथ मां काऽसि कस्येति किमर्थमनुपृच्छसि ॥ १२८॥

इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल ।
काऽसि कस्य कुतो वेति वचनैः किं प्रयोजनम् ॥ १२९॥

रिपौ मित्रेऽथ मध्यस्थे विजये सन्धिविग्रहे ।
कृतवान् यो महीपालः किं तस्मिन् मुक्तलक्षणम् ॥ १३०॥

[1]त्रिवर्गे सप्तधा न्यस्तं यो न वेदेह कर्मसु ।
सङ्गवान् यस्त्रिवर्गे च किं तस्मिन् मुक्तलक्षणम् ॥ १३१॥

प्रिये वाऽप्यप्रिये चैव दुर्बले बलवत्यपि ।
यस्य नास्ति समं चक्षुः किं तस्मिन् मुक्तलक्षणम् ॥ १३२॥

[2]तदमुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप ।
सुहृद्भिस्सन्निवार्यस्ते विरक्तस्येव भेषजम् ॥ १३३॥

तानि तान्यनुसन्दृश्य सङ्गस्थानान्यरिन्दम ।
आत्मनाऽऽत्मनि सम्पश्य किं तस्मिन् मुक्तलक्षणम् ॥१३४॥

---

1. ग—अर्धचतुष्टयं नास्ति
2. ग—अर्धद्वयमर्धद्वयादनन्तरमस्ति

[1]इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य कानिचित् ।
चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु ॥ १३५॥

इमां यः पृथिवीं कृत्स्नाम् एकच्छत्रां प्रशास्ति ह ।
एकमेव स वै राजा पुरमध्यावसत्युत ॥ १३६॥

तत् पुरे चैकमेवास्य गृहं यदधितिष्ठति ।
गृहे शयनमप्येकं निशायां यत्र लीयते ॥ १३७॥

शय्यार्धं तस्य चैवात्र स्त्रीपूर्वमधितिष्ठति ।
स तेनैव प्रसङ्गेन फलेनाल्पेन युज्यते ॥ १३८॥

एवमेवोपभोगेषु भोजनाच्छादनेषु च ।
गुणेष्वपरिमेयेषु निग्रहानुग्रहौ प्रति ॥ १३९॥

परतन्त्रस्सदा राजा [2]सान्त्वेनापि प्रयुज्यते ।
सन्धिविग्रहयोगे च कुतो राज्ञस्स्वतन्त्रता ॥ १४०॥

स्त्रीषु क्रीडाविहारेषु नित्यमप्यस्वतन्त्रता ।
मन्त्रे चामात्यसहिते कुत एव स्वतन्त्रता ॥ १४१॥

स यदाऽऽज्ञापयत्यन्यांस् तस्योक्ता स्वतन्त्रता ।
अवशः कार्यते तत्र यस्मिंस्तस्मिन् गुणे स्थितः ॥ १४२॥

---

1. ग—तदमुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप ।
सुहृद्भिस्संनिवार्यस्ते विमुक्तस्येव भेषजम् ॥ [अधिकः पाठः]

2. ग—स्वल्पे सोऽपि प्रसज्जते

स्वप्तुकामो न लभते स्वप्नं कार्यार्थिभिर्जनैः ।
शयने चाप्यनुज्ञातस् सुप्त उत्थाप्यतेऽवशः ॥ १४३॥

स्नाह्यालभ [1]पिब प्राश जुहुध्यग्नीन् यजेति च ।
वदस्व शृणु चापीति विवशः कार्यते परैः ॥ १४४॥

अभिगम्याभिगम्यैनं याचन्ते सततं नराः ।
न चाप्युत्सहते दातुं वित्तरक्षी महाजनात् ॥ १४५॥

दाने कोशक्षयो ह्यस्य वैरं चाप्यप्रयच्छतः ।
क्षणेनास्योपवर्तन्ते दोषा वैराग्यकारकाः ॥ १४६॥

प्राज्ञाञ् शूरांस्तथैवान्यान् एकस्थानान् विशङ्कते ।
अभयेऽपि भयं राज्ञो यैश्च नित्यमुपास्यते ॥ १४७॥

तथा चैते प्रदुष्यन्ति राजन् ये कीर्तिता मया ।
तदैवास्य भयं तेभ्यो जायते पश्य यादृशम् ॥ १४८॥

सर्वस्स्वे स्वे गृहे राजा सर्वस्स्वे स्वे गृहे गृही ।
निग्रहानुग्रहौ कुर्वस् तुल्यो जनक राजभिः ॥ १४९॥

पुत्रा दारास्तथैवात्मा कोशो मित्राणि सञ्चयाः ।
परैस्साधारणा ह्येते तैस्तैरेवास्य हेतुभिः ॥ १५०॥

हतो देशः पुरं दग्धं प्रधानः कुञ्जरो हतः ।
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ॥ १५१॥

---

1. ग—पिबाशान

अमुक्तो मानसैर्दुःखैर् इच्छाद्वेषप्रियोद्भवैः ।
[1]लिङ्गरोगादिभी रोगैस् तथैव विनिपातिभिः ॥ १५२॥

द्वन्द्वैस्तैस्तैरुपहतस् सर्वतः परिशङ्कितः ।
बहुभिः प्रार्थितं राज्यम् उपास्ते गणयन् निशाः ॥ १५३॥

[2]तदल्पसुखमत्यर्थं बहुदुःखमसारकम् ।
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् ॥ १५४॥

ममेदमिति यच्चेदं [3]पुरं राष्ट्रं च मन्यसे ।
बलं कोशममात्यांश्च कस्यैतानि न वा नृप ॥ १५५॥

मित्रामात्यपुरं राष्ट्रं दण्डः कोशो महीपतिः ।
सप्ताङ्गश्चैष सङ्घातो राज्यमित्युच्यते नृप ॥ १५६॥

सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः ।
अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ॥ १५७॥

तेषु तेषु च कालेषु तत्तदङ्गं विशिष्यते ।
येन यत् सिध्यते कार्यं तत् प्राधान्याय कल्पते ॥ १५८॥

सप्तानां चात्र सङ्घातस् त्रयश्चान्ये नृपोत्तम ।
सम्भूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ॥ १५९॥

यश्च राजा महोत्साहः क्षत्रधर्मे रतो भवेत् ।

---

1. ग—शिरो 2. ग—इदमर्धं नास्ति
3. ग—परराष्ट्रं

स तुष्येद्दशभागेन ततस्त्वन्यैर्दशावरैः ॥ १६०॥
नास्त्यसाधारणो राजा नास्ति राज्यमराजकम् ।
राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः परम् ॥ १६१॥
योऽप्यत्र परमो धर्मः पवित्रं राजराज्ययोः ।
पृथिवी दक्षिणा यस्य सोऽश्वमेधो न विद्यते ॥ १६२॥
अहमेतानि कर्माणि राजदुःखानि मैथिल ।
समर्था शतशो वक्तुम् अथ वाऽपि सहस्रशः ॥ १६३॥
स्वदेहे नाभिषङ्गो मे कुतः परपरिग्रहे ।
न मामेवंविधां युक्ताम् ईदृशं वक्तुमर्हसि ॥ १६४॥
ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः ।
सोपायस्सोपनिषदस् सोपासङ्गस्सनिश्चयः ॥ १६५॥
तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः ।
छत्रादिषु विशेषेण कथं सङ्गः पुनर्नृप ॥ १६६॥
श्रुतं ते न श्रुतं मन्ये [1]मृषा वाऽपि श्रुतं श्रुतम् ।
अथ वा श्रुतसङ्काशं श्रुतमन्यच्छ्रुतं त्वया ॥ १६७॥
अथापीमासु संज्ञासु लौकिकीषु प्रतिष्ठसे ।
अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा ॥ १६८॥
सत्त्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया ।

1. क-ख-ग—मिथ्यैवापि

किं नु पापं कृतं तत्र यदि मुक्तोऽसि सर्वतः ॥ १६९॥
नियमो ह्येषु धर्मेषु यतीनां शून्यवासिता ।
शून्यमावासयन्त्या च मया किं कस्य दूषितम् ॥ १७०॥
न पाणिभ्यां न बाहुभ्यां [1]पादोरुभ्यां कदाचन ।
न गात्रावयवैरन्यैस् स्पृशामि त्वां नराधिप ॥ १७१॥
कुले महति जातेन ह्रीमता दीर्घदर्शिना ।
नैतत् सदसि वक्तव्यं सद्वाऽसद्वा मिथः कृतम् ॥ १७२॥
ब्राह्मणा गुरवश्चेमे तथा [2]मान्या गुरूत्तमाः ।
त्वं चाद्य गुरुरप्येषाम् एवमन्योन्यगौरवम् ॥ १७३॥
तदेवमनुसन्दृश्य वाच्यावाच्यं परीक्षता ।
स्त्रीपुंसोस्समवायोऽयं त्वया वाच्यो न संसदि ॥ १७४॥
यथा पुष्करपर्णस्थं जलं तत् पर्णसंस्थितम् ।
तिष्ठत्यस्पृशती तद्वत् त्वयि वत्स्यामि मैथिल ॥ १७५॥
यदि वाऽपि स्पृशन्त्या मे स्पर्शं जानासि कञ्चन ।
ज्ञानं कृतमबीजं ते कथं वै केन भिक्षुणा ॥ १७६॥
स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं चाप्राप्य दुर्विदम् ।
उभयोरन्तराले वै वर्तसे मोक्षवादिकः ॥ १७७॥
न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः ।

1. ख—न चोरुभ्यां ; ग—पदोरुभ्यां न चाप्यहम्
2. ग-ब—ऽमान्या

भावाभावसमायोगे जायते वर्णसङ्करः । १७८॥

वर्णाश्रमपृथक्त्वे च दृष्टार्थस्यापृथक् कुतः ।
नान्यदन्यदिति ज्ञात्वा नान्यदत्र प्रवर्तते ॥ १७९॥

पाणौ कुण्डं तथा कुण्डे पयः पयसि मक्षिका ।
आश्रिताश्रितयोगेपु पृथक्त्वं नाश्रिता वयम् ॥ १८०॥

न तु कुण्डे पयोभावः पयस्यपि न मक्षिका ।
स्वयमेवाप्नुवन्त्येते भावा न तु पराश्रयात् ॥ १८१॥

पृथक्त्वादाश्रमाणां च वर्णान्यत्वे तथैव च ।
परस्परपृथक्त्वाच्च कथं ते वर्णसङ्करः ॥ १८२॥

नास्मि वर्णोत्तमा जात्या न वैश्या नावरा तथा ।
तव राजन् सवर्णाऽस्मि शुद्धयोनिरविप्लुता ॥ १८३॥

प्रधानो नाम राजर्षिर् व्यक्तं ते श्रोत्रमागतः ।
कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् ॥ १८४॥

द्रोणश्च शतशृङ्गश्च वक्रद्वारश्च पर्वतः ।
मम सत्रेपु पूर्वेषां चिता मघवता सह ॥ १८५॥

साऽहं तस्य कुले जाता भर्तर्यसति मद्विधे ।
विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ १८६॥

नास्मि सत्त्वप्रतिच्छन्ना न परस्वाभिमानिनी ।

[1]न धर्मसङ्करकरी स्वधर्मेऽस्मि दृढव्रता ॥ १८७॥
नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्य प्रवादिनी ।
नासमीक्ष्यागता चाहं त्वत्समीपं जनाधिप ॥ १८८॥
मोक्षे ते भावितामेतां श्रुत्वा वै कुशलैषिणी ।
न च मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता ॥ १८९॥
न वर्गस्था ब्रवीम्येतत् स्वपक्षपरपक्षयोः ।
मुक्तो न मुच्यते यश्च शान्तो यश्च न शाम्यति ॥ १९०॥
[2]यथा शून्ये परागारे भिक्षुरेकां निशां वसेत् ।
तथा हि त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्वरीम् ॥ १९१॥
साऽहमासनदानेन वागातिथ्येन चार्चिता ।
[3]स्वन्ना सुशरणा प्रीता श्वो गमिष्यामि मैथिल ॥ १९२॥

भीष्मः—

इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च ।
श्रुत्वा नाधिजगौ राजा किञ्चिदन्यदतः परम् ॥ १९३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
[अस्मिन्नध्याये १९३॥ श्लोकाः]

---

1. घ—न धर्मस्य च धिक्कारी
2. ग—न वर्गस्था ब्रवीम्येतत् स्वपक्षपरपक्षयोः । [अधिकः पाठः]
3. ग—सुप्ता सुशरणात् प्रीता

## ॥ त्र्यधिकत्रिशततमोऽध्यायः ॥*



आसुरिणा कपिलं प्रति अव्यक्तादितत्त्वविषयकप्रश्नः ॥ १ ॥ आसुरिं प्रति कपिलेन व्यक्ताव्यक्ततत्त्वनिरूपणम् ॥ २ ॥ तत्त्वविभागादिकथनम् ॥ ३ ॥ अध्यात्माधिभूताधिदैवतनिरूपणम् ॥ ४ ॥ सर्गप्रलयनिरूपणम् ॥ ५ ॥ प्राकृतवैकृतसृष्टिनिरूपणम् ॥ ६ ॥ भूतभव्यभविष्यनिरूपणम् ॥ ७ ॥ ज्ञानज्ञेयत्रित्रिवर्गनिरूपणम् ॥ ८ ॥ ज्ञातप्रतिबुद्धबुध्यमाननिरूपणम् ॥ ९ ॥ पर्वस्रोतसां निरूपणम् ॥ १० ॥ कर्मयोनिनिरूपणम् ॥ ११ ॥ एकत्वनानात्वसहवासविवासनिरूपणम् ॥ १२ ॥ विद्याविद्यानिरूपणम् ॥ १३ ॥ कुशलाकुशलवर्गावर्गकृत्स्नक्षयशुद्धाशुद्धकेवलाकेवलपरात्परपश्यापश्यशाश्वतव्यतिरिक्ताव्यतिरिक्तयोगायोगप्रश्नः ॥ १४ ॥ क्रमेणैषां प्रत्युत्तरम् ॥ १५ ॥ साङ्ख्यज्ञानस्य सर्वोत्कृष्टत्वप्रतिपादनम् ॥ १६ ॥ साङ्ख्यज्ञानस्य कपिलादाचार्यात् भीष्मपर्यन्तं प्राप्तिक्रमः ॥ १७ ॥

---

युधिष्ठिरः—

अव्यक्तव्यक्ततत्त्वानां निश्चयं भरतर्षभ ।
वक्तुमर्हसि कौरव्य देवस्याजस्य या कृतिः ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
कपिलस्यासुरेश्चैव सर्वदुःखविमोक्षणम् ॥ २

आसुरिः—

अव्यक्तव्यक्ततत्त्वानां निश्चयं बुद्धिनिश्चितम् ।

---

* इतश्चत्वारोऽध्यायाः 303, 304, 305, 306, ख-ग-घ—कोशेषु नोपलभ्यन्ते ; अ-क—कोशयोः पञ्चत्रिंशदध्यायात्मकतया सन्ति ॥

भगवन्नमितप्रज्ञ वक्तुमर्हसि मेऽर्थतः ॥ ३

किं व्यक्तं किमव्यक्तं किं व्यक्ताद्व्यक्ततरं कति तत्त्वानि । किमाद्यं मध्यमं च तत्त्वानां किमध्यात्ममधिभूतमधिदैवं च॥ ४

किं नु सर्गाप्ययं कति सर्गाः किं भूतं किं भविष्यं किं भव्यं च किं ज्ञानम् । किं ज्ञेयं को ज्ञाता किं बुद्धं किमप्रतिबुद्धं किं बुध्यमानं कति पर्वाणि ॥ ५ ॥

कति स्रोतांसि कति कर्मयोनयः किमेकत्वं किं नानात्वम् । किं सहवासं निवासं किं विद्याविद्यमिति ॥ ६ ॥*

कपिलः—

यद्भवानाह किं व्यक्तं किमव्यक्तमिति अत्र ब्रूमः ॥ ७ ॥

अव्यक्तमग्राह्यमतर्क्यमपरिमेयमव्यक्तं ॥ ८ ॥ व्यक्तमुपलक्ष्यते ॥ ९ ॥ यथर्तवो मूर्तयस्तेषु पुष्पफलैर्व्यक्तिरुपलक्ष्यते तद्वद्व्यक्तं गुणैरुपलक्ष्यते ॥१०॥

प्राग्गतं प्रत्यग्गतमूर्ध्वमधस्तिर्यक्च सतश्चाननुग्राह्यत्वात् साऽऽकृतिः ॥ ११ ॥

अव्यक्तस्य तमो रजस्सत्त्वं तत्प्रधानं तत्त्वं परं क्षेत्रं

*अ-क—कोशानुसारेण मोक्षधर्मे एकोनषष्ट्यधिकशततमोऽध्यायः

सलिलममृतं भयमव्यक्तमक्षरमजं जीवदित्येवमादीन्यव्यक्तनामानि भवन्ति । एवमाह ॥ १२ ॥

अव्यक्तं बीजधर्माणां महाग्राहमचेतनम् ।
यस्मादेकगुणं जज्ञे तद्व्यक्तं तत्त्वमीश्वरः ॥ १३ ॥

तदेतदव्यक्तम् । प्रसवधारणादानस्वभावमापोधारणे प्रजनने दाने गुणानां प्रकृतिस्सदा पराप्रमत्तं तदेतदस्मिन् कार्यकरणे ॥ १४ ॥

यदप्युक्तं किं व्यक्तमित्यत्र ब्रूमः ॥ १५ ॥ व्यक्तं नामासुरे यत् पूर्वमव्यक्तादुत्पन्नतत्त्वमीश्वरमप्रतिबुद्धगुणस्थमेतत्पुरुषसंज्ञकं महदित्युक्तं मतिरित्युक्तम् घृतिरिति च सत्ता स्मृतिर्धृतिर्मेधा व्यवसायः समाधिप्राप्तिरित्येवमादीनि व्यक्तपर्यायनामानि वदन्ति ॥१६॥ एवमाह ॥ १७ ॥

महतस्सिद्धिरायत्ता संशयश्च महद्यतः ।
पुत्रसर्गस्य दीप्त्यर्थम् औत्सुक्यं च परं तथा ॥ १८ ॥

तदेषोर्ध्वस्रोताभि[1]र्महत्त्वादप्रतिबुद्धत्वाच्चात्मनः प्रकरोत्यहङ्कारं व्यक्ताद् व्यक्ततरम् ॥ १९ ॥

यदप्युक्तं किं व्यक्ताव्यक्ततरमित्यत्र ब्रूमः ॥ २०

व्यक्ताव्यक्ततरं नाम तृतीयं पुरुषसंज्ञकम् ॥ २१

1. क—मुखत्वाद

तदेतयोरुभयोर्विरिञ्चवैरिञ्चयोरेकैकस्योत्पत्तिः ॥ २२

विरिञ्चोऽभिमानिन्यविवेक ईर्ष्या कामः क्रोधो लोभो दर्पो
मोहो ममकारश्चैतान्यहङ्कारपर्यायनामानि भवन्ति ॥ २३

एवमाह ॥ २४

अहं कर्तेत्यहङ्कर्ता ससृजे विश्वमीश्वरः ।
तृतीयमेतं पुरुषम् अभिमानगुणं विदुः ॥ २५

अहङ्काराद्युगपदुत्पादयामास पञ्च महाभूतानि शब्दस्पर्श-
रूपरसगन्धलक्षणानि॥२६॥तान्येव बुद्ध्यन्त इत्येवमाह ॥२७

भूतसर्गमहङ्काराद् यो विद्वानवबुध्यते ।
सोऽभिमानमतिक्रम्य महान्तं प्रतितिष्ठते ॥ २८

भूतेषु चाप्यहङ्कारम् असद्रूपस्तथोच्यते ।
पुनर्विषयहेत्वर्थे स मनस्संज्ञकस्स्मृतः ॥ २९

विखराद्वैखरं युगपदिन्द्रियैः सहोत्पादयति ॥ ३० ॥ श्रोत्रं
घ्राणं चक्षुर्जिह्वा त्वागित्येतानि शब्दस्पर्शरूपरसगन्धानवबुध्यन्त
इति पञ्च बुद्धीन्द्रियाणि वदान्ति॥३१॥एवमाहुराचार्याः ॥३२

वाग्घस्तौ पादपायुरानन्दश्चेति पञ्च कर्मेन्द्रियाणि विशेषाः
॥ ३३ ॥ आदित्योऽश्वीनौ नक्षत्राणीत्येतानीन्द्रियाणां पर्याय-
नामानि भवन्ति ॥३४॥ एवमाह ॥ ३५

अहङ्कारात्तथा भूतान्युत्पाद्य महदात्मनोः ।

वैखरत्वं ततो ज्ञात्वा वैखरो विषयात्मकः ॥ ३६

विकारस्थमहङ्कारम् अवबुध्याथ मानवः ।
महदैश्वर्यमाप्नोति यावदाचन्द्रतारकम् ॥* ३७

यदप्युक्तं कति तत्त्वानि भवन्तीति ॥ ३८ ॥ तत्त्वमेतानि
मयाऽनुपूर्वशः पूर्वोक्तानि ॥ ३९ ॥ एवमाह ॥ ४०

तत्त्वान्येतान्यथोक्तानि यथावद्योऽनुबुद्ध्यते ।
न स पापेन लिप्येत निर्मुक्तस्सर्वसङ्करात् ॥ ४१

यदप्युक्तं किमाद्यं मध्यमं च तत्त्वानामित्यत्र ब्रूमः ॥ ४२

एतदाद्यं मध्यमं चोक्तं बुद्ध्यादीनि त्रयोविंशतितत्त्वानि
विशेषपर्यवसानानि ज्ञातव्यानि भवन्तीत्येवमाह ॥ ४३
केनेत्यत्रोच्यते ॥ ४४

देवदत्तयज्ञदत्तब्राह्मणक्षत्रियवैश्यशूद्रचण्डालपुल्कसादिरेतानि
ज्ञातव्यानि बुद्ध्यादीनि विशेषपर्यवसानानि मन्तव्यानि प्रत्ये-
तव्यान्युक्तानि ॥४५॥ एतदाद्यं मध्यमं च ॥ ४६॥ एतस्मा-
त्तत्त्वानामुत्पत्तिर्भवति अत्र प्रलीयन्ते ॥ ४७ ॥ केचिदाहु-
राचार्याः ॥ ४८

अहमित्येतदात्मकं सशरीरसङ्घातं त्रिषु लोकेषु व्यक्तमव्य-
क्तसूक्ष्माधिष्ठितमेतद्देवदत्तसंज्ञकम् ॥ ४९

*अ-क—षष्ट्यधिकशततमोऽध्यायः

देहिनां योगदशमपुरुषदर्शनानां तु पञ्चविंशतितत्त्वानां बुद्ध्यमानाप्रतिबुद्धयोर्व्यतिरिक्तमुपेक्षकं शुचि व्यभ्रमित्याहुराचार्याः ॥ ५० ॥ एवं चाह ॥ ५१

चतुर्विंशतितत्त्वज्ञस्त्वव्यक्ते प्रतितिष्ठति ।
पञ्चविंशतितत्त्वज्ञो व्यक्तमप्यधितिष्ठति* ॥ ५२

यदप्युक्तं किमध्यात्ममधिभूतमधिदैवतमिति । अत्र ब्रूमः॥ ५३
अध्यात्ममधिभूतमधिदैवतं चासुरे वक्ष्यामः ॥ ५४
पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतम् ॥ ५५
पायुरध्यात्मं विसर्गमधिभूतं मित्रोऽधिदैवतम् ॥ ५६
आनन्दोऽध्यात्ममनुभवोऽधिभूतं प्रजापतिरधिदैवतम् ॥ ५७
हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतम् ॥ ५८
वागध्यात्मं वक्तव्यमधिभूतं [1]सूर्योऽधिदैवतम् ॥ ५९
घ्राणोऽध्यात्मं घ्रेयमधिभूतं भूमिरधिदैवतम् ॥ ६०
श्रोत्रमध्यात्मं श्रोतव्यमधिभूतमाकाशमधिदैवतम् ॥ ६१
चक्षुरध्यात्मं द्रष्टव्यमधिभूतं सूर्योऽधिदैवतम् ॥ ६२
जिह्वाऽध्यात्मं रसोऽधिभूतमापोऽधिदैवतम् ॥ ६३
त्वगध्यात्मं स्पृष्टमधिभूतं वायुरधिदैवतम् ॥ ६४

---

*अ-क—एकषष्ट्यधिकशततमोऽध्यायः

1. क—अग्निरधि

मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतम् ।　६५
अहङ्कारोऽध्यात्मं अभिमानोऽधिभूतं विरिञ्चोऽधिदैवतम् ॥६६
बुद्धिरध्यात्मं बोद्धव्यमधिभूतं पुरुषोऽधिदैवतम् ॥　६७
एतावदध्यात्ममधिभूतमधिदैवतं च सर्वत्र प्रत्येतव्यानि ॥　६८

ब्राह्मणे नृपतौ कीटे श्वपाके शुनि हस्तिनि ।
पुत्रिकादंशमशके विहङ्गे च समं भवेत् ॥　६९

अव्यक्तपुरुषयोर्योगाद् बुद्धिरुत्पद्यतेऽऽत्मनि ।
यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥　७०

य एतत्त्रितयं वेत्ति शुद्धं चान्यदुपेक्षकम् ।
विरजो वितमस्कं च निर्मलं शिवमव्ययम् ॥　७१

सन्देहसङ्करान्मुक्तो निरिन्द्रियमनीश्वरम् ।
निरङ्कुरमबीजं च शाश्वतं तदवाप्नुयात् ॥　७२

यदप्युक्तं किं नु सर्गाप्ययमिति अत्र ब्रूमः ॥　७३

तद्यथा जरायुजाण्डजस्वेदजोद्भिज्जाश्चत्वारो भूतग्रामाः कालाग्निनाऽहंकृतेनानेकसहस्रांशुना दह्यमानाः पृथिवीमनुप्रलीयन्ते ॥७४॥ तदात्तगन्धा कूर्मपृष्ठनिभा पृथिवी अप्सु प्रलीयते ॥७५॥ तदुदकं सर्वमभवत् ॥७६॥ अग्निरप्यादत्ते तोयं ॥ ७७ ॥ तदाऽग्निभूतमभवत् । अग्निमप्यादत्ते वायुः ॥७८॥

स वायुरूर्ध्वमधस्तिर्यक्च दोधवीति ॥७९॥ तद्वायुभूतमभवत्
॥८०॥ वायुमप्यादत्ते व्योम ॥८१॥ तदाकाशमेव निनाद-
मभवत् ॥८२॥ तदाकाशं मनसि प्रलीयते ॥ ८३ ॥ मनोऽ-
हङ्कारे अहङ्कारो महति महानव्यक्ते तदेतत् प्रलीयते ॥८४॥
प्रलयान्तान्महाप्रलय इत्युच्यते ॥८५॥ प्रणष्टसर्वस्वस्तम एवा-
प्रतिमं भवति ॥ ८६ ॥ अग्राह्यमच्छेद्यमभेद्यमप्रतर्क्यमनादिम-
चिन्त्यमनालम्ब्यमस्थानमव्ययमजं शाश्वतमिति ॥ ८७ ॥ एव-
माह ॥ ८८

सर्गप्रलयमेतावत् तत्त्वतो योऽवबुध्यते ।
उत्तीर्य सोऽशिवादस्माच् छिवमानन्त्यमश्नुते ॥* ८९

यदप्युक्तमासुरे कति सर्गाणि प्राकृतवैकृतानि भवन्तीति
अत्र ब्रूमः । ९०

नवसर्गाणि प्राकृतवैकृतानि भवन्ति ॥९१॥ अव्यक्तान्म-
हदुत्पद्यते ॥ ९२ ॥ तं विद्यासर्गं वदन्ति ॥९३॥ महतश्चा-
हङ्कार उत्पद्यते ॥ ९४ ॥ अहङ्कारात्पञ्चभूतसर्गः ॥ ९५ ॥
भूतेभ्यो विकारः ॥९६॥ यस्मात् कृत्स्नस्य जगतस्तेजस्तमेतत्
प्रभवाप्ययमेवमाहुः ॥ ९७

उत्पत्तिनिधनं मध्यं भूतानामात्मनश्च यः ।

* अ-क—द्विषष्ट्यधिकशततमोऽध्यायः

विद्याविद्ये च यो वेत्ति स वाच्यो भगवानिति ॥ ९८

यदप्युक्तं किं भूतं किं भव्यं किं भविष्यं चेत्यत्र ब्रूमः ॥ ९९

भूतं भव्यं भविष्यं चासुरे त्रैलोक्यं कालः स महात्मा सम्प्रतीतानागतानामुत्पादकानामुत्पादकं चानुग्राहकश्च तिरोभावकश्चेत्येवमाह ॥ १००

भूतभव्यभविष्याणां स्रष्टारं कालमीश्वरः ।
योऽवबुध्यति तद्गामी स दुःखात् परिमुच्यते ॥ १०१

कतरस्माद्दुःखात् ॥१०२॥ जन्मजरामरणाज्ञानबधिरान्धकुब्जहीनातिरिक्ताङ्गावयवबन्धवैरूप्यचिन्ताव्याधिप्रभृतिभिरन्यैश्चानेकैरिति ॥* १०३

यदप्युक्तं किं ज्ञानमिति अत्र ब्रूमः ॥ १०४

ज्ञानं नामासुरे प्रज्ञा सा बुद्धिः यया बोद्धव्यमनुबुद्ध्यते ॥
१०५॥ किं पुनस्तद्बोद्धव्यमित्यत्रोच्यते ॥१०६॥ बोद्धव्यं नाम
द्विविधं इष्टानिष्टकृतम् ॥ १०७ ॥ तद्यथा इदं धर्म्यमिदमधर्म्यं
इदं वाच्यमिदमवाच्यं इदं कार्यमिदमकार्यं इदं ग्राह्यमिदमग्राह्यं
इदं गम्यमिदमगम्यं इदं श्राव्यमिदमश्राव्यं किं भक्ष्यं किमभक्ष्यं
इदं भोज्यमिदमभोज्यं इदं पेयमिदमपेयं इदं लेह्यमिदमलेह्यं इदं
चोष्यमिदमचोष्यं इदं ॥१०८॥ कुतश्चैतान्यवतिष्ठन्ते ॥१०९

---

* अ-क—त्रिषष्ट्यधिकशततमोऽध्यायः

क वा प्रलीयन्ते कस्य वैतानि कस्य वा नैतानि ॥ ११० ॥
तत्र च्यवते ॥ १११ ॥ अव्यक्तादेतान्यवतिष्ठन्ते अव्यक्त-
मेवाभिप्रलीयन्ते ॥११२॥ अव्यक्तस्यैतानि क्षेत्रज्ञस्य [1]केनेदानीं
कारणेनेष्टानीष्टकृतैर्द्वन्द्वैरवबुध्यते क्षेत्रज्ञः ॥११३॥ कस्मादभि-
मन्यते ममैवैतानि द्वन्द्वानि । अहमेतेषां मत्तश्चैतान्यवतिष्ठन्ते
मय्येवाभिप्रलीयन्त इत्येवमाह— ११४

प्रवर्तमानान् प्रकृतेरिमान् गुणान्
तमोवृतोऽयं विपरीतदर्शनः ।
अहं करोमीत्यबुधोऽवमन्यते
तृणस्य कुब्जीकरणेऽप्यनीश्वरः ॥ ११५

यदा त्वयमभिमन्यते । अव्यक्तादेतान्यवतिष्ठन्ते । अव्यक्त-
मेवाभिप्रलीयन्ते । अव्यक्तस्यैतानि नैतानि ममेति ॥ ११६ ॥
तदाऽस्य विज्ञानाभिसम्बन्धाद्विवासोऽज्ञात् सृजति गुणान्
भवत्येवमाह— ११७

सेतुरिव भवेत् प्रकृतिर् जलमिव गुणा मत्स्यवत् क्षेत्रि ।
तस्मिन् स्वभावलुलिते जले प्रवृत्ते चरति मत्स्यः ॥ ११८

एवं स्वभावयोगात् प्रकृतिगुणान् प्रकृतिरित्यभिमतं ॥११९
नासौ ज्ञेषु प्रविचरति क्षेत्रज्ञो ज्ञः परः प्रकृतेरिति ॥ १२०

1. क-म केनेदानीं

यदप्युक्तं किं ज्ञेयमिति ॥१२१॥ अत्र ब्रूमः ॥ १२२

ज्ञेयं नामासुरे पुरुषः पञ्चविंशतितत्त्वानि भवति १२३

एवमाह— १२४

अव्यक्तं बुद्ध्यहङ्कारे महाभूतानि पञ्च च ।
विशेषान् पञ्च चैवाहुर् दशैकं च प्रयोजकान् ॥ १२५

एकादशेन्द्रियाण्येव एतावज्ज्ञेयसंज्ञितम् ।
पञ्च पञ्च हि वर्गाणि विज्ञेयान्येवमादधुः ॥ १२६

पञ्चविंशतितत्त्वानि पञ्चविंशतितत्त्वतः ।
विशुद्धः पुरुषश्चास्माद् वर्गहीनो न शोचति ॥ १२७

पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
त्रयस्त्रिवर्गान् यो वेद शुद्धात्मनि स लीयते ॥ १२८

के ते त्रयस्त्रिवर्गा इत्यत्र ब्रूमः— १२९

सत्त्वं रजस्तम इति प्रथमः ॥१३०॥ उत्पाद्यकोऽनुग्राह्यक-
स्तिरोभावक इति द्वितीयः ॥ १३१ ॥ बुद्धोऽप्रतिबुद्धो बुद्ध्य-
मान इति तृतीयः ॥ १३२ ॥ एवमेते त्रयस्त्रिवर्गा भवन्ति
॥१३३॥ एवमाह ॥ १३४

त्रयस्त्रिवर्गान् विज्ञाय याथातथ्येन मानवः ।
कर्मणा मनसा वाचा प्रविमुक्तो न शोचति ॥ १३५

कार्यं कारणं कर्तृत्वमिति वर्गगुणाः ॥१३६॥ के गुणाः, ॥१३७॥ गुणमात्रा गुणलक्षणं गुणावयवम् ॥१३८॥ सत्त्वं रजस्तम इति गुणाः ॥१३९॥ तत्र तत्त्वदर्शनता भयनाशः स्वस्थभावता प्रसन्नेन्द्रियता सुखस्वप्नप्रतिबोधन इति सत्त्वमात्राः ॥१४०॥ रागिता मत्सरिता साहसिकता परितापिता अरिष्ट-स्वप्नप्रतिबोधनतेति रजोमात्राः ॥ १४१ ॥ अलसता निद्रावेशिता धर्मद्वेषिता अकार्येष्वप्रमादता स्मृतिनाशश्चेति तमोमात्राः ॥१४२॥ गुणवृत्तमित्यपास्य सर्वभूतमध्यस्थः। तमसाऽभिभूतः स्वपितृसत्त्वविशुद्धोऽवबुध्यते ॥१४३॥ सुप्तप्रतिबोधनानन्तरं रज इति अवयवान् य एवं विन्दते प्राज्ञस्सर्वतो विमुच्यत इति* ॥ १४४

कपिलः—

यदप्युक्तं को ज्ञातेति? अत्र ब्रूमः १४५

ज्ञाता नामासुरे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षको ज्ञानात्मको बुध्यमानाप्रतिबुद्धयोः परं तं विदित्वा निरवयवमस्माद्दुःखाद्विमुच्यत इति ॥१४६॥ एवमाह—"पञ्चविंशतितत्त्वाद्विनिष्कलं शुचिमत्रणं न शोचति" वेदश्रुतिनिदर्शनात् ॥ १४७

यदप्युक्तं किमप्रतिबुद्धं किं बुध्यमानं चेति । अत्र ब्रूमः ॥१४८॥ अप्रतिबुद्धं नामासुरे अव्यक्तं बुध्यमानं बुद्धिस्थं

* अ-क—चतुष्षष्ट्यधिकशततमोऽध्यायः

परमेताभ्यामन्यदुपेक्षकं शुद्धं व्यभ्रमिति ॥ १४९ ॥ एव-
माह— १५०

बुध्यमानाप्रतिबुद्धाभ्यां बुद्धस्य च निरात्मनः ।
पारावर्यं विदित्वा तु ज्ञानसाफल्यमाप्नुयात् ॥ १५१

ये त्वेवं नाम बुद्ध्येरन् यथाशास्त्रनिदर्शनात् ।
त्रितयं तेष्वसाफल्यं शास्त्राभावादथासुरे* ॥ १५२

कपिलः—

यदप्युक्तं कति पर्वाणि भवन्तीति । अत्रोच्यते ॥१५३॥
तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति ॥१५४॥ तम
इत्यज्ञानमेवाधिकुरुते ॥ १५५ ॥ मोह इत्यालस्यमेवाधिकुरुते
॥ १५६ ॥ महामोह इति काममेवाधिकुरुते ॥ १५७ ॥
कस्मान्महतामप्यत्र देवदानवमहर्षीणां महान् मोहो भवतीति
॥१५८॥ तामिस्र इति क्रोधमेवाधिकुरुते ॥१५९॥ अन्धता-
मिस्रइति विषादमेवाधिकुरुते ॥१६०॥ विषादश्च मृत्युः स
चाप्रतिबुद्धस्य भवति ॥१६१॥ कस्मात् यत् सत्त्वस्थोऽहमिति
पश्यन् मोहात् स सत्त्वविनाशे नित्यस्य क्षेत्रज्ञस्य विनाशमनु-
पश्यति ॥१६२॥ यत् त्रैकाल्यमन्धतामिस्रं विषादमेवर्छेति
अहं मरिष्यामि अहं मर्त्योऽनित्यत्वादज्ञानत्वाच्च मरणजननत्वे
स्वशरीरसंज्ञिते चाभिष्वजते ॥१६३॥ अहं तव मम त्वं माता

* अ-क—पञ्चषष्ट्यधिकशततमोऽध्यायः

मम मातुरहं पुत्रो मम पितुरित्येवमादिषु स्नेहायतनेष्वभिधत्ते
॥१६४॥ सततं दुःखानुद्वन्द्वः तासु तासु योन्यवस्थास्वभि-
निविष्यमाणो मम सुखदुःखमित्येवमादिभिः सर्वद्वन्द्वैरभ्याहतो-
ऽहङ्कारस्पृष्टो मात्सर्यकामक्रोधलोभमोहमानदर्पमदाविष्टस्तृष्णार्त-
श्चेन्द्रियानुकूलतो कृत्वाऽनियतमानसः शुभाशुभमेव कर्म
स्थावरनिरयतिर्यग्योनिष्ववपद्यते वर्षसहस्रकोटिशतान्यनन्तानि
एकोऽनवबोधात् ॥१६५॥ एवं ह्याहुः— १६६

पर्वाणि पर्वाणि घोराणि यो विद्वानवपद्यते ।
बध्यते मृत्युपाशैश्च हर्षशोकसमन्वितः ॥ १६७

बुध्यमानो ह्यदीनात्मा विदितार्थस्तु तत्त्वतः ।
विमुच्यते मृत्युपाशैर् विद्यया गतनिश्चयः ॥ इति १६८

यदप्युक्तं कति स्रोतांसि भवन्तीति । अत्र ब्रूमः १६९

पञ्चस्रोतांसि भवन्ति मुख्यस्रोतस्तिर्यक्स्रोत ऊर्ध्वस्रोतो-
ऽर्वाक्स्रोतोऽनुग्रहस्रोतश्चेति ॥* १७०

कपिलः—

यदप्युक्तं कति कर्मयोनयो भवन्तीति । अत्र ब्रूमः १७१
पञ्चकर्मयोनयो भवन्ति धृतिश्श्रद्धा सुखा विविदिषाऽविविदि-
षा चेति ॥ १७२॥ तत्र धृतिर्नाम कर्मयोनिः ॥१७३॥ धृतिं

* अ-क—षट्षष्ट्यधिकशततमोऽध्यायः

यो न रक्षति त्रिविधेन कर्मणा वाङ्मनससमुत्थानेनेति ॥१७४
एवमाह— १७५

वाचि कर्मणि सङ्कल्पे प्रतिज्ञां यो न रक्षति ।
तन्निष्ठस्तत्प्रतिज्ञश्च धृतेरेतस्य लक्षणम् ॥ १७६

श्रद्धा नाम कर्मयोनिः ॥१७७॥ श्रद्धां यस्त्वधितिष्ठेत् सोऽन-
सूयादमादिभिः विज्ञेयानां सङ्गयोगब्रह्मचर्यगुरुकुलवासगृहस्थ-
वानप्रस्थदानाध्ययनप्रतिग्रहमन्त्रादिभिर्नक्षत्रनियमैः श्रेयः प्रा-
प्स्यामीत्येवमनुष्ठानं कुरुत इति ॥१७८॥ एवमाह— १७९

ब्रह्मचर्यानसूया च दानमध्ययनं तपः ।
यजनं याजनं चैव श्रद्धाया लक्षणं स्मृतम् ॥ १८०

सुखं नाम कर्मयोनिः ॥१८१॥ यस्सुखकामो भवति प्राय-
श्चित्तपरः परेण यत्नेनानुतिष्ठति ॥१८२॥ तद्यथा सत्यं काम-
मन्युविषयगोब्राह्मणकर्म अनुलोमानामपि प्रोक्ता सावित्रीत्यन्याश्च
विद्या बह्व्यो ब्रह्मलोकं [1]प्राप्नुवन्तीति ॥१८३॥ एवमाह—
१८४

कर्मविद्यातपोभिस्तु यो यत्नमनुतिष्ठति ।
प्रायश्चित्तं तपश्चैव तत् सुखायास्तु लक्षणम् ॥ १८५

1. क—प्रापयन्तीति

विविदिषा नाम कर्मयोनिः ॥ १८६ ॥ सर्वं ज्ञातुकामता आगमांश्च कुरुते श्रुतिविशेषकाङ्क्षित्वसंज्ञात्वसंज्ञेति ॥१८७॥ क वा संज्ञेत्येवमाह— १८८

सर्वमेतत् परिज्ञाय कर्म ह्यारभते तु यः ।
सैषा विविदिषा नाम कर्मयोनिरनुष्ठिता ॥ १८९

[1]अविविदिषा नाम कर्मयोनिः ॥ १९० ॥ सर्वमेवाज्ञातुकामता कर्मभ्यो निवर्तनमित्येवमाह ॥ १९१

सर्वमेतत् परिज्ञाय कर्मभ्यो यो निवर्तते ।
सैषाऽविविदिषा नाम कर्मयोनिस्स्वनुष्ठिता ॥ १९२

यदप्युक्तं, किमेकत्वं किं नानात्वमिति । अत्र ब्रूमः॥ १९३
एकत्वं नामासुरे यदयं सत्त्वमभिषजते क्षेत्रज्ञः व्यक्तश्चाव्यक्तश्चाप्रतिबुद्धत्वादेकत्वमपदिश्यते ॥ १९४ ॥ नानात्वं नाम यदयं सत्त्वादव्यक्ताच्च स्मृत्या समावर्तयते एतन्नानात्वमपदिश्यते ॥ १९५ ॥ प्रतिबुद्धत्वादेवमेषां भौतिकाहङ्कारिकमाहात्मिकाव्यक्तीकानां चतुर्णां पुरुषाणां सत्त्वेनैकत्वं भवति । नानात्वं चेति ॥ १९६ ॥ एवमाह ॥ १९७

नानात्वैकत्वमेतावद् यो न विन्दत्यबुद्धिमान् ।

1. अ—इदं वाक्यमनन्तरश्लोकश्च न स्तः

स बध्यते सर्वबन्धैर् असम्बन्धाद्विमुच्यते ॥ १९८
यदप्युक्तं सहवासविवासमिति । अत्र ब्रूमः ॥ १९९

सहवासं नामासुरे यदयं सत्त्वमभिषजते । क्षेत्रज्ञोऽव्यक्तं चाप्रतिबुद्धत्वादेतत् सहवासमित्यपदिश्यते ॥ २०० ॥ विवासं नाम यदयं सत्त्वादव्यक्ताच्च वासं प्रति समावर्तयते प्रतिबुद्धत्वादेतद्विवासमपदिश्यते ॥ २०१ ॥ एष स प्रतिबुद्धविषयस्त्वभिषङ्गिणामेषां भौतिकाहङ्कारिकमाहात्मिकाव्यक्तिकानां चतुर्णां पुरुषाणां सहवासविवासमन्यत्वाद् ॥ २०२ ॥ एवं चाह ॥ २०३

विवासं सहवासं च यो विद्वान् नावबुध्यते ।
स बद्धस्सत्त्वसंवासैस् संसारान्न प्रमुच्यते ॥* २०४

कपिलः—

यदप्युक्तं किं विद्याविद्येति । अत्र ब्रूमः— २०५

अविद्या नामासुरे भवत्येषा इष्टानिष्टव्यतिरिक्ता त्रयी पुनर्भाविकी ॥ २०६ ॥ विद्या नामासुरे भवतीष्टानिष्टव्यतिरिक्ताऽऽन्वीक्षिक्यपुनर्भाविकी सर्वभूताभयङ्करी सर्वभूतेष्वालोकनामयसर्वज्ञानावबोधनायाध्यात्मना सर्वदुःखनिर्मोक्षायोपदिष्टेत्याचार्याभिगमयाथातथ्यदर्शनान्न शोचति ॥ २०७ ॥ एवमाह— २०८

---

*अ-क—सप्तषष्ट्यधिकशततमोऽध्यायः

ऊर्ध्वं चावाक् च तिर्यक् च न क्वचित् कामयेद्बुधः ।
न हि ज्ञानेन चाज्ञानेन शर्म विन्दति मानुषम् ॥ २०९

मानुषत्वाच्च देवत्वं देवत्वाच्च मनुष्यताम् ।
स तु सन्धावतेऽजस्रम् अविद्यावशमागतः ॥ २१०

यस्त्वविद्यामधः कृत्वा विद्यार्थमवबुध्य च ।
नाभिनन्दति न द्वेष्टि विद्याविद्ये स बुद्धिमान् ॥ २११

पारावर्ये सुखं ज्ञात्वा विदित्वा च परं बुधः ।
मुच्यते देहसन्तानाद् देहाच्चामृतमाप्नुयात् ॥* २१२

आसुरिः—

भगवन् कुशलाकुशलं वर्गावर्गौ किं कृत्स्नं किं शुद्धाशुद्धं किं केवलाकेवलं किं परात्परं किं पश्यापश्यं किं शाश्वताशाश्वतं किं व्यतिरिक्ताव्यतिरिक्तं किं योगायोगमित्यत्र सन्देहो मे भवति अप्रत्यक्षत्वाच्च प्रत्यक्षं चैतद्भवति तदनुभाषितुमर्हति भगवान् मदनुग्रहाय धर्मेणेति ॥ २१३

कपिलः—

यदुक्तमासुरे किं कुशलाकुशलमिति । अत्र ब्रूमः ॥२१४॥ कुशलं नाम सर्वेषु वेदेषु सर्वेषु शास्त्रेषु सर्वासु विद्यास्वधिगतयाथातथ्यत्वम् ॥२१५॥ अकुशलत्वं नाम सर्वेषामनधिगतयाथातथ्यत्वम् ॥ २१६ ॥ तदेतत् कुशलं कर्म सत्त्वमाहुः

* अ-क—अष्टषष्ट्यधिकशततमोऽध्यायः

॥ २१७ ॥ सत्त्वमूले खल्वेते कुशलाकुशले सत्त्वभूते सत्त्व
एव लयं गच्छतः । सत्त्वं चैवाविशेषस्त्यजति । तन्मूलं चैतत्
कुशलाकुशलमशेषतस्सत्त्वमिति ॥ २१८ ॥ एवमाह— २१९

कायेन त्रिविधं कर्म वाचा चैव चतुर्विधम् ।
मनसा त्रिविधं चैव कुशलाकुशलं स्मृतम् ॥ २२०

यदप्युक्तं किं वर्गावर्गमिति? अत्र ब्रूमः ॥ २२१

वर्गं नामासुरे पुरुषः पञ्चविंशतितत्त्वानि भवन्ति । अव्यक्तं
महानहङ्कारः । पञ्च महाभूतानि पञ्च विशेषाः एकादशेन्द्रि-
याणि तद्वर्गं ॥ २२२ ॥ एतस्माद्वर्गादवर्गा उपवृत्तिः क्षेत्रज्ञः
शुचिरुपेक्षको बुध्यमानाप्रतिबुद्धयोः परस्तस्मात् ॥ २२३ ॥
एवमाह— २२४

पञ्चविंशात् पराद्व्यक्तम् अहङ्कारस्ततोऽपरः ।
अहङ्कारात् परा बुद्धिर् बुद्धेरात्मा महान् परः ॥ २२५

महतः परमव्यक्तम् अव्यक्तात् पुरुषः परः ।
परावरज्ञस्तत्त्वानां प्राप्नोत्यजमनुत्तमम् ॥* २२६

कपिलः—

यदप्युक्तं किं कृत्स्नक्षयमिति । अत्र ब्रूमः ॥ २२७

कृत्स्नक्षयं नाम आसुरे पुरुषः पञ्चविंशतितत्त्वानि भवन्ति ।
अव्यक्तं महान् बुद्धिरहङ्कारः पञ्च भूतानि पञ्च विशेषाः

---

* अ-क—एकोनसप्तत्यधिकशततमोऽध्यायः

एकादशेन्द्रियाणि पुरुषेण ज्ञातव्यानि भवन्ति । स्वतस्तत्त्वानि नाहमेतेषां नैतानि मत्तस्सर्वतस्सर्वाणीति ॥ २२८ ॥

एवमाह ॥ २२९

सम्यग्दर्शनसम्पन्नः कृत्स्नक्षयमवाप्नुयात् ।
कृत्स्नक्षयं न चाप्नोति असम्यग्दर्शने रतः ॥ २३०

यदप्युक्तं शुद्धाशुद्धमिति । अत्र ब्रूमः ॥ २३१

शुद्धं नाम आसुरे क्षेत्रज्ञो द्रष्टा साक्षिमात्रको बुध्यमानाप्रतिबुद्धयोः परः पञ्चविंशतितत्त्वज्ञो यथा मन्तव्यं तथा मन्यते । यथा बोद्धव्यं तथा बुध्यते यथा वक्तव्यं तथा ब्रवीति यथा कर्तव्यं तथा करोति अहङ्काराप्रतिबुद्धत्वात् बुधेन क्षेत्रज्ञेन सर्वं दृष्टं सर्वागमाः सर्वद्वन्द्वानि सर्वज्ञानानि तपश्चातपश्च शुद्धश्चाशुद्धश्च ॥ २३२ ॥ अनेन मार्गेण क्षेत्रस्याशुद्धधर्मिणः शुद्धमृच्छति धर्मेण ज्ञानदृष्टान्तागमप्रामाण्यात् सुविपुलमपि तपस्तप्त्वा संसार एव मज्जति अप्रतिबोधत्वात् ॥ २३३ ॥

एवमाह ॥ २३४

अशुद्धं पुरुषं दृष्ट्वा किं शुद्धमिति मन्यते ।
स तपो विपुलं प्राप्य संसारे प्रतितिष्ठति ॥* २३५

कपिलः—

यदप्युक्तं किं नित्यानित्यमिति । अत्र ब्रूमः ॥ २३६

---

* अ-क—सप्तत्यधिकशततमोऽध्यायः

नित्यं नामासुरेऽव्यक्तमनित्या विकाराः अव्यक्तमनित्यं प्रवदन्ति सर्गप्रलयधर्मित्वद्विकाराणाम् ॥२३७॥ तथैवाधिष्ठातारमानित्यं प्रवदन्ति अधिष्ठानकर्तृत्वात् विकाराणाम् ॥ २३८ ॥ अनेनैव हेतुना एवमेतयोरुभयोर्नित्यत्वान्नित्यः क्षेत्रज्ञ इत्येवमाह ॥

बुध्यमानाप्रतिबुद्धाभ्यां बुद्धस्य च निरात्मनः ।
नित्यानित्यं विदित्वा तु न जन्म पुनराप्नुयात् ॥ २४०

यदि ह्येष बुध्येत नाहमेतेषां प्रकृतिविकाराणामिति केवलः स्यादन्यश्च स्यात् ॥ २४१ ॥ यदा त्वेष प्रकृतिविकारावधितिष्ठमानोऽभिमन्यते । ममैते प्रकृतिविकारा अहमेतेषामिति तदैष प्रकृतिविकाराणामधिष्ठितत्वादकेवलस्स्यात् ॥ २४२
एवमाह— २४३

बुद्ध्यमानो यदा बुद्ध्वा विकारानधितिष्ठति ।
तदा सह गुणैरेष सर्गप्रलयभाग् भवेत् ॥ २४४

यदा त्वेष विकाराणाम् अन्योन्यमिति मन्यते ।
तदा विकारानुत्क्रम्य परमव्यक्तमाप्नुयात्* ॥ २४५

कपिलः—

यदप्युक्तं किं परात् परमिति । अत्र ब्रूमः ॥ २४६

परात् परं नाम आसुरे कर्मेन्द्रियेभ्यः परं बुद्धीन्द्रियं बुद्धी-

---

* अ-क—एकसप्तत्यधिकशततमोऽध्यायः

न्द्रियेभ्यो मनः मनसो विशेषाः विशेषेभ्यो महाभूतेभ्योऽहङ्कारः अहङ्काराद्बुद्धिः बुद्धेर्महान् महतश्चाव्यक्तं तदेतदासुरे परावरेण भवति अपरमेतत् ॥ २४७ ॥ परमेतेभ्योऽन्यः क्षेत्रज्ञस्त्वसर्गप्रलयधर्मः सर्गप्रलयधर्मिणावबुद्धबुध्यमानावव्यक्तपुरुषौ न त्वेतावत् बुध्यमानाप्रतिबुद्धत्वाद् बुद्धः ॥ २४८

एवमाह— २४९

बुध्यमानाप्रतिबुद्धाभ्यां बुद्धस्य च निरात्मनः ।
परापरं विदित्वा तु न जन्म पुनराप्नुयात् ॥ २५०

एवमेताभ्यां बुध्यमानाप्रतिबुद्धाभ्यामन्यं बुद्धं बुद्ध्वा न शोचतीति* ॥ २५१

कपिलः—

यदप्युक्तं किं पश्यापश्यमिति । अत्र ब्रूमः ॥ २५२

अनाद्यनिधनादग्राह्यत्वादासुरे शाश्वतमव्यक्तं प्रसवधारणादानगुणस्वभावत्वादशाश्वतम् अन्ये चाचार्याः ॥ २५३ ॥ तथैवाधिष्ठातारम् अनेनैव हेतुना शाश्वतं च वर्णयन्ति॥ २५४ ॥ शाश्वतस्तु भगवान् क्षेत्रज्ञो बीजधर्मा प्रकृतिविकारयोर्व्यतिरिक्तशुद्धधर्मा च मुक्तधर्मा चेत्येवमाह— २५५

पश्यः पश्यति पश्यन्तम् अपश्यन्तं च पश्यति ।

---

* अ-क—द्विसप्तत्यधिकशततमोऽध्यायः

अपश्यस्तावपश्यत्वात् पश्यापश्यौ न पश्यतः ॥　　२५६

यदप्युक्तं किं व्यतिरिक्ताव्यतिरिक्तमिति । अत्र ब्रूमः ॥ २५७

व्यतिरिक्तं नामासुरे पुरुषः पञ्चविंशकः क्षेत्रज्ञः ॥ २५८ ॥
यथा पुष्करपर्णे बिन्दुर्न श्लेषमुपगच्छति अन्यत्वात् तथा क्षेत्रं
क्षेत्रज्ञः। यथा मुञ्जादिषीका निष्कृष्टा न पुनराविशति अन्यत्वात्
तथा क्षेत्रं क्षेत्रज्ञः । कूलाद्वृक्षः पतन् तत्कूलं मुञ्चति अन्यत्वात्
तथा क्षेत्रं क्षेत्रज्ञः । वृक्षाद्वा शकुनिरुत्पतन् स तं वृक्षमुत्सृज-
त्यन्यत्वात्तथा क्षेत्रं क्षेत्रज्ञः । कस्मादन्यत्वात् सर्वेषामेवमन्यत्वं
कूलमन्यो वृक्षोऽन्यः मशकोऽन्योऽन्यदुदुम्बर अन्यो मत्स्योऽ-
न्यदुदकं मुञ्जमन्यदन्येषीका अन्यदुदकमन्यत् पुष्करपर्णं तथाऽ-
न्यत् क्षेत्रं क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः । अन्यश्चास्मात्
क्षेत्रज्ञ इति* ॥　　२५९

कपिलः—

यदप्युक्तं किं वियोगावियोगमिति । अत्र ब्रूमः ॥　　२६०

अवियोगो नामासुरे विषयविषयिणौ प्रति विशेषो भवत्य-
प्रतिबुद्धत्वात् ॥ २६१ ॥ वियोगो नामासुरे पुरुषः पञ्च-
विंशतीनां तत्त्वानामसक्तो नाहमेतेषामन्ये चैते ममेत्यभिमन्य-
मानो वियोगी भवति ॥ २६२ ॥ एवमेतदासुरे परं पुरुषाद्

* अ-क—त्रिसप्तत्यधिकशततमोऽध्यायः

यथ्यक्तमबुद्धं बुद्ध्यमानोऽभिमन्यते ॥ २६३ ॥ नानाभावात् क्षेत्रधर्मा अव्यक्तः अक्षेत्रधर्मा क्षेत्रज्ञः [1]तत्त्वधर्मा अव्यक्तः अतत्त्वधर्मा क्षेत्रज्ञः सर्गधर्मा अव्यक्तः असर्गधर्मा क्षेत्रज्ञः [2]प्रकृतिधर्मा अव्यक्तः अप्रकृतिधर्मा क्षेत्रज्ञः [3]अमुक्तधर्मा अव्यक्तः मुक्तधर्मा क्षेत्रज्ञः विमलधर्मा अव्यक्तः अविमलधर्मा क्षेत्रज्ञः [4]अबुद्धिधर्मा अव्यक्तः बुद्धिधर्मा क्षेत्रज्ञः अविवृतधर्मा अव्यक्तः विवृतधर्मा क्षेत्रज्ञः अकुशलधर्मा अव्यक्तः कुशलधर्मा क्षेत्रज्ञः अशुचिधर्मा अव्यक्तः शुचिधर्मा क्षेत्रज्ञः अपश्यधर्मा अव्यक्तः पश्यधर्मा क्षेत्रज्ञः अचेतनधर्मा अव्यक्तः चेतनधर्मा क्षेत्रज्ञः अवियोगधर्मा अव्यक्तः वियोगधर्मा क्षेत्रज्ञः अविमोक्षधर्मा अव्यक्तः विमोक्षधर्मा क्षेत्रज्ञः ॥ २६४

किञ्च भूयो द्रष्टा क्षेत्रज्ञो द्रष्टव्यमव्यक्तं श्रोता क्षेत्रज्ञः श्रोतव्यमव्यक्तं मन्ता क्षेत्रज्ञः मन्तव्यमव्यक्तं बोद्धा क्षेत्रज्ञः बोद्ध-

---

1. क—"बीजधर्मा अव्यक्तः अबीजधर्मा क्षेत्रज्ञः" इति पाठान्तरम् (तत्स्थानेऽयं वर्तते)

2. क—गुणधर्मा अव्यक्तः अगुणधर्मा क्षेत्रज्ञः [अधिकः पाठः]

3. क—तत्त्वधर्मा अव्यक्तः अतत्त्वधर्मा क्षेत्रज्ञः समधर्मा अव्यक्तः असमधर्मा क्षेत्रज्ञः प्रकृतिधर्मा अव्यक्तः अप्रकृतिधर्मा क्षेत्रज्ञः [अधिकः पाठः]

4. अ—अशुचिधर्मा अव्यक्तः शुचिधर्मा क्षेत्रज्ञः [अधिकः पाठः]

व्यमव्यक्तम् ॥२६५॥ एवमेवासुरे अन्यद्द्रष्टव्यम् अन्यः पुरुषः पञ्चविंशतितत्त्वमन्यत् अन्योऽस्मात् क्षेत्रज्ञ इति* ॥ २६६

कपिलः—

एवमेतदासुरे बुद्ध्वा बुद्ध्वा निर्नमस्कारः स्वाहाकारवषट्कारस्वधाकारान् अहङ्कारक्षेत्रज्ञशुद्धनिर्द्वन्द्वेन निर्द्वितीयेन शुद्धेनालुब्धेनाहिंसकेन यथालब्धोपजीविनाऽप्यपगतकामक्रोधलोभमोहमानदर्पेणात्मवता सर्वभूतदर्शनसम्यग्दृष्टिना यतात्मना शान्तेन दान्तेन शून्यागारनदीपुलिनवृक्षमूलवृक्षकोटरबुधागारावसथगृहानित्येन यात्रामात्रभोजनाच्छादनेन च यत्र क्वचन शायिना भिक्षुणा स्वकार्यमनुष्ठातव्यम् ॥२६७॥ प्रातिभाव्यमपवर्गं जित्वा योगेन योगकार्यमनुष्ठेयम् ॥ २६८ ॥ तद्द्विविधं ध्यानम् ॥२६९॥ तद्यथा, प्राणायामात्मकं चतुर्विधं सगुणमप्राणायात्मकं च मानसमगुणम् ॥ २७० ॥ तद्यदा श्रोत्रं श्राव्येभ्यः प्रतिसमावर्तयति घ्राणं घ्रेयेभ्यः चक्षुः रूपेभ्यः त्वचं स्पर्शेभ्यः जिह्वां रसेभ्यः मनो मन्तव्येभ्यः अहङ्कारमभिमानेभ्यः बुद्धिं बोद्धव्येभ्यः तदेतदिदमिन्द्रियग्राममस्मादिन्द्रियविषयात् स्वैस्स्वं निरुद्ध्य देवताः प्रतिसमावर्तयति ॥२७१ ॥ जलजानीव प्रलया येऽतिमानसेभ्यः सङ्कल्पेभ्यः प्रतिसमावर्तयति मानससङ्कल्पमिन्द्रियाणि च मानसेभ्यश्चैनं मानसेभ्यस्स-

---

* अ-क—शान्तिपर्वणि मोक्षधर्मे चतुस्सप्तत्यधिकशततमोऽध्यायः ।

क्लृप्तेभ्यः प्रतिसमावर्तयित्वा महात्मा कतुमुन्नयते ॥ २७२ ॥
महात्मा क्रतवो भूतादिश्च भूतविशेषाश्च महत्यात्मनि महान्तमात्मानं क्रतूंश्च विवेचयित्वा ऽव्यक्तमनुयुङ्क्ते ॥ २७३ ॥
तत्रातीतः क्षेमीभवति । तस्मादयं विवृतो यश्च ततः क्षेत्रज्ञ असमावृतो भवति निर्द्वन्द्वो निर्द्वितीयः शुद्धो मुक्तो नित्यः केवलो भवत्येषोऽन्तं एषोऽपवर्गः एषा निष्ठा एतन्नैष्कर्म्यम् २७४

तद्यथा । तथोपनयनेन पूर्वतरैश्चाचार्यैर्यदुपदिष्टं तदेवोपदेशः ॥२७५॥ तत्र श्लोको भवति ।

यथाऽस्य जाग्रतस्स्वप्नो यथा स्यात्तमसा वृतः ।
विभागज्ञस्य मोक्षस्तु यस्त्वज्ञस्स पुनर्भवेत् ॥* २७६

कपिलः—

[1]एतदेवासुरे ध्यानमनुवर्णितम् ॥२७७॥ परिसङ्ख्यानमपि चोक्तम् ॥ २७८ ॥ चतुर्विंशतितत्त्वमेतत्कारणमित्यत्र ब्रूमः २७९

तदेत[2]द्बुद्ध्वा स्वं बुध्यमानमेतदाचार्याः शुद्धमित्यनवगच्छन्ति अनवबोधात् नान्यमगुणं पुरुषम् ॥२८०॥ कस्त्वेषोऽधिष्ठातृ-

---

* अ-क—पञ्चसप्तत्यधिकशततमोऽध्यायः

1. क—एतावदेवासुरे

2. क—बुद्धिस्थं

संज्ञकः प्रकृतिविकाराणामन्यस्त्वप्रकृतिविकारः ॥ २८१ ॥
तदेतत्प्रकृतिविकारसंज्ञकादन्यदव्यक्तमव्यक्तात् पुरुषं शुद्धं
निष्कैवल्यमनवयवमनामयमजं क्षेम्यमेवमाहु— २८२

येनेयं ससुता बहुप्रसविनी [1]गोराश्रयालम्बिना
येनस्थाः पुरुषाश्च योनिविहिता बुद्धाप्रबुद्धा भगवान् ।
द्रष्टा चैव परो गुणैर्विरहितो ज्ञानात्तुरीयोऽक्षयो
यस्तद्वर्तयतीह यः कृतमतिर्मुक्तस्स योन्याधिकः ॥ २८३

तदेतदुपसङ्ख्यानमनुवर्णितं याथातथ्यदर्शनात् अनवबु-
द्धानां प्रतिबोधनमिति । * २८४

कपिलः—

साङ्गोपाङ्गेषु सेतिहासपञ्चमेष्वासुरे वेदेष्वष्टादशसु विद्या-
स्थानेष्वमृतमुद्धृत्य मयाऽनुवर्णितं साङ्ख्यज्ञानमेतावदेतज्ज्ञात-
व्यं पञ्चविंशतितत्त्वानि ॥२८५॥ तदेतत् नापुत्राय नाशिष्याय
नासर्वस्वप्रदायिने नासंवत्सरोषिताय वा वर्तितव्यम् ॥२८६॥
परमज्ञानमित्यर्थमृषयो वेदप्रोक्तं वेद्यं वेत्स्यतीति तदेतदासुरे
नावबुध्यन्त्यक्षीण[2]पाप्मानः ॥२८७॥ अन्यथैव प्रवृत्ताः स्वाहा-
कारस्वधाकारोङ्कारवषट्कारैः ऋषिकोटिसहस्राण्यनन्तानि इष्टा-

1. क—योगाश्रया
*अ-क—षट्सहस्यधिकशततमोऽध्यायः
2. क—स्वापमानः

निष्ठक्ततेन कर्मणा ॥ २८८ ॥ तथैव देवदानवासुरपिशाचभूतराक्षसविद्याधरगन्धर्वयक्षनागकिन्नरादयोऽन्ये भूतग्रामा अज्ञानपथमाश्रिता अज्ञानमेवोपलीयन्ते चासकृदज्ञानात् स्थावरतिर्यग्योनिष्वेवोपपद्यन्ते वर्षकोटिसहस्राण्यनेकानि ॥ २८९ ॥ कथञ्चित् कस्यचिद्धर्मबुद्धिरपि स्यात् ॥ २९० ॥ तत एव मोक्षबुद्धिः ॥२९१॥ तेऽप्यपवर्गेणैव सुखकामाः ॥ २९२ ॥ प्रतिकूला दुःखनिवर्तनमेव कुर्वन्तो भावोत्पादकं त्रैलोक्यादन्यदपश्यन्तो निस्सरणं त्रैलोक्यमेवागाधं प्रपतन्ति ॥ २९३ ॥ तद्वदासुरे लौकिकेष्वपि दर्शनेषु परं वेदप्रामाण्यम् ॥ २९४ ॥ ते चापि दुःखसंसारवर्तका एवं कुर्वतः ; कुत एव, वेदार्थं यज्ञो यज्ञार्थं स्वर्गः स्वर्गस्सुखार्थं सुखं च मोहायतनमिष्टं मोहप्रभवं जन्म ॥२९५॥ तच्च सुखदुःखहैतुकमोहप्रभवं जन्म ॥२९६॥ तथैव चापि निधनम् ॥ २९७ ॥ तच्चापि दुःखहैतुकरतं तस्मान्मन्त्रग्रामो दुःखस्य परस्परं हेतुः ॥ २९८ ॥ तस्मादुपशमरुचयो समुद्रौघमुत्तिष्ठन्तो हित्वा सर्ववेदानुपशमशास्त्रेषु प्रयुज्यन्ते ॥ २९९ ॥ तदभ्यासाच्च शास्त्रस्य दुःखमार्गावच्छेदं कुर्वन्ति ॥३००॥ स्वात्मन्येकत्वेवावतिष्ठन्ते शीतीभूता अमृतप्राप्ताः ॥३०१॥ एवमाह— ३०२

तेषां शास्त्राभ्यासाद्दुःखस्रोतो निवर्तते छिन्ने दुःखस्रोतसि शान्तिरिहान्ताय दुःखस्य ॥३०३॥ तदेतदासुरे मयोत्पन्नमात्रे-

णैवावबुद्धं प्राकृतज्ञानम् ॥३०४॥ यदन्तरोत्पन्नस्तत्र भगवान् विरिञ्चोऽपि क्रोशितवान् सप्तकृत्व इति ॥ ३०५ ॥ यदा न तस्य कश्चित् प्रतिवचनं प्रायच्छत् ततः प्रवृत्तस्तत्र भगवान् पुनस्सर्गाय निवृत्त इति * ३०६

भीष्मः—

तदेतत् परमं ज्ञानं आसुरेराचार्येणानुशासितं परमर्षिणा भगवता कपिलेन परेण बहुमानेन ॥ ३०७॥ भगवता चासुरिणा शास्त्रं भगवते पञ्चशिखाय पञ्चशिखेन कात्यायनाय कात्यायनेन गौतमाय गौतमेन गार्ग्याय गार्ग्येणावट्यायनाय आवट्यायनेनर्षिभ्यः ॥३०८॥ तदेतत् परमं तत्परेण भगवता व्यासेन व्यासान्मयाऽवाप्तं परमज्ञानं मत्तो भवताऽवाप्तमिति ॥
३०९

तदेतद्ब्राह्मणांस्तात श्रावयेत् संशितव्रतान् ।
क्षत्रियान् याज्ञिकांश्चैव प्रजापालनतत्परान् ॥ ३१०

वैश्यांश्च नृपशार्दूल सर्वातिथ्यकृतव्रतान् ।
शूद्रांश्च शुश्रूषणपरान् सर्वसत्त्वहिते रतान् ॥ ३११

यद्यपि स्युस्त्रयो वर्णा यज्ञेनाधिक्रियन्ति वै ।
मन्त्रवर्जं तु शूद्राणां क्रिया दृष्टा इति श्रुतिः ॥ ३१२

---

* अ-क—सप्तसप्तत्यधिकशततमोऽध्यायः

सूत्रकारवचस्त्वेतद् वेदकारवचस्तदा ।
शास्त्रकारास्तथा चैतत् प्रवदन्तीति नश्श्रुतम्* ॥ ३१३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
[अस्मिन्नध्याये ५७ श्लोकाः २५६ वाक्यानि]

---

## ॥ चतुरधिकत्रिशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति नारदसनत्कुमारसंवादानुवादारम्भः ॥ १ ॥ सनत्कुमारेण नारदं प्रति सृष्टिक्रमनिरूपणम् ॥ २ ॥ सनत्कुमारेण नारदं प्रति प्रलयनिरूपणम् ॥३॥ अध्यात्माधिभूताधिदैवतवर्णनम् ॥ ४ ॥ नारदेन प्रकृतिपुरुषसंसर्गेण संशयप्रदर्शनम् ॥ ५ ॥ सनत्कुमारेण संशयनिरासः ॥६॥ चेतनस्य बन्धमोक्षवर्णनम् ॥ ७ ॥ नारदेन प्रकृतिपुरुषयोर्नित्यानित्यत्वशङ्का ॥ ८ ॥ सनत्कुमारेण तन्निरासः ॥ ९ ॥

---

युधिष्ठिरः—

क्लिश्यमानेषु भूतेषु जातीमरणसागरे ।
यत् प्राप्य क्लेशं नाप्नोति तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम इतिहासं पुरातनम् ।
सनत्कुमारस्य सतस् संवादं नारदस्य च ॥ २

* अ-क—अष्टसप्तत्यधिकशततमोऽध्यायः

सनत्कुमारो भगवान् ब्रह्मपुत्रो महायशाः ।
पूर्वजाश्च त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ॥ ३

सनकस्सनन्दश्चैव तृतीयश्च सनातनः ।
जातमात्राश्च ते सर्वे प्रतिबुद्धा इति श्रुतिः ॥ ४

चतुर्थश्चैव तेषां स भगवान् योगमास्थितः ।
सनत्कुमार इति वै कथयन्ति महर्षयः ॥ ५

हैरण्यगर्भश्च मुनिर् वसिष्ठः पञ्चमस्स्मृतः ।
षष्ठस्स्थाणुश्च भगवान् अमेयात्मा त्रिशूलधृक् ॥ ६

ततोऽपरे समुत्पन्नाः पावकाद्वरुणाकृतौ ।
मानसास्स्वयम्भुवो भूमेर्मरीचिप्रमुखास्तथा ॥ ७

भृगुर्मरीचेरनुजो भृगोरप्यङ्गिरास्तथा ।
अनुजोऽङ्गिरसोऽथात्रिः पुलस्त्योऽत्रेस्तथाऽनुजः ॥ ८

पुलस्त्यस्यानुजो विद्वान् पुलहोऽनुपमद्युतिः ।
कथ्यन्ते ब्रह्मजा ह्येते विद्वद्भिरमितौजसः ॥ ९

सर्गमेतन्महाराज कुर्वन्नादिगुरुर्महान् ।
प्रभुर्विभुरनन्तश्रीर् ब्रह्मा लोकपितामहः ॥ १०

मूर्तिमन्तोऽमृतीभूतास् तेजसाऽतितपोऽन्विताः ।
सनकप्रभृतयस्तत्र त्रयः प्राप्ताः परं पदम् ॥ ११
कृत्स्नक्षयमनुप्राप्य विमुक्ता मूर्तिबन्धनात् ॥ ११॥

सनत्कुमारस्तु विभुर्योगमास्थाय योगवित् ।
विचचार त्रयो लोकान् ऐश्वर्येण परेण ह ॥ १२॥

रुद्रश्चाप्यष्टगुणितो योगं प्राप्तो महायशाः ॥ १३

सूक्ष्ममष्टगुणं राजन् नेतरे नृपसत्तम ।
मरीचिप्रमुखास्तात सर्वे सृष्ट्यर्थमेव ते ॥ १४

नियुक्ता राजशार्दूल तेषां सृष्टिं शृणुष्व मे ॥ १४॥

सप्त ब्रह्माण इत्येष पुराणे निश्चयो गतः ।
सर्ववेदेषु चैवोक्ताः खिलेषु च न संशयः ॥ १५॥

इतिहासे पुराणे च श्रुतिरेषा पुरातना ॥ १६

?परदे कथ्यत इति प्राहुर्वेदान्तपारगाः ।
एतेषां पितरस्तात पुत्रा इत्यनुचक्षते ॥ १७

गुणास्सप्त महाराज मूर्तयोऽमूर्तयस्तथा ।
पितॄणां चैव राजेन्द्र पुत्रा देवा इति श्रुतिः ॥ १८

देवैर्व्याप्ता इमे लोका इत्येवमनुशुश्रुम ।
कृष्णद्वैपायनाच्चैव देवस्थानात् तथैव च ॥ १९

देवलाच्च नरश्रेष्ठ काश्यपाच्च मया श्रुतः ।
गौतमादथ कौण्डिन्याद् भारद्वाजात्तथैव च ॥ २०

मार्कण्डेयात्तथैवैतद् ऋषेर्देवतमात्तथा ।

पित्रा च मम राजेन्द्र श्राद्धकाले प्रभाषितम् ॥ २१

परं रहस्यं राजेन्द्र ब्रह्मणः परमात्मनः ॥ २१॥

अतः परं प्रवक्ष्यामि यन्मां पृच्छसि भारत ।
तदिहैकमनाश्श्रद्धी शृणुष्वावहितो मम ॥ २२॥

स्वायम्भुवस्य संवादं नारदस्य च धीमतः ॥ २३

सनत्कुमारो भगवान् दीपं जज्वाल तेजसा ।
अङ्गुष्ठमात्रो भूत्वा वै विचचार महामुनिः ॥ २४

स कदाचिन्महाराज मेरुपृष्ठे समेयिवान् ।
नारदेन नरश्रेष्ठ मुनिना ब्रह्मवादिना ॥ २५

जिज्ञासमानावन्योन्यं सकाशाद्ब्रह्मणस्ततः ।
ब्रह्मभागगतौ तात परमार्थार्थचिन्तकौ ॥ २६

मतिमान् मतिमच्छ्रेष्ठं बुद्धिमान् बुद्धिमत्तमम् ।
श्रुतिमाञ् श्रुतिमच्छ्रेष्ठं स्मृतिमान् स्मृतिमत्तरम् ॥ २७

क्षेत्रवित् क्षेत्रविच्छ्रेष्ठं ज्ञानविज्ज्ञानवित्तरम् ।
लोकविल्लोकविच्छ्रेष्ठम् आत्मविच्चात्मवित्तमम् ॥ २८

सनत्कुमारं तत्त्वज्ञं भगवन्तमरिन्दम ।
सर्ववेदार्थकुशलस् सर्वशास्त्रविशारदः ॥ २९

साङ्ख्ययोगं च यो वेद पाणावामलकं यथा ।
नारदोऽथ नरश्रेष्ठ तं पप्रच्छ महामतिम् ॥ ३०

नारदः—

त्रयोविंशतितत्त्वस्य अव्यक्तस्य महामुने ।

प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्त्वतः ॥ ३१

अध्यात्ममधिभूतं च अधिदैवं तथैव च ।

कालसङ्ख्या च सर्गश्च तद्भवान् वक्तुमर्हति ॥ ३२

सनत्कुमारः—

श्रूयतामानुपूर्व्येण नव सर्गाः प्रयत्नतः ।

तथा कालपरीणामं तत्त्वानामृषिसत्तम ॥ ३३

अध्यात्ममधिभूतं च अधिदैवं तथैव च ।

कालसङ्ख्यां च सर्गं च सर्वमेव महामुने ॥ ३४

तमसः कुर्वतस्सर्गस् तामसेत्यभिधीयते ।

ब्रह्मविद्भिर्द्विजैर्नित्यं नित्यमध्यात्मचिन्तकैः ॥ ३५

पर्यायनामान्येतस्य कथयन्ति मनीषिणः ।

तानि ते सम्प्रवक्ष्यामि तदिहैकमनाश्शृणु ॥ ३६

महार्णवोऽर्णवश्चैव सलिलं च गुणास्तथा ।

वेदास्तपश्च यज्ञाश्च धर्मश्च भगवान् विभुः ॥ ३७

प्राणस्संवर्तकोऽग्निश्च व्योम कालस्तथैव च ।

नामान्येतानि ब्रह्मर्षे शरीरस्येश्वरस्य वै ॥ ३८

कीर्तितानि द्विजश्रेष्ठ मया शास्त्रानुमानतः ॥ ३८॥

चतुर्युगसहस्रात्तु चतुर्युगमरिन्दम ।

प्राहुः कल्पसहस्रं वै ब्राह्मणास्तत्त्वदर्शिनः । ३९॥
दशकल्पसहस्राणि अव्यक्तस्य महायशाः ॥ ४०

तथैव दिवसं प्राहुर् योगास्साङ्ख्याश्च तत्त्वतः ।
निशां सुप्त्वाऽथ भगवान् क्षपान्ते प्रतिबुध्यते ॥ ४१

अहं कृत्वा सुखं तात ससर्जे प्रभुरीश्वरः ।
हिरण्यगर्भं विश्वात्मा अजं च जनितं मुनिम् ॥ ४२

भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ।
मूर्तिमन्तं महात्मानं विश्वं शम्भुं स्वयम्भुवम् ॥ ४३

अणिमा लघिमा प्राप्तिम् ईशानं ज्योतिषां परम् ।
तस्य चापि निशामाहुर् वेदवेदाङ्गपारगाः ॥ ४४

पञ्चकल्पसहस्राणि अहरेतावदेव च ।
स सर्गं कुरुते ब्रह्मा तामसस्यानुपूर्वशः ॥ ४५

सृजते स त्वहङ्कारं परमेष्ठिनमव्ययम् ।
अहङ्कारेण वै लोका व्याप्तास्त्वाहंकृतेन वै ॥ ४६

येनाविष्टानि भूतानि मज्जन्त्यव्यक्तसागरे ।
देवर्षिदानवनरा यक्षगन्धर्वकिन्नराः ॥ ४७

उन्मज्जन्ति निमज्जन्ति ऊर्ध्वाधस्तिर्यगेव च ।
एतस्यापि निशामाहुस् तृतीयमथ कुर्वतः ॥ ४८

त्रीणि कल्पसहस्राणि अहरेतावदेव च ।

अहङ्कारश्च सृजति महाभूतानि पञ्च वै ॥ ४९
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमः ।
एतेषां गुणतत्त्वानि पञ्च प्राहुर्द्विजातयः ॥ ५०
शब्दे स्पर्शे च रूपे च रसे गन्धे तथैव च ।
गुणेष्वेतेष्वभिरताः पङ्कलग्ना इव द्विपाः ॥ ५१
नोत्तिष्ठन्ति वशीभूतास् सक्ता अव्यक्तसागरे ॥ ५१॥
एतेषामिह वै सर्गे चतुर्थमिह कुर्वतः ।
द्वे तु कल्पसहस्रे वै अहोरात्रस्तथैव च ॥ ५२॥
अनन्त इति विख्यातः पञ्चमस्सर्ग उच्यते ॥ ५३
इन्द्रियाणि दशैकं च यथाश्रुतिनिदर्शनात् ।
मनस्सर्गगतं तात विशत् सर्वमिदं जगत् ॥ ५४
न तथाऽन्यानि भूतानि बलवन्ति यथा मनः ।
एतस्यापि तु वै सर्गे षष्ठमाहुर्द्विजातयः ॥ ५५
अहः कल्पसहस्रं वै रात्रिरेतावती तथा ।
ऊर्ध्वस्रोतस्तु वै सर्गे सप्तमं ब्राह्मणा विदुः ॥ ५६
अष्टमं चाप्यधस्स्रोतस् तिर्यक् तु नवमस्स्मृतः ।
एतानि नव सर्गाणि तत्त्वानि च महामुने ॥ ५७
चतुर्विंशतिसूक्तानि कालसङ्ख्याश्च तेऽनघ ।
अप्ययं प्रभवं चैव अव्यक्तस्य महामुने ॥ ५८

प्रवक्ष्याम्यपरं तत्त्वं यस्य यस्येश्वरश्च यः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ॥ ५९
यथा श्रुतं यथा दृष्टं तत्तथा वै निबोध मे ॥* ५९॥
अधस्स्रोतसि सर्गे च तिर्यक्स्रोतसि चैव ह ।
एताभ्यामीश्वरं विद्याद् ऊर्ध्वस्रोतस्तथैव च ॥ ६०॥
कर्मेन्द्रियाणां पञ्चानाम् ईश्वरो बुद्धिगोचरः ।
बुद्धीन्द्रियाणामथ तु मन ईश्वरमुच्यते ॥ ६१॥
मनसः पञ्च भूतानि सद्गुणान्याहुरीश्वरम् ।
भूतानामीश्वरं विद्याद् ब्रह्माणं परमेष्ठिनम् ॥ ६२॥
भवान् हि कुशलश्चैव धर्मेष्वेव परेषु वै ।
कालाग्निरहस्त्वं ? ते जगद्दहति चांशुभिः ॥ ६३॥
ततस्सर्वाणि भूतानि स्थावराणि चराणि च ।
हाहाभूतानि दग्धानि स्वयोनिं गमितानि वै ॥ ६४॥
कूर्मपृष्ठनिभा भूमिर् निर्दग्धकुशकण्टका ।
निर्वृक्षा निस्तृणा चैव दग्धा कालाग्निना तदा ॥ ६५॥
जगत् प्रलीनं जगति जगत्यप्सु प्रलीयते ।
नष्टगन्धा तदा सूक्ष्मा जलमेवाभवत्तदा ॥ ६६॥
ततो मयूखजालेन सूर्यस्यापीयते जलम् ।

---

* अ-क—सनत्कुमारगीतासु एकोनाशीत्यधिकशततमोऽध्यायः

जलात्मा प्रविलीयत्यर्के तदा ब्राह्मणसत्तम ॥ ६७॥

अन्तरिक्षगतान् सर्वान् प्रदहत्यनलस्तथा ।
अग्निभूतं तदा व्योम भवतीत्यभिचक्षते ॥ ६८॥

तं तथा विष्फुरन्तं हि वायुध्वंसायते ? महान् ।
महता बलवेगेन आदत्ते तं हि भानुमान् ॥ ६९॥

वायोरपि गुणं स्पर्शम् आकाशं ग्रसते यदा ।
प्रणश्यति तदा वायुः खं तु तिष्ठति नानदत् ॥ ७०॥

तस्य तं निनदं शब्दम् आदत्ते वै मनस्तदा ।
स शब्दगुणवानात्मा तिष्ठते मूर्तिमांस्तु वै ॥ ७१॥

भुङ्क्ते तु स तदा व्योम मनस्तात दिगात्मकम् ।
व्योमात्मनि विनष्टे तु सङ्कल्पात्मा विवर्धते ॥ ७२॥

सङ्कल्पात्मानमादत्ते चित्तं वै स्वेन तेजसा ।
चित्तं ग्रसत्यहङ्कारस् तदा वै मुनिसत्तम ॥ ७३॥

विनष्टे च तदा चित्ते अहङ्कारभवे महान् ।
अहङ्कारं तदादत्ते महान् ब्रह्मा प्रजापतिः ॥ ७४॥

अभिमाने विनष्टे तु महान् ब्रह्मा विराजते ।
तं तदा त्रिपु लोकेषु मूर्तिष्वेवाग्रमूर्तिजम् ॥ ७५॥

येन विश्वमिदं कृत्स्नं निर्मितं वै गुणार्थिना ।

मूर्तिं जलेश्वरमपि व्यवसायगुणात्मकम् ॥ ७६॥

प्रसिष्णुर्भगवान् ब्रह्मा व्यक्ताव्यक्तमसंशयम् ।
एषोऽव्ययो हि प्रलयो मया ते परिभाषितः ॥ ७७॥

अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ॥ ७८

आकाशं प्रथमं भूतं श्रोत्रमध्यात्मं शब्दोऽधिभूतं दिशोऽधि-
दैवतम् ॥ ७९ ॥ वायुर्द्वितीयं भूतं त्वगध्यात्मं स्पर्शोऽधिभूतं
विद्युदधिदैवतं स्यात् ॥ ८० ॥ ज्योतिस्तृतीयं भूतं चक्षुरध्यात्मं
रूपमधिभूतं सूर्योऽधिदैवतं स्यात् ॥ ८१ ॥ आपश्चतुर्थं भूतं
जिह्वाऽध्यात्मं रसोऽधिभूतं सोमोऽधिदैवतं स्यात् ॥ ८२ ॥
पृथिवी पञ्चमं भूतं घ्राणमध्यात्मं गन्धोऽधिभूतं वायुरधिदैवतं
स्यात् ॥ ८३ ॥ पाञ्चभौतिकमेतच्चतुष्टयमनुवर्णितम् ॥ ८४ ॥

अत ऊर्ध्वं त्रिविधमिन्द्रियविधिमनुवर्णयिष्यामः ॥ ८५ ॥

पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात् ॥ ८६

हस्तावध्यात्मं कर्तव्यमधिभूतं इन्द्रोऽधिदैवतं स्यात् ॥ ८७

पायुरध्यात्मं विसर्गोऽधिभूतं अग्निरधिदैवतं स्यात् ॥ ८८

उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतं स्यात् ॥ ८९

वागध्यात्मं वक्तव्यमधिभूतं अग्निरधिदैवतं स्यात् ॥ ९०

मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतं स्यात् ॥ ९१

अहङ्कारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतं स्यात्॥९२
बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माऽधिदैवतं स्यात् ॥ ९३

एवमव्यक्तो भगवान् असकृत् सर्गान् कुरुते संहरते च
॥ ९४ ॥ कस्मात् क्रीडार्थम् ॥ ९५ ॥ यथाऽऽदित्योंऽशुजालं
क्षिपति संहरते च यथा चान्तरिक्षादभ्रकोशमुत्तिष्ठति ॥
स्तनितं गर्जितोन्मिश्रं तच्च तत्रैव प्राणशत् ॥ ९६

एवमव्यक्तो गुणान् सृजति संहरते च ॥ ९७ ॥ यथा च
कूर्मोऽङ्गानि कामात् प्रसारयते पुनश्च प्रवेशयति । एवमव्यक्तो
लोकान् प्रसारयति गिरति च ॥ ९८ ॥ चेतनश्च भगवान्
पञ्चविंशकः शुचिस्तेनाधिष्ठिता प्रकृतिश्चेतयति ॥ ९९ ॥ नित्यं
सहधर्मा च भगवतोऽव्यक्तस्य क्रियावतोऽक्रियावान् भगवान्
परमः प्रकृतिरहितः क्षेत्रज्ञः क्षेम्य इति ॥* १००

नारदः—

यद्यचेतना प्रकृतिः चेतनाधिष्ठिता चेतयति कस्मान्न
मोक्षोऽस्ति ॥ १०१ ॥ भवद्विधानां चेतस्काङ्क्षिणां चेतो हि
पञ्चविंशकमुपदिशन्ति योगास्साङ्ख्याश्च ॥ १०२ ॥ तच्चायुक्त-
मुपदिशन्ति ॥ १०३ ॥ तद्वचनाच्च अयुक्तः प्रकृतिसहधर्मा
प्रकृतिं वर्तमानामनुवर्तेत इति ॥ १०४ ॥ अनुवर्तनाच्च

* अ-क—अशीत्यधिकशततमोऽध्यायः

मन्यामहे "अधिष्ठातृत्वादणुत्वाच्चेत" इति ॥ १०५ ॥ अतश्च भवत्येष दोष इति ॥ १०६ ॥ यथा हि कश्चिद्दीर्घमध्वानं गच्छति सङ्गवानसङ्गस्यागमवतो गमने प्रयोजनं भवति ॥ १०७ ॥ अथ गच्छति सोऽपि सङ्गीभवति ॥ १०८ ॥ मत्स्यश्चोदकं च सहधर्मिणावेव ॥ १०९ ॥ एवं भगवद्वचनात् प्रकृतिपुरुषौ ॥ ११० ॥ यद्युदकं प्रवर्तमानं मत्स्योऽनुप्रवर्तते ननु सङ्गवान् भवति असङ्गी मत्स्यः तस्य किं सङ्गवृत्त्यानुवर्तनेन ॥　　१११

सनत्कुमारः—

देवर्षे तत्रासङ्गं वर्णयन्ति पुरुषस्य । न भगवता व्यक्तेन सङ्गोऽस्ति निर्गुणस्य गुणिना ॥　　११२

तत्र श्लोकानुदाहरन्ति बुधाः ॥　　११३

तानुपधारयस्वैकार्थे पर्यायवचनं कृत्वा ॥　　११४

अधिष्ठा पुरुषो नित्यं प्रकृत्या न च आत्मनः ।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते ॥　　११५

चेतना पुरुषो नित्यं कालस्य न च आत्मनः ।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते ॥　　११६

द्रष्टा हि पुरुषो नित्यं मनसो न च आत्मनः ।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते ॥　　११७

बोद्धा हि पुरुषो नित्यं वेदस्य न च आत्मनः ।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते ॥ ११८

श्रोता हि पुरुषो नित्यं क्षेत्रस्य न च आत्मनः ।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते ॥ ११९

कर्ता हि पुरुषो नित्यं परस्य न च आत्मनः ।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते ॥ १२०

देवर्षे तत्रासङ्गं वर्णयन्ति पुरुषस्य ॥ १२१ ॥ शुचिर्हि
भगवान् क्षेत्रज्ञो शुचिर्नी प्रकृतिमुदाहरन्ति ॥ १२२ ॥ सङ्गी
हि सङ्गवान् असङ्गी चासङ्ग इति योऽसङ्गो ह्यात्मानं सङ्गिन-
मनुपश्यतीति स खल्वज्ञानीत्युच्यते ॥[1] १२३

एतस्याविद्याग्रस्तस्य उद्भवाक्षेपशतकोटिशोऽप्येधमानस्या-
व्यक्तसागरे सुमहान् दुःखयोगो भवति ॥ १२४ ॥ यथा च
समुद्रं प्रयातस्य हुतप्रायश्चित्तस्य अर्थतर्षिणो वणिक्सङ्घस्य यान-
पात्रेऽर्णवादागतचण्डवायुना भिद्यमान इतस्ततश्च विमलाभिरू-
र्मिभिर्भिद्यमानो हाहाभूतो जनो व्यापद्येत् । शतशश्चाप्राप्तमनो-
रथाः प्लवान् गृहीत्वा प्लवाश्चोन्मज्जन्ति निमज्जन्ति चान्यो-
न्यमवलम्बमानाः ॥ १२५॥ एवमज्ञानी पुरुषः संसारसागर-
मविद्यास्तमसदिति ? ॥* १२६

1. क—बुधैरिह इत्यधिकः पाठः
*अ-क—एकाशीत्यधिकशततमोऽध्यायः

नारदः—

भगवन्नच्छेद्याभेद्यादाह्यातर्क्यानन्त्याकल्प्यानादिमध्या यदा
प्रकृतिस्तद्वत् पुरुषोऽप्येभिरेव गुणैर्युतः । तत्कथमनित्यां
प्रकृतिमुदाहरन्ति नित्यं पुरुषमिति ॥ १२७

सनत्कुमारः—

देवर्षे सम्यगभिहितं भवता ॥ १२८ ॥ अच्छेद्याभेद्या-
दाह्यातर्क्यानन्त्याकल्प्यानादिमध्या प्रकृतिः पुरुषश्च कर्तृत्वाद-
गुणानामनित्यां प्रकृतिमुदाहरन्ति अकर्तृत्वान्नित्यः पुरुषः ॥
१२९ ॥ यदि प्रकृतिर्गुणान् कुर्याद्वेद चात्मानं पुरुषं च
नित्यानित्यभाववीतरागत्वे चास्य निर्द्वन्द्वता चास्य ॥ १३० ॥
यदा त्वयमेवं स्यात् नान्यदस्ति परमित्यभिमन्यमानो नित्यत्व-
मेति ॥ १३१ ॥ तत्र श्लोकानुदाहरन्ति ॥ १३२

उभावमूर्तौ ह्यजरावुभावेव महात्मभिः ।
विदितौ विषयी चैव विषयश्च महामुने ॥ १३३

पुरुषो विषयी नित्यं प्रकृतिर्विषयस्स्मृतः ।
व्याख्यातौ शास्त्रविद्भिर्हि मशकोदुम्बरौ यथा ॥ १३४

प्रकृतिर्न विजानाति भुज्यमानमचेतनम् ।
पुरुषश्चापि जानाति भुङ्क्ते यश्च स भुज्यते ॥ १३५

महदादयो गुणा भोज्यं भोक्ता तु प्रकृतिर्द्विज ।
मन्यन्त्येवं विभागज्ञा भोक्तारं तस्य चेश्वरम् ॥ १३६

ऐश्वर्यं भवतीशत्वात् प्रकृत्या द्विजसत्तम ।
अनीशत्वादनैश्वर्यं पुरुषस्यानुचक्षते ॥ १३७

विभूतित्वाद्विभुत्वं हि पुरुषस्य महामुने ।
द्वन्द्वभावादनित्यं हि त्रिगुणा प्रकृतिस्तथा ॥ १३८

निर्द्वन्द्वो निर्गुणो नित्यः पुरुषोऽत्रानुचक्षते ।
क्रियाकरणयोगित्वाद् अनित्या प्रकृतिर्द्विज ॥ १३९
क्रियाकरणहीनो हि नित्यः पुरुष उच्यते ॥ १३९॥

एवमनुमन्यन्ते ॥१४०॥ सत्त्वं क्षेत्रं परं शुभाकारकं चलं
[1]पूर्णकरं निशाकरं निशि निर्विस्मृतिर्मतिरिति चैतानि प्रकृति-
पर्यायनामानि ॥१४१॥ अथापराणि भूतं भव्यमभूतमभव्य-
मिति ॥१४२॥ सत्त्वं रजस्तम इति त्रिगुणमेतत् प्रकृति-
मित्यनुपश्यति ॥१४३॥ अथ तदव्यक्तात् पुरुषमव्ययं शिवं
क्षेममयं शुचि व्यभ्रमिति विमलममलमचलमजरममरमभवमिति
॥१४४॥ [2]अभवमनयनमगमनं पृथगिति चैतानि पुरुषपर्याय-
नामानि ॥१४५॥ अत्र पश्यन्तु भवन्तः क्षेत्रज्ञं विमोक्षं
विशोकं विमोहम् ॥१४६॥ विदम्भाद्विलोभविकारात् विरुद्धा-
दानृशंस्यादलोल्यमशरणमभयमनवयवं पश्यति ॥१४७॥
एतद्यथा मशकोदुम्बरयोर्विवाससहवासमन्य एव स्वभावः एव-

1. क—प्रणकरं 2. क—अभवनम

मेव ज्ञानाज्ञानयोर्विवाससहवासः ॥१४८॥ अन्यदेव ज्ञानं प्रकृतिज्ञानं क्षेत्रज्ञस्त्यक्ष्यति ॥१४९॥ प्रकृतिं नवप्रकृतिं क्षेत्रज्ञं त्यक्ष्यति ॥१५०॥ मन्यते प्रकृतिं क्षेत्रज्ञं त्यक्ष्यति ॥१५१॥ मन्यते प्रकृतिं क्षेत्रज्ञः ॥ १५२

न च प्रकृतिः क्षेत्रज्ञं मन्यते बुध्यते प्रकृतिं क्षेत्रज्ञः ॥ १५३ ॥ न च प्रकृतिः क्षेत्रज्ञं बुध्यते ॥ १५४ ॥ पश्यति प्रकृतिं क्षेत्रज्ञः न च प्रकृतिं क्षेत्रज्ञः पश्यति ॥१५५॥ एतद्विवाससहवासमित्येतन्नानात्वदर्शनं पश्यन्ति दैवज्ञाः॥१५६॥ तदङ्ग पश्यतु भवान् पुरुषः ॥ १५७

अत्र श्लोकमुदाहरन्ति— १५८

योगाश्च साङ्ख्याश्च वदन्ति सम्यङ्
न पञ्चविंशात् परमस्ति किञ्चित् ।
अथान्यथा पश्यति न त्वमेतं
वयं तु पश्याम गुरोर्नियोगात् ॥ १५९

इत्येतद्योगदर्शनमत्र साङ्ख्यैर्गीतम् ॥ १६० ॥ श्लोको भवति १६१

पश्यः पश्यति पश्यन्तम् अपश्यन्तं च पश्यति ।
अपश्यस्तावपश्यत्वात् पश्यापश्यौ न पश्यतः ॥ १६२

प्रकृतिः क्षेत्रज्ञः क्षेत्रज्ञं चापरः क्षेत्रज्ञः षड्विंशकोऽनुपश्यति ॥ १६३ ॥ न तत् पञ्चविंशः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति देवर्षेऽयमयः ॥ १६४ ॥ बहुभिरात्मभिरवाप्तमिदानीं ॥१६५॥ ये ह्येवं पश्यन्ति शिवं हि तेषामिहैव चामुत्र संशयो नास्ति ॥१६६॥ सुखं परं जन्म चाहं ब्रवीमि ॥ १६७ ॥ न त्वितरं मृत्युं विवेदाहम् ॥१६८॥

प्रति विरमस्व बुद्धिविग्रहात् परमशुचिस्त्वमुपासन्निर्ममः ॥
बहुभिररिभिरेतदावृतं प्रकृतिमयं हि शरीरमध्रुवम् ॥ १६९

यदि जयसि शरीरमेकतो ननु विजितास्तव सर्वशत्रवः ।
मुनिभिर्ऋषिभिर्निर्मितं परं परमशुचिमुपास्यते गताः ॥ १७०

एतन्मयोपसन्ने तूपदिष्टं देवर्षे हिरण्यनाभस्य महासुरस्य शिवस्य चैतन्नमुचेर्नारदस्य वृत्रस्य विरोचनस्य बलेर्मरीचेः पुलस्त्यपुलहयोः, तथैव भृग्वङ्गिरसोरत्रिवसिष्ठकाश्यपानां शुकस्य चेन्द्रस्य बृहस्पतेश्चाङ्गिरसोत्तमाय ॥१७१॥ तथैव विश्वावसवे मयोक्तं गन्धर्वाप्सरोभिश्च ॥ १७२ ॥ एतद्ब्रह्म सर्वत्र समं द्रष्टव्यम् ॥१७३॥ ब्रह्मणि चेन्द्रे शुनि कीटे पतङ्गे दंशमशकेषु सम्यगनुदर्शनाच्च पश्यामः ॥ १७४ ॥ सर्वस्य मोक्षधर्मो विद्यते ॥ १७५ ॥ एतत् पदमनुद्विग्नं जन्ममृत्युतमोनुदं उपशान्तं समुत्तीर्णमवस्थितमपज्वरम् ॥ १७६

भीष्मः—

एतच्छ्रुत्वा द्विजश्रेष्ठो नारदस्स महामुनिः ।

परया मुदया युक्तः प्रणम्य शिरसा गुरुम् ॥ १७७

प्रदक्षिणं च कृत्वाऽथ जगाम भवनं स्वकम् ।

भगवानपि तत्रैव सद्यस्त्वन्तरधीयत ॥* १७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
[ अस्मिन्नध्याये ९७ श्लोकाः ८१ वाक्यानि ]

---

## ॥ पञ्चाधिकत्रिशततमोऽध्यायः ॥

संयमनपञ्चशिखसंवादारम्भः ॥ १ ॥ संयमनेन पञ्चशिखं प्रति जगत्सृष्टिस्थितिसंहारकर्ता कः कति तत्त्वानि–इत्यादिप्रश्नः–अध्यात्मादिविषयप्रश्नश्च कृतः ॥ २ ॥ क्रमेणैतेषामुत्तराणि च कृतानि ॥ ३ ॥

---

भीष्मः—

संयमनः काशिपतिरविमुक्तगतं मुनिम् पप्रच्छ ज्ञानविज्ञानं कपिलादागतागमम् ॥ १

संयमनः—

को विश्वं सृजते सर्वमिदं संहरते च कः ॥२॥ कश्च विश्व-

---

* अ-क—द्व्यशीत्यधिकशततमोध्यायः (सनत्कुमारगीता समाप्ता)

मधिष्ठाय तिष्ठत्यग्निवद् दारुषु ॥ ३ ॥ कश्च विश्वमविश्वं च
नित्यमेवानुपश्यति ॥४॥ कौ च तौ मुनिशार्दूल नमस्य
तावुभावपि ॥ ५

कति तत्त्वानि विश्वात्मा भगवान् हव्यकव्यभुक् ।
किं च हव्यं च कव्यं च पठ्यते शास्त्रदर्शनात् ॥ ६

कश्च [1]तत्त्वात् समुत्पन्नं तस्मात्तत्वाद्विशारदः ।
कश्च तत्त्वादिरित्युक्तस् तथा प्राणादिरेव च ॥ ७

भूतादिश्च विकारादिस् तथैव च दयानिधे ।
कस्मादाददते चैव पुनस्सृजति वै कथम् ॥ ८

अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
विमोक्षं चास्य भगवान योऽयं देहेषु वर्तते ॥ ९

सर्वज्ञानं सदशकं तथोपनिषदं मुने ।
वर्तते त्वयि कात्स्न्येंन योगशास्त्रं तथैव च ॥ १०

पुराणं च मुनिश्रेष्ठ यथा बुद्धिस्सनातनम् ।
साङ्गोपाङ्गाश्च चत्वारो वेदास्तिष्ठन्ति वेदवित् ॥ ११

सर्वस्य चास्य ज्ञानस्य ग्रन्थतश्चार्थतश्च ते ।
विदितं वेदितव्यं हि पाणावामलकं यथा ॥ १२

परावरज्ञो भगवान् इत्येवमनुशुश्रुम ।

---

1. क—सत्त्वात्

तेन त्वा परिपृच्छामि सर्वभूतहिते रतम् ॥ १३

परोक्षमेतदस्माकं तव प्रत्यक्षमेव च ।
मन्याम मनसा देव यतीनां यतिसत्तम ॥ १४

तदनुग्रहधर्मेण अक्षयेणाऽव्ययेन च ।
शाश्वतेनाप्रमेयेन अचलेनामृतेन च ॥ १५
जन्ममृत्युविमुक्तेन योक्तुमर्हसि मानव ॥ १५॥

सर्वथा तेन देहेन असद्ग्रन्थेन मे मुने ।
ध्यायामि भगवन् नित्यम् इत्यर्थमहमागतः ॥ १६॥

काशिराज्यं परित्यज्य भगवन्तमरिन्दम ।
तदेतच्छ्रोतुमिच्छामि यथातत्त्वेन तत्त्वतः ॥ १७॥

ममानतस्य भगवञ् शिष्यस्यामितबुद्धिमान् ।
वक्तुमर्हसि शान्त्यर्थम् एतदर्थं महामुने ॥ १८॥

ममोद्वहत्येव मनश् श्रोतुं तत्त्वं परायणम् ।
पापघ्नममृतं श्रेष्ठं पवित्राङ्गं परायणम् ॥ १९॥

पञ्चशिखः—

श्रूयतां नृपशार्दूल सर्वमेतदसंशयम् ।
सर्वस्य चास्य ज्ञानस्य कृत्स्नकारी भवानपि ॥ २०॥

विशनाद्विश्वमित्याहुर् लोकानां काशिसत्तम ।
लोकाश्च विश्वमेवेति प्रवदन्ति नराधिप ॥ २१॥

लोकानामप्यविशनाद् अविश्वमिति तं विदुः ॥ २२

ईदृग्भूतीयमेवाहुर् अपरं शास्त्रदर्शनात् ।
विश्वाविश्वे नरश्रेष्ठ तत्त्वबुद्धिपरायणाः ॥ २३

नराणां नरशार्दूल तत्त्वमेतदसंशयम् ॥ २३॥

अमृताश्च त्रयोऽप्येते नित्याश्चेति वदन्ति वै ।
विभागिनश्च वै नित्यं विमलाश्चेति नश्श्रुतिः ॥ २४॥

अजा अमूर्तयश्चैव अप्रकम्प्याव्ययाश्च ह ।
अग्राह्याश्चाप्रतर्क्याश्च तथा मर्त्याश्च पार्थिव ॥ २५॥

अनादिनिधनाश्चैव तथा मूर्त्याश्च तेऽनघ ।
अच्छेद्याश्चामराश्चैव अप्रदह्यतमाश्च वै ॥ २६॥

निर्गुणाश्चेतनाश्चैव पश्याश्चेति नराधिप ।
यदेतदुक्तमाचार्यैर् एवमेतदसंशयम् ॥ २७॥

सन्ति सर्वे गुणा ह्येषां त्रयाणां नृपसत्तम ॥ २८

अहं तत्त्वं प्रवक्ष्यामि यथावाऽऽचार्यदर्शनम् ॥ २८॥

एकोऽत्र गुणवांश्चैव तथैवाचेतनश्च हि ।
अपश्यश्च महाभाग प्रधान इति पठ्यते ॥ २९॥

प्रत्ययं चोपसर्गे वै प्रधानं मन इष्यते ।
प्रधान इति नामास्य एतयोर्धर्मे उच्यते ॥ ३०॥

सन्धावतीति राजेन्द्र इत्येवमनुशुश्रुम ।
तस्य सर्वं प्रवक्ष्यामि नव तांश्च निबोध मे ॥ ३१॥

प्राकृतान्यस्य चत्वारि वैकृतानि तु पञ्च वै ।
पूर्वमुत्पद्यतेऽव्यक्तात् व्यक्तो व्यक्तादिरुच्यते ॥ ३२॥

प्राणानामादिमेवैतम् आहुरध्यात्मचिन्तकाः ।
महानिति च नामास्य प्राहुर्वेदविपश्चितः ॥ ३३॥

बुद्धिरित्यपरे राजन् विरिञ्चेति तथाऽपरे ।
एतस्मात् खलु वैरिञ्चम् उत्पद्यति नराधिप ॥ ३४॥

विरिञ्चाद्राजशार्दूल स वै सर्ग इहोच्यते ।
एकैकशो विरिञ्चो वै वैरिञ्चादुत्पत्तितस्स्मृताः ॥ ३५॥

एते सर्गा महाराज विद्याविद्येति नश्श्रुतम् ।
वैरिञ्चात् पञ्च भूतानि वैरिञ्चानि नराधिप ॥ ३६॥

उत्पद्यन्ते महाराज अहङ्कारादसंशयम् ।
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ॥ ३७॥
पञ्च भूतविशेषाश्च युगपत् काशिनन्दन ॥ ३८

वैरिञ्चोऽपि विषयार्थी जज्ञे भूतेषु पञ्चसु ।
मन इत्यभिदिश्येत विस्वराद्वैस्वरं तथा ॥ ३९
बुद्धीन्द्रियाणि राजेन्द्र तथा कर्मेन्द्रियाण्यपि ॥ ३९॥
चतुरः प्राकृतान् सर्गान् युगपत्तात बुद्धिमन् ।

वैकृतान् पञ्च चैवाहुर् अध्यात्मकृतनिश्चयाः ॥ ४०॥
त्वमेवान्ये च राजेन्द्र तत्त्वबुद्धिविशारदाः ॥ ४१
तिर्यक् सर्गं तथा मुख्य ऊर्ध्वोऽर्वाक् स्रोत एव च ।
पञ्चमोऽनुग्रहश्चैव नवैतान् विद्धि पार्थिव ॥ ४२
एतद्धि सर्गनवकं साङ्ख्ययोगनिदर्शनम् ॥ ४२॥
मयेयमानुपूर्व्येण तत्त्वसङ्ख्या च तेऽनघ ।
यश्च यस्मात् समुत्पन्नस् ततश्चैवानुवर्णितः ॥ ४३॥
विकारादि मनः प्राहुस् त्रयाणां पञ्चकानि वै ।
भूतादीनां तु पञ्चानाम् आहुर्विस्वरमेव तु ॥ ४४॥
प्राणापानसमानानाम् उदानव्यानयोश्च ह ।
विरिञ्चमाहुः प्राणादिं ब्राह्मणास्तत्त्वदर्शिनः ॥ ४५॥
त्रयोविंशतितत्त्वानां व्यक्तानां नृपसत्तम ।
आदिमव्यक्तमित्याहुर् यथाश्रुतिनिदर्शनम् ॥ इति * ४६॥

पञ्चशिखः—

एतद्धि मूर्तिसङ्घातं त्रैलोक्ये सर्वदेहिषु ।
अव्यक्तिकस्य सादृश्यं विरिञ्चस्य प्रजापतेः ॥ ४७॥
व्यक्तस्याव्यक्तमेवाहुर् विश्वरूपस्य नश्श्रुतिः ।
वेदितव्यो महाराज विश्वरूपस्सनातनः ॥ ४८॥

---

*अ-क—त्र्यशीत्यधिकशततमोऽध्यायः

अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
प्रवक्ष्यामि यथातत्त्वं तन्निबोध जनेश्वर ॥ ४९॥

श्रोत्रमध्यात्मं शब्दोऽधिभूतमाकाशोऽधिदैवतम् ॥ ५०

त्वगध्यात्मं स्पर्शोऽधिभूतं वायुरधिदैवतम् ॥ ५१

वागध्यात्मं वक्तव्यमधिभूतं अग्निरधिदैवतम् ॥ ५२

घ्राणमध्यात्मं गन्धोऽधिभूतं पृथिव्यधिदैवतम् ॥ ५३

पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतम् ॥ ५४

हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतम् ॥ ५५

पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतम् ॥ ५६

मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतम् ॥ ५७

अहङ्कारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतम् ॥ ५८

बुद्धिरध्यात्मं बोद्धव्यमधिभूतं पुरुषोऽधिदैवतम् ॥ ५९

एतदध्यात्ममधिभूतमधिदैवतमिति सर्वं विज्ञातव्यम् ॥ ६०

जनाभिद्रोहण ब्रह्मणीन्द्रे शुनि कीटे पतङ्ग[1]पतत्रिकादंश-
मशकेष्वित्येव प्रयोक्तव्यं स्यात् ॥ ६१

आत्मनैवात्मलिङ्गे चैतस्याव्यक्तिकस्य ममात्मिका आहङ्का-
रिकभौतिकवैकारिकेभ्यश्च कालज्ञानं पुरुषेभ्यो व्याख्यास्यामः

1. क—पुत्तिका

॥६२॥ तदेतत् पर्यायशतसहस्रशः पञ्चशतं पञ्चाहोरात्रमुपदिश्यते पञ्चानां पुरुषाणां तन्त्रैकस्य प्रतिषिद्धमव्यक्तस्य चतुर्णो वर्णानां वक्ष्याम्याचार्याः ॥६३॥ महदादीनां पर्यायशतसहस्राण्याचार्याशीतिमहोरात्रमपदिश्यन्ते ? ॥६४॥ वैकारिकस्य प्राधानिकस्य महतश्चत्वारिंशत्पर्यायशतसहस्राण्यहोरात्रमपदिश्यन्ते ॥ ६५

आहङ्कारिकस्य भौतिकस्य पुरुषस्य पर्यायदशसहस्राण्यहोरात्रमपदिश्यन्ते वैकारिकस्य पुरुषस्य मासः ॥६६॥ पर्यायमपि चतुर्युगम् ॥६७॥ तदेतत् पर्यायशतसहस्राणि पञ्चाशतमव्यक्तस्याकेवलस्य ॥६८॥ एभ्यः पश्येन्नित्यं कालज्ञानम् ॥ ६९ ॥ कालज्ञानस्याव्यक्तस्याचेतनस्य ज्ञानविज्ञानमिति पश्यन्त्या बीजधर्मिणा बीजधर्मिणां प्रकृतिधर्मिणां प्रकृतिधर्मिणा अप्रलयधर्मिणा प्रलयधर्मिणामिति ॥* ७०

संयमनः—

भगवन् यदा खलु अग्निर्दारुशतसहस्रकोटिष्ववतिष्ठमानस्तत्स्थत्वान्नित्यं सहधर्मी स्यात् एवं खल्वयं क्षेत्रसहस्रकोटिष्ववतिष्ठमानस्तत्स्थत्वान्नित्यं सहधर्मः स्यात् ॥७१॥ यस्यानिष्टं क्षेत्रं सहधर्मित्वं स्यात् नायमिष्टानिष्टे प्रवर्तमानः प्रकृतिमनुवर्तेत गुण सर्गाय गुणसर्गम् ॥७२॥ यश्चानुवर्तमानस्य प्रकृतिसहधर्मित्वं

*अ-क—चतुरशीत्यधिकशततमोऽध्यायः

स्यात् ॥ ७३ ॥ भवतु न ह्यनिष्टगुणेनानुगम्यमानामभिष्वजते इत्यर्थमस्येष्टा प्रकृतिर्गुणांश्च ताननुवर्तते ॥७४॥ तदभिष्वजनादनुवर्तनाच्च तत्स्थत्वाच्च नित्यस्यानित्यत्वमनुपश्यामः ॥ ७५ ॥ तद्धेतुमात्रं वक्ष्यामः ॥ ७६ ॥ कश्चिद् गुणस्त्वगुणिना सार्धं समीयाय ॥७७॥ समेत्य च कार्यकारणं कुर्वीत ॥ ७८ ॥ तं च तथेष्टानिष्टे प्रवर्तमानं गुणिनमथ गुणोऽनुवर्तते तत्स्थत्वात् ॥७९॥ ननु सोऽपीष्टानिष्टवद्भवति तत्स्थत्वात् ॥ ८०

यद्यप्यय[1]मिष्टानिष्टव्यतिरिक्तः सत् ॥ ८१ ॥ ह्यानायायमिष्टत्वभावमिष्टं येनायमनुवर्तते चाभिष्वजते चेति तदनुष्वजनादनुगमनाच्च कार्याकार्यकर्तृत्वमस्यानुपश्यामः ॥ ८२

कार्याकार्यकर्तृत्वाच्चायमिष्टानिष्टवत् स्याद्भवति ॥ ८३

यदुक्तमिष्टानिष्टे नायमिति तत् कथं मिथ्यागुणवानयं क्षेत्रज्ञो नागुणवान् ॥ ८४

यद्ययमगुणवान् स्यात् ॥८५॥ नायमिष्टानिष्टे प्रवर्तमानां प्रकृतिमनुवर्तेत गुणधर्मी ॥८६॥ तदनुवर्तितानि द्वन्द्वस्य द्वन्द्वधर्मित्वात् पश्यामः ॥८७॥ तदुपपन्नस्स्यात् व्यतिरिक्तत्वम् अनिर्द्वन्द्वस्यासद्वन्द्वत्वाच्च पश्यस्य ॥ ८८ ॥ का चास्य पश्यत्वं केवलस्याकेवलत्वं नित्यस्यानित्यत्वं केवलत्वं स्वातन्त्र्यं चास्य ॥८९॥

---

1. क—मिष्टानिष्टत्वभाव

पञ्चशिखः—

भो संयमन यदेतदुक्तं भवता न वयमस्यैतदेवं गृह्णीमः ॥९०
एकत्वमेवैतदुपदिष्टं भवता तत्र यत्नेष्टः ॥ ९१ ॥ संयोगान्नित्यं
जानीते सज्यमानमसकृदसकृत् संहरमाणं च गुणांस्तु संहार-
मनुवक्ष्यामः व्याख्यास्यामः ॥ ९२ ॥ तद्यथा चत्वारो भूत-
ग्रामाः जरायुजाण्डजोद्भिज्जाः कालाग्निनाऽहङ्कारेणाप्रमेयप्रभा-
वानुभावेन शतसहस्रांशुना दह्यमाना विघूर्णन्तोऽवशा भूमौ
पतन्ति ॥९३॥ ततस्तैर्भूतैर्हीना भूर्विवसना शुद्धा स्थण्डिला
कूर्मपृष्ठनिभा बभूव ॥९४॥ तां तथाभूतां जगज्जननीं जगती-
मापो भुञ्जते ॥९५॥ प्रनष्टा भूर्जलमेव स्यात् ॥ ९६ ॥ जल-
मादित्यो रश्मिभिरादत्ते ॥९७॥ समन्तादपां विनाशादग्निर्जा-
ज्वल्यमानोऽन्तरिक्षचरांश्च भूतानुपयुज्याग्निर्जलमादत्ते ॥९८॥
अग्निं च वायुः ॥९९॥ विनष्टेऽग्नौ वायुरेवाग्निस्स्यात् ॥१००
तं तदा सर्वप्राणभृतां प्राणानुपयुज्य वायुराकाशं स्यात्॥१०१
आकाशं मनस्तथाऽहङ्कारं महान् सूर्यस्सूयनात् ॥ १०२ ॥
कृत्स्नस्य जगतः सर्वसूर्याणामेकीकृत्वा लोकांस्त्रीन्नाशाय महत-
स्तमसो मध्ये तिष्ठत्येकस्तमप्यादददव्यक्तम् ॥१०३॥ तदेतत्
पञ्चाहोरात्रिकं प्रलयं महाप्रलय इत्युच्यते ॥ १०४ ॥ प्रल-
यान्महतस्तदेकत्वं प्रनष्टसर्वस्वं सर्वमूर्तिजालेश्वरविनाश्योदकं
मूर्त्येकं स्यात् । १०५

तदेतद्व्यक्तव्यं च प्रकरणाद्गुणतां कर्तव्यमित्युच्यते संहरणाद्धव्यमिति ॥१०६॥ तदेतत्त्वं गुणवन्तं निर्गुणं गुणोपयोगात् गुणकर्तृत्वाद्गुणिनमुपदिश्यते बुधैः ॥ ॥१०७॥

क्रियामेवमेवासकृत् असकृत् सृजते च गुणान् ॥१०८॥

नन्वनवबोधादहमस्त्वहमेवैकस्स्यात् नान्यस्स्यादिति ॥१०९
यदि ह्येषाऽवबुद्ध्येतान्योऽस्ति मम वर इति न सृजेदुदासीनत्वाच्च सर्गसंहारयोरुत्पत्तिर्न भवेत् ॥ ११०

यदुक्तं भो संयमन को विश्वं सृजते कृत्स्नमिदं संहरते चेति ॥१११॥ यदुक्तं कश्चिद्विश्वमधिष्ठाय तिष्ठत्यग्निवद्दारुषु इति ॥११२॥ पञ्चविंशकोऽन्योऽन्यस्याव्यक्तस्य त्रयोविंशतितत्त्वस्य चतुर्विंशतिकस्य द्रष्टा द्रष्टव्यस्य श्रोता श्रोतव्यस्य मन्ता मन्तव्यस्य बोद्धा बोद्धव्यस्याधिष्ठाता वाऽनेनाधिष्ठिता प्रकृतिर्गुणान् संहरते नर्तते ॥११३॥ न चेतनेनाचेतना निर्गुणेन गुणिनीति पश्येनापश्येति शुद्धेनाशुद्धा नित्येनानित्या केवलेनाकेवला सहधर्मिण्यसहधर्मिणा दर्शनधर्मिणा दर्शनधर्मिणी क्षेत्रधर्मिणा क्षेत्रिदर्शनात् ॥ ११४ ॥ कस्मात् पृथक्त्वात् ॥ ११५ ॥ पृथग्भावमस्याः प्रपद्यते नैकत्वं नेष्टं भवतः ॥११६॥ प्रकृतिक्षेत्रज्ञयोरेकत्वमनवबोधदर्शनं एतदबुधानां दर्शनम् ॥११७॥

न बुधा ह्येवमेव तदनुपश्यन्ति पश्यापश्ययोरेकत्वम् ॥११८॥ कस्मात् । शास्त्रदर्शनात् ॥११९॥ शास्त्रदर्शनस्याबोधादबुध इत्युच्यते बुधैः ॥ १२०

बुधश्चायं क्षेत्रज्ञो बुद्ध्यादीन् गुणानभिवर्तमानानवबुध्यते प्रकृतितः ॥१२१॥ तच्च बोद्धव्यम् ॥१२२॥ नत्वेवं प्रकृतिं वा क्षेत्रज्ञमनवबोधा? अबुधस्य ॥१२३॥ यदि ह्येवं बुध्येरन् प्रकृतिं वा गुणा वा बुद्धं बुद्धसहधर्मिणी स्यात् ॥१२४॥ भवेयुस्ते च बुद्धामनुबुद्ध्यति तमनुबुद्धत्वात् प्रकृतिरभिमन्यते ॥ १२५॥ अहमेवास्य नान्यस्स्यादिति ॥ १२६ ॥ इष्टानिष्टानभिष्वजते सहजा? यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहं भक्ष्याभक्ष्यं पेयापेयं वाच्यावाच्यमिति ॥१२७॥ गमनं सङ्कोचनं प्रसारणं प्रियाप्रियं गम्यागम्यं शुभाशुभं शब्दस्पर्शरूपरसगन्धादीनां चावाप्तिरित्येवमादीन् गुणानुत्पादयत्यनवबोधात् प्रकृतिरनुभूयते द्वन्द्वत्वात्तदनेकत्वमस्य क्षेत्रज्ञस्य प्रपद्यते ॥ १२८ ॥ निर्द्वन्द्वस्य प्रवर्तमानस्य पश्यन्नुत्पद्यतेऽहङ्कारकृतो दोषस्स्यात् अहमेनामाचक्षे तेऽहमेनां बुध्यामीति ॥१२९॥ न चैष पश्यत्याचक्षते बुध्यते चाहङ्काराद् ॥ १३० ॥ यदि ह्ययं मन्येताभिषजेद्वा ॥१३१॥ एवमनुबन्धस्स्यादनुबन्धाच्च शक्तित्वं स्यात् ॥१३२ शक्तित्वाच्चास्य व्यतिरेकत्वं स्यात् ॥ १३३ ॥ यदाऽयमिष्टा-

निष्ठाभ्यां मध्यस्थः । कथमस्येष्टानिष्टकृतो दोषस्स्यात्॥ १३४
भवति निर्द्वन्द्वाच्चास्यालेपकत्वाच्चास्य व्यतिरेकत्वं स्यात् ॥
१३५

भवतश्चात्र श्लोकौ— १३६

पङ्कस्यापि हि दोषेण नोपलिप्यति पङ्कजम् ।
तथाऽव्यक्तस्य दोषेण नोपलिप्यति केवलः ॥ १३७

केवलत्वं पृथग्भावात् पङ्कपङ्कजयोर्यथा ।
तथाऽस्य सहभावत्वाद् विनाभाव इति स्मृतः ॥ १३८

एवमस्य भो संयमन व्यतिरिक्तस्य व्यतिरिक्तत्वं भवति
व्यतिरिक्तत्वात् असहभावमसहभावत्वाच्च अन्यत्वमन्यत्वाच्चि-
त्तत्त्वमिति ॥१३९॥ अत्र श्लोका भवन्ति १४०

घोरादगाधादव्यक्ताद् अस्तमं त्वजरं जनाः ।
प्रतीपभूतमन्यस्मान्मन्यन्ते तत्त्वबुद्धयः ॥ १४१

ये त्वबुद्धास्तपोयोगाद् एकत्वेनानुपश्यतः ।
ते व्यक्तनिष्ठादेकत्वाज् जायन्ति च म्रियन्ति च ॥ १४२

निर्द्वन्द्वधर्मिणो नित्यम् अबोधाद्द्वन्द्वधर्मिणा ।
अनित्यत्वान्महाराज द्वन्द्वनिष्ठा भवन्ति ते ॥ १४३

अश्रद्दधानाश्शास्त्रस्य द्वैधीभावाच्च पार्थिव ।
कालस्यास्ये निमज्जन्ति उन्मज्जन्ति भवे नराः ॥ १४४

अव्यक्ताच्च भवेन्मोक्षो ह्यप्येकमाहुर्धर्मिणा ।
विमुच्यैतद्विमोक्षस्स्याद् अविमोक्षात् पुनर्भवः* ॥ १४५

पञ्चशिखः—

भो संयमन एवमेवायमन्यो व्यक्तधर्मा अप्यगुणो गुणधर्मिणोऽप्यचलश्चलधर्मिणोऽप्रकृतिः प्रकृतिधर्मिणोऽक्षेत्रः क्षेत्रधर्मिणो विमुक्तश्चाविमुक्तश्चेति ॥ १४६ ॥ अशुचिनः प्रशुचिः विमुक्तिश्चाविमुक्ताच्च विमलश्चाविमलात् शुद्धश्चाशुद्धात् वियोगश्चावियोगात् मोक्षश्चाविमोक्षात् ॥१४७॥ एवं पुष्करपर्णस्थ इवाब्बिन्दुर्नित्यमसक्तस्तत्स्थत्वान्मशकोदुम्बरयोर्मत्स्योदकयो बिन्मूषिकयोश्च? यथाऽव्यक्तं भवति ॥१४८॥ सहभावादेवमस्य क्षेत्रज्ञस्यान्यत्वं भवति तदुच्यमाणस्य पश्येनापश्यस्य पश्यतश्चापश्यस्य बुद्ध्या अबुद्धस्य चेतनेनाचेतनस्य केवलेनाकेवलस्य नित्येनानित्यस्य ज्ञानेनाज्ञानस्य ॥१४९॥ एवमस्य भोः अज्ञातस्याव्यक्तस्य उपकरणं शोकादशोकं मोहादमोहं स्थिरात् स्थिरं अभ्रादनभ्रं व्रणादव्रणं काजादकाजं सीमादसीमं पुरादपुरं पुरस्य चाप्यवदारणं पुरत्वमपदिश्यते ॥१५०॥ लोकादलोकं कालादकालं भयादभयं शिवादशिवं विभुत्वाच्चाविभुत्वम् ॥१५१॥

* अ-क—पञ्चाशीत्यधिकशततमोऽध्यायः

एवमस्यानुपदेशतः [1]खल्वविभक्तमविभाजनमस्यैकत्वं परमनुप-
दिश्यतो नानात्वात् क्षेम्यस्स्यादक्षेम्यस्स्यादव्यक्तात् ॥ १५२

भवन्ति चात्र श्लोकाः— १५३

क्षेम्या क्षेम्यं नानुपश्येत नित्यं
क्षेम्यस्त्वन्यस्तं तु नैवाभिपश्येत् ।
षड्विंशो वा पञ्चविंशो नु राजन्
अव्यक्तश्च प्राहुरेवं विधिज्ञाः ॥ १५४

योऽयं बोद्धा पञ्चविंशः परस्य
स मन्यते ईदृशोऽस्मीति राजन् ।
बुद्धस्य वै बोधनात्तेन सम्यग्
गच्छत्ययं न च लोकाद्बलत्वम् ॥ १५५

एवं बोद्धा केवलात् केवलस्सन्
स साव्यक्तः किञ्च संज्ञानसंज्ञः ? ।
निर्द्वन्द्वस्य द्वन्द्वभावात्मकस्य
भावान्न स्यान्न प्रभावं शुचि स्यात् ॥ १५६

[2]शुचिप्रबोधादशुचित्वं तदा स्यात्
त्रिलोकसद्भावगुणप्रवर्तकम् ।

---

1. क—खल्वव्यक्त
2. अ—श्लोको १६० वाक्ये 'नाहमस्याः कश्चित्' इत्येतत्पर्यन्तं च नास्ति

भवत्ययं केवल एव केवलम्
समेत्य नित्याममलामयं शुचिः ॥ १५७

शुचिप्रबोधादस्य भो संयमन बुध्यमानस्य पञ्चविंशकस्य
बुद्धात् षड्विंशबोधनत्वमुपदिशन्ति ॥१५८॥ बोद्धारं बुध्यमा-
नस्य व्यतिरिक्तस्य व्यतिरिक्तत्वमुपपद्यते ॥१५९॥ केवलं
नाहमस्याः कश्चिन्नेयं मम काचन षड्विंशस्याहमहं चास्यानेन
मम सह चैकत्वमिति ॥१६०॥ तत्र श्लोकः— १६१

साम्यस्साम्यं शुचिं दृष्ट्वा शुचिमाहुर्मनीषिणः ।
बहिः कृत्वा तमिस्रालम् अव्यक्ताच्चेतनः परम् ॥ इति १६२

तदेतद्भगवता बन्धमवाप्यमहं तत्त्वं? परमर्षिणा परम-
गुरुणा मम कपिलेन, गुरुणा च ममासुरिणा जातिशतैर्बहुभि-
रवाप्तं कृत्स्नं कपिलात् ॥१६३॥ मयाप्येवमेत्र शिष्य[1]दर्शत्व-
मुपगम्य जातिशतैर्बहुभिरवाप्तं भगवत आसुरेस्सकाशात्
॥१६४॥ मत्तश्च कात्यायनेनाप्तम् ॥१६५॥ गौतमेन कात्याय-
नादवाप्तम् ॥१६६॥ गौतमाच्च गार्ग्येणावाप्तम् ॥१६७॥ तदे
तत्परम्परया बहुभिराचार्यैरवाप्तं कृत्स्नाक्षयममृतार्थतत्त्वं विमल-
ममलज्ञानम् ॥१६८॥ अवत्यागाधमचेतनमकेवलमव्यक्तमपास्य

1. क—दशमत्व

नित्यमचेतनमकेवलमव्यक्तमपास्य नित्यमचेतनमज्ञानप्रतिबुद्ध-
मव्यक्तं बुध्यमानेन पञ्चविंशकेन षड्विंशकम् ॥ १६९

अत्र श्लोका भवन्ति— १७०

तस्यैवैतद्वर्णितमात्मयोगाद्
वाराणस्यां क्रीडमानेन राज्ञः ।
तत्त्वज्ञानं पृच्छतः प्राञ्जलेस्स्यात्
पृच्छां तस्य ग्रन्थतश्चार्थतश्च ॥ १७१

प्रोक्तं ह्येतत् षोडशप्रश्नमुग्रं
निस्तत्त्वाषषड्विंशकश्चैव राजन् ।
यं वै बुद्ध्वा बालकाय प्रणम्य
मूर्ध्नाऽऽपन्नः पादयोर्दृश्यमानः ॥ १७२

पद्भ्यां गतस्तत्त्वमवाप्य कृत्स्नं
सनत्कुमारादमृतं परोत्सम् ? ।
सनत्कुमारेण ममोपदिष्टम्
एतन्महद्ब्रह्म यथावदद्य ॥ १७३

ते तच्छ्रुतं तद्भव वीतशोक एतन्महाप्रश्नमवाप्य चार्थम् ।
तुल्यं भवान् पश्यतु ब्रह्मणश्चेद् इन्द्रस्य स्थाणोर्मशकस्य चैव ॥

पतङ्गकीटे शुनि च श्वपाके
सर्वं हि सर्वत्र नरेन्द्रसिंह ।

यस्त्वन्यथा पश्यति ह्यल्पबुद्धिर्
अव्यक्तनिष्ठस्स भवेत राजन् ॥ १७५

सत्त्वस्य सर्वस्य अपश्यमाने
अबुद्धिमान् दुःखमुपैति नित्यम् ।
न चास्य दुःखं स तु दुःखमेति
वैषम्यबुद्धित्वमपश्यमानः ॥ १७६

तद्गच्छ राजन् स्वपुरीं विशालां
वाराणसीमश्वरथेन शीघ्रम् ।
एतावदेतत् परमं रहस्यम्
उक्तं मया ते यतते नरोत्तम ॥ १७७

यत्र तत्र संवसंस्त्रिवर्गविच्छुचिः शुचिर्हि पञ्चविंशकः ।
तथैव षड्विंशकत्वमवबुध्यते यदा तदा शुचिर्भवेदिति* ॥१७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
[अस्मिन्नध्याये ६५ श्लोकाः ११३ वाक्यानि

---

* अ-क—षडशीत्यधिकशततमोऽध्यायः 'संयमनपृच्छा समाप्ता'

## ॥ षडधिकत्रिशततमोऽध्यायः ॥



व्यासेन युधिष्ठिरं प्रति अगस्त्यमहिमवर्णनम् ॥ १ ॥ द्वादशवर्षदेशीयेनागस्त्येन पुष्करक्षेत्रे भास्करगिरौ वितमानदीतटे द्वादशवार्षिकतपश्चरणम् ॥ २ ॥ अष्टाशीतिसहस्राणामृषीणां भूप्रदक्षिणक्रमेण भास्करगिरिगमनम् ॥ ३ ॥ इन्द्रेण सह चतुर्मुखस्य तत्र गमनम् ॥४॥ ब्रह्मणा इन्द्रं प्रति ऋषीणामहङ्कारो भविष्यति अतो नात्र त्वया स्थातव्यमित्युक्तिः ॥५॥ ब्रह्मेन्द्रयोस्ततो निर्गमनम् ॥ ६ ॥ ऋषीणां नारदकलहादहङ्कारागमः ॥ ७ ॥ ऋषिभिर्वितमायां स्नात्वा जपानन्तरं अहङ्कारेण तपोलोपात् स्वर्गादिगमनाशक्त्या नारदे प्रह्वीभूय तत्कारणप्रश्नः ॥ ८ ॥ नारदेन वितमायां पुनरहङ्कारविगमाय तपःकरणविधानम् ॥ ९ ॥ तपःकरणेऽप्यशक्तानृषीन् प्रति नारदेन दर्पादिकं सर्वं परित्यज्य बालकं तपस्यन्तमगस्त्यं गच्छतेत्युक्तिः ॥ १० ॥ ऋषिभिरगस्त्यप्रार्थनम् ॥ ११ ॥ अगस्त्येन स्वनैच्यप्रकटनं कृत्वा स्वेन ऋषीणां स्वर्गलोकप्रापणमशक्यमित्युक्त्या ऋषीणां प्रत्यागमनकाले पुनरगस्त्येन कञ्चित्कालं तिष्ठतेत्युक्त्वा वितमायां स्नात्वाऽऽगत्य स्वतपोबलेन ऋषीणां सर्वेषां स्वर्गप्रापणम् ॥ १२ ॥ नारदेनागस्त्यप्रशंसनम् ॥ १३ ॥ अगस्त्यस्याहङ्काराद्यभावेन स्वनैच्यप्रकटनम् ॥ १४ ॥ नारदेन स्वर्लोकगमनम् ॥ १५ ॥ व्यासेन युधिष्ठिरं प्रति अगस्त्यमहिमवर्णनम् ॥ १६ ॥ अगस्त्येन तपःप्रभावात् आकाशगमनम् ॥ १७ ॥ तत्र देवादिभिस्सह संलप्य स्वर्गलोकगमनम् ॥ १८ ॥

वैशम्पायनः—

पुरा युधिष्ठिरो राजा प्रयतेनान्तरात्मना ।
द्वैपायनमृषिश्रेष्ठं पप्रच्छाधिकृताञ्जलिः ॥ १

सहितो भ्रातृभिस्सर्वैर् उदारमतिभिश्शुभैः ।
पृथिव्यामुपविष्टैस्तु विनीतैरुत्तमौजसैः ॥ २

युधिष्ठिरः—

भगवान् सर्वभूतानां सर्वज्ञस्सर्वदर्शिवान् ।
विश्रुतस्त्रिषु लोकेषु धर्मेण च दमेन च ॥ ३

तदिच्छाम उपश्रोतुं मङ्गल्यमृषिसत्तम ।
कथां भगवता प्रोक्तां सर्वपापप्रणाशिनीम् ॥ ४

वयं च यद्यनुग्राह्यास् सर्वे भगवतो मताः ।
ब्रूहि सत्यवतां श्रेष्ठ शृणुमोपहिता वयम् ॥ ५

वैशम्पायनः—

एवं सम्प्रश्रयादुक्तस् सत्यात्मा सत्यवादिना ।
युधिष्ठिरेण सत्कृत्य कृष्णद्वैपायनोऽब्रवीत् ॥ ६

व्यासः—

युधिष्ठिर महाप्राज्ञ कुरूणां वंशवर्धन ।
श्रोतुमिच्छसि कौन्तेय भ्रातृभिस्सहितश्शुभाम् ॥ ७

इमां कथामुपश्रुत्य नराणामर्थसिद्धये ।
विजयश्च नरेन्द्राणाम् इह पार्थ न दुर्लभः ॥ ८

शान्तिकी पौष्टिकी रक्षा सर्वदुस्स्वप्ननाशिनी ।
कथेयममराकारा दैवतैरपि कथ्यते ॥ ९

अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
बाल्येऽवाप्तं तु यद्वीर अगस्त्येन महात्मना ॥ १०

पुरा कृतयुगे राजन् महर्षिः कुम्भसम्भवः ।
मित्रावरुणयोः पुत्रश् श्रीमानतितपाः प्रभुः ॥ ११

स चाश्रमपदे पुण्ये पुण्यकर्मा महातपाः ।
समाद्वादशको राजन् वयसा भरतर्षभ ॥ १२

तमावसथ ? एकाकी ह्यभ्राकाशकृतं व्रतम् ।
मित्रावरुणयोस्स्वर्गे गतयोस्सुकृतात्मनोः ॥ १३

पुष्करस्योत्तरे तीरे सर्वदेवनमस्कृतः ।
पर्वतो भास्करो नाम भास्कराभस्स्वतेजसा ॥ १४

अतः प्रभवते राजन् पुण्यस्रोता महानदी ।
वरदा वितमा नाम सिद्धचारणसेविता ॥ १५

तस्मिन् गिरिवरे तस्य अगस्तेः पैतृकोऽश्रमः ।
पुण्यपुष्पफलोपेतैः पादपैरभिसंवृतः ॥ १६

तप्यते शिशुरेकाकी तपो द्वादशवर्षिकम् ।
यन्न तप्तं पुरा वत्स दिव्यैरन्यैस्तपोधनैः ॥ १७

नेश्वरेण न चेन्द्रेण यमेन वरुणेन वा ।
नित्योर्ध्वबाहुरादित्ये भास्करे तस्थिवान् मुनिः ॥ १८

ऊर्ध्वोन्मुखो निरालम्बो जितात्मा पवनोपमः ।
निरावृतो निरालम्बो नियतात्मा जितेन्द्रियः ॥ १९

निर्द्वन्द्वो निरहङ्कारो निराशो निस्पृहः क्वचित् ।

काष्ठभूतस्तपस्तेपे सर्वभूतहिते रतः ॥ २०

निर्वृतो निस्तमो धीरो निर्वृतस्सर्वतस्समः ॥ २०॥

तमेवमुपसम्पन्नम् उदारमनसं शुचिम् ? ।

भास्करे वर्तते नित्यं तप्यमानमतीव च ? ॥ २१॥

अवर्धत महापुण्ये स हि धर्मेण भारत ॥ २२

अथ कौन्तेय कालेन केनचिद्भरतर्षभ ।

अष्टाशीतिसहस्राणि यतीनां पुण्यकर्मणाम् ॥ २३

आनुपूर्व्येण धर्मज्ञ महीं कृत्वा प्रदक्षिणम् ।

सपर्वतवनोद्देशां सनदीनदसागराम् ॥ २४

तत्र तत्र महापुण्याः पुण्यतीर्थाभिलाषिणः ॥ २४॥

द्वैपायनः—

एतस्मिन्नन्तरे पार्थ ऋषिसङ्घस्स वै महान् ।

प्रदक्षिणं महीं कृत्वा भास्करं गिरिमभ्ययान् ॥ २५॥

ते तं गिरिवरं पुण्यम् अथ कृत्वा प्रदक्षिणम् ।

ततो गिरिनदीं पुण्यां तीर्थहेतोरुपागमन ॥ २६॥

अष्टाशीतिसहस्राणि तत्र नद्यां युधिष्ठिर ।

विगाह्य तज्जलं राजन् प्रहृष्टा मुनयोऽभवन् ॥ २७॥

केचित् सस्नुर्यथाकामं केचिदत्र उपाविशन् ।

---

* अ-क—अगस्त्यवर्धमाने सप्ताशीत्यधिकशततमोऽध्यायः

केचित् पुण्येन तोयेन पितृदेवांश्च तर्पयन् ॥ २८॥
केचित् प्रक्रीडितास्तत्र जपन्त्यन्ये तपोधनाः ।
अध्यात्मं चिन्तयन्त्यन्ये केचिद्वेदानधीयते ॥ २९॥

कथाश्शुश्रुवुरन्ये च प्रोक्ता अन्यैस्तपोधनैः ।
ध्यानमन्ये ह्युपासन्त निषेदुश्च तथा परे ॥ ३०॥

एवं ते ऋषिभिस्सिद्धैर् वितमा पुण्यवर्धनी ।
नदी सा पुरुषव्याघ्र द्योतते तैस्तपोधनैः ॥ ३१॥

एतस्मिन्नन्तरे पार्थ देवराजः पुरन्दरः ।
पितामहं पुरस्कृत्य सह देवैस्समेयिवान् ॥ ३२॥
वितमायां तदेकान्ते तस्यां नद्यां युधिष्ठिर ॥ ३३
अथाब्रवीन् पुष्करजस् सुरेश्वरमरिन्दमम् ।
विज्ञाय मुनिसङ्घस्य धर्मे रागमुपस्थितम् ॥ ३४

पुरन्दरं महाबाहो सर्वथा श्रोतुमर्हसि ।
ऋषीणाममरश्रेष्ठ धर्मे रागमुपस्थितम् ॥ ३५

इमं मुहूर्तमेतेषाम् अहङ्कारस्सुरेश्वर ।
प्रभविष्यति सर्वेषां अस्वर्गीयो न संशयः ॥ ३६

स भवान् देशमुत्सृज्य इमं सुरवरेश्वर ।
गन्तुमर्हसि धर्मात्मन् द्रष्टुमेषां न ते क्षमम् ॥ ३७

ततस्तु तद्वचश्श्रुत्वा देवराजः पितामहात् ।

जगाम भरतश्रेष्ठ सह देवैररिन्दम ॥ ३८

गते देवेश्वरे शक्रे पितामहपुरोगमे ।
अष्टाशीतिसहस्राणि परमं हर्षमभ्ययुः ॥ ३९

ते प्रनृत्ताः प्रगीताश्च तथा प्रहसिता अपि ।
वितमाया जले पुण्ये तस्मिन् प्रक्रीडिताः परे ॥ ४०

एकान्ते च महाप्राज्ञो नारदः कलहप्रियः ।
तन्त्रीयुक्तकमादाय मुनिर्वेदमधीतवान् ॥ ४१

संवर्तोऽप्यथ कौन्तेय जलादुत्थाय भारत ।
उवाच तानृषीन् सर्वान् हर्षेण महता युतः ॥ ४२

संवर्तः—

श्रूयतामृषिभिस्सर्वैर् इदं मम वचो द्विजाः ।
रोचते यदि सर्वेषां क्रियतां मुनिसत्तमाः ॥ ४३

अहमुग्रतपा विप्रा भवन्तोऽपि तथैव च ।
न तुल्योऽस्मत्प्रभावेण [1]धर्मे न च तथा परः ॥ ४४

दीर्घकालप्रचीर्णस्य यमस्य नियमस्य च ।
तपोबलं न पश्यामि किमप्येतत् कथञ्चन ॥ ४५

व्यासः—

संवर्तवचनं श्रुत्वा सर्वे तदृषिमण्डलम् ।

---

1. क—धर्मो

अहङ्कारवशं प्राप्तं तद्वाक्यमभिनन्दत ॥ ४६
अहंकृत्वा ततस्सर्वे ऋषयः कुन्तिनन्दन ।
परस्परमवज्ञाय तत्र तेऽथामितौजसः ॥ ४७

भृगुस्ततो महाराज सर्वर्षिगणपूजितः ।
संवर्तवचनं तत्र स सत्कृत्येदमब्रवीत् ॥ ४८

भृगुः—

एवमेतन्न सन्देहो यत्त्वयोक्तं धृतव्रत ।
तस्मात् प्रभावं तपसो द्रष्टुमर्हाम सर्वशः ॥ ४९

ऋषयश्श्रूयतां तावन्मम वाक्यं धृतव्रताः ।
अहं शुचिरहं श्रेष्ठ अहमुग्रतपोधनः ॥ ५०

अहं प्रधान इत्येवं यज्जल्पथ तपोधनाः ।
किमेतत् कथयित्वा वो ह्यहङ्कारात् पुनः पुनः ॥ ५१

प्रत्यक्षं द्रष्टुमिच्छाम इह धर्मस्य नः फलम् ।
न तपो विद्यते यत्र सर्वभूतेष्वसंशयम् ॥ ५२

उपस्पृश्य ततस्तोयं पुनरभ्युपगम्यताम् ।
दृश्यतां सुप्रतप्तस्य धर्मस्य महतः फलम् ॥ ५३

यत्र येन तपस्तप्तं तथा दशदशात्मकम् ।
तद्दर्शयध्वं सङ्गम्य तपो यस्य यथा कृतम् ॥ ५४

व्यासः—

ततो भृगुवचश्श्रुत्वा सर्वं तदृषिमण्डलम् ।
भृगोर्वचः पुरस्कृत्य तथेत्यूचुर्महर्षयः ॥ ५५
ते तु क्रोधादहङ्कारं प्राप्य सर्वे महर्षयः ।
नदीं तां वितमां पुण्याम् उपस्प्रष्टुं प्रचक्रमुः ॥ ५६
ते च प्रनष्टतपसो वितमायां जलं शुभम् ।
उपस्पृश्य महाराज जप्यमावर्तयंस्तदा ॥ ५७
ततस्तद्गगनं रुद्धं सर्वैस्तैर्ऋषिसत्तमैः ।
तपोबलं नरश्रेष्ठ दर्शयद्भिरसंशयम् ॥ ५८
कश्चिदाकाशमाविश्य ज्वलद्धर्मेण केवलम् ।
अप्सरोभिस्तथा चान्यैर् वृतास्स्वर्गगता द्विजाः ॥ ५९
पुष्पवर्षैस्तथा चान्यैः पूज्यन्ते गुह्यकैरपि ।
केचिदाकाशमाविश्य दिव्यां चेष्टामकुर्वत ॥ ६०
तथाऽऽसीत् सु[1]महान् दोषो हर्षात् तेषामरिन्दम ।
अन्योन्यं पश्यतां तत्र हसतां च युधिष्ठिर ॥ ६१
ते दृष्ट्वा बलमन्योन्यं धर्मस्य भरतर्षभ ।
तदेवं कथयन्तस्ते तीरे नद्यास्तथा विभो ॥ ६२
तं दृष्ट्वा च विदित्वा च धर्मलोपं महात्मनाम् ।

---

1. क—महानादो

नारदः कुरुशार्दूल घट्टयंस्तन्त्रियुक्तकम् ॥ ६३

अथ ते ऋषयस्सर्वे गन्तुकामा नभस्तलम् ।
यथापूर्वममित्रघ्न अशक्ता गमनाय हि ॥ ६४

अष्टाशीतिसहस्राणि मुनीनां भावितात्मनाम् ।
अशक्ता गमने राजंस् ततोऽन्योन्यमपश्यत ॥ ६५

ते निरस्ता निरुत्साहा निराशा गमनं प्रति ।
तत्रैवासन् महाभागा भ्रष्टपक्षाः खगा इव ॥ ६६
किमिदं किंन्विदमिति धिक् कष्टमिति चापरे ॥ ६६॥

एवमुक्त्वा वीक्षमाणास् स्वर्गे विगतचेतसः ।
अहङ्कारेण महता वसुधायां निपातिताः ॥ ६७॥

मोहस्य वशमागम्य सर्व एव विचेतसः ।
न किञ्चिदभिजानन्ति धर्मस्य गमनाय वा ॥ ६८॥

यदा विमनसस्सर्वे खगाः खात् पतिता इव ।
अथैतान् नारदोवाच हर्षादिदमथो वचः ॥ ६९॥

नारदः—

किमुद्वीक्षथ मोहस्था नाकपृष्ठं यियासवः ।
दुर्लभोऽयं गुणो भूयो भवतां नष्टधर्मिणाम् ॥ ७०॥

अहङ्कारेण महता नष्टो धर्मस्सनातनः ।
एवं गते न पश्यामि स्वर्गं गन्तुं यथा पुरा ॥ ७१॥

एते स्थ ऋषयस्सर्वे पक्षहीनाः खगा इव ॥ ७२

[1]तेन धर्मातिलोपेन चिन्तितेन दुरात्मना ।
एते स्थ सर्वे संवृत्ता निराशा गमनं प्रति ॥ ७३

नद्यास्तीरे शुभे पुण्ये धर्मं कुरुत यत्नतः ॥* ७३॥

द्वैपायनः—

तस्य तद्वचनं श्रुत्वा ऋषयो दिव्यचेतसः ।
तं नारदमृषिश्रेष्ठं प्रह्वा भूत्वाऽथ तेऽब्रुवन् ॥ ७४॥

ऋषयः—

पुनरस्मद्विधैर्भूयो नाकपृष्ठं तपोधन ।
अधिष्ठातुं कथं वाऽपि न भवेद्धर्मसङ्करः ॥ ७५॥

व्यासः—

तेषां तु वचनं श्रुत्वा नारदः पुनरब्रवीत् ॥ ७६

नारदः—

मुहूर्तं ध्यानमास्थाय योगमागम्य वै शुभम् ।
अहङ्कारस्य जानीध्वम् ऋषयो दारुणं बलम् ॥ ७७

किमाशाऽस्य तु पापस्य कर्मणश्चरितस्य वै ।
अहो फलमनार्यस्य दुष्कृतस्य महत्त्विदम् ॥ ७८

यदेवं प्राप्यते दोषः अहङ्कारो महर्षिभिः ।

---

1. अ—अर्धश्लोकं नास्ति

* अ—नात्राध्यायसमाप्तिर्दृश्यते क-अष्टाशीत्यधिकशततमोऽध्यायः

किं तद्वर्षसहस्राणि तप्तस्य तपसः फलम् ॥ ७९
कृतं नष्टं पुरा त्विष्टं नियमः क च वै दमः ।
यदूर्ध्वबाहुभिश्शान्तैः क नु तस्य फलं गतम् ॥ ८०
यदर्थं चार्चिता देवाः पितरश्च तपोधनाः ।
क नु तस्य फलं विप्रास् तपसोऽत्र तु वै गतम् ॥ ८१
एते कर्तव्यधर्मास्स्थ पुनरेव यथा पुरा ।
एवं गते न पश्यामि गमनं वस्त्रिविष्टपम् ॥ ८२
अहङ्कारप्रभावेन तेन संशयिता गतिः ।
अहमप्यनुगन्ता वै केवलं न तु कर्मणा ॥ ८३
अनेन कारणेनाहम् एवं संशयमात्मनि ।
तदियं प्रवरस्रोता नदी पुण्यजला शुभा ॥ ८४
कर्तव्यो धर्म इह तु यदि नास्ति नभोगतिः ॥ ८४॥
वायुभक्षा निराहारा नियता विजितेन्द्रियाः ।
इह धर्मे सुनिभृता भवन्तः कर्तुमर्हथ ॥ ८५॥
इह देवेश्वरेणापि वासवेन महात्मना ।
धर्म उग्रस्सुचरितो वितमायाः पुरोपरि ॥ ८६॥
इह देवेन देव्या च रुद्रेण सुमहत्तपः ।
तप्तं वर्षसहस्राणि दिव्येन विधिना पुरा ॥ ८७॥
इमां सरिद्वरां प्राप्य विष्णुनाऽपि महात्मना ।

शुभं जलमुपस्पृश्य प्राप्तो दुस्तरसङ्क्षयः ॥ ८८॥
एष प्रभावो धर्मज्ञा नद्या अस्या न संशयः ।
चरित्वेह ततः पुण्यं गमिष्यथ शुभां गतिम् ॥ ८९॥

व्यासः—

यदा विमनसस्सर्वे परं दैन्यमुपागताः ।
सर्वानेव महात्मानस् ततस्तान् नारदोऽब्रवीत् ॥ ९०॥

नारदः—

दैन्यमेतत् परित्यज्य सर्वकार्यावसादकम् ।
श्रोतुमर्हथ ते सर्वे प्रयतेनान्तरात्मना ॥ ९१॥
यच्च वक्ष्यामि तत् कार्यं भवद्भिः कार्यसाधनम् ।
सर्वथा मानमुत्सृज्य विनयेन दमेन च ॥ ९२॥
यदिदं वचनं मेऽद्य करिष्यथ तपोधनाः ।
इदं मुहूर्तमाकाशं यथापूर्वं गमिष्यथ ॥ ९३॥
यदि मद्वचनं सर्वे यथोक्तमनुतिष्ठथ ।
अस्मिन् मुहूर्ते सर्वेषां कल्मषं नाशमेष्यति ॥ ९४॥
अनृतं नोक्तपूर्वं मे मुनिरस्मि धृतव्रताः ।
तद्वचश्श्रूयतां साधु नारदोऽस्मि धृतव्रताः ॥ ९५॥
धर्मो वस्त्यक्तमानानां स्वर्गश्चैव भविष्यति ॥ ९६
इदं मुहूर्तं सर्वेषां मद्वाक्यं परिगृह्य तु ।

भावश्रेयांसि धर्म्याणि वाक्यानि सुहृदां सदा ॥　　९७
क्रियतामविचारेण ममेदं वचनं हितम् ॥　　९७॥

संवर्तस्य हितार्थाय यथावदिह लप्स्यथ ।
कथयिष्यामि वस्सम्यक् सर्वेषामेव साधुषु ॥　　९८॥

श्रुत्वा क्षमाक्षमं ज्ञात्वा यद्धितं तत् करिष्यथ ।
शाश्वतं च ध्रुवं चैव यथास्थानं गमिष्यथ ॥*　　९९॥

द्वैपायनः—

ते तस्य वचनं श्रुत्वा तदा ऋषिवरा नृप ।
हर्षेणोत्फुल्लनयनास् सर्वे एव तदाऽभवन् ॥　　१००॥

तं भृगुः प्रयतो भूत्वा देवर्षिं नारदं तदा ।
उवाच पुरुषश्रेष्ठ विस्मयाद्रुचिरं वचः ॥　　१०१॥

भृगुः—

किन्नु तद्दैवतं ब्रह्म व्रतं वा नियमोऽपि वा ।
यत् कृत्वा च मुनिश्रेष्ठ नाकपृष्ठं लभेमहि ॥　　१०२॥

सर्वदा नैतदाश्चर्यं देवर्षे तव यन्मतम् ।
अस्माकमनुकम्पार्थं यत्त्वं वदसि धार्मिक ॥　　१०३॥

ततो वद हितं वाक्यं पापमेतत् प्रमार्जितम् ।
को वा स नियमो विप्र समाधेयो हि नः पुनः ॥　　१०४॥

---

* अ-क—एकोननवत्यधिकशततमोऽध्यायः

तदेते वै वयं सर्वे ऋषयो मुनिसत्तम ।
बद्धाञ्जलिपुटाः प्रह्वास् तपसा यो प्रसादने ? ॥ १०५॥

व्यासः—

तत्तु धर्मात्मनश्श्रुत्वा भृगोर्वाक्यं महायशाः ।
कृताञ्जलिपुटांस्तांश्च ऋषीन् दृष्ट्वा महामुनिः ॥ १०६॥

ततः प्रहस्य तद्वाक्यं नारदो मुनिसत्तमः ।
सर्वानेव समासीनान् इदं वचनमब्रवीत् ॥ १०७॥

नारदः—

हन्त वः कथयिष्यामि सर्व एव निबोधत ।
क्षमं चाप्यनुकूलं च स्वर्गाय च हिताय च ॥ १०८॥

[1]एष शैलवरे बालो मित्रावरुणसम्भवः ।
अगस्त्यो नाम धर्मात्मा भास्करे तप आस्थितः ॥ १०९॥

धैर्येण तपसा चैव धर्मेण च दमेन च ।
न तुल्यो विद्यते यस्य सर्वेषां भवतामपि ॥ ११०॥

तं बालमुग्रतपसं धर्मात्मानमनिन्दितम् ।
अभिगच्छत सन्त्यज्य ऋषयो मानमात्मनः ॥ १११॥

यदि मानं च मोहं च त्यक्त्वा दर्पं च केवलम् ।
अभिगच्छत तं बालं गमिष्यथ यथा पुरा ॥ ११२॥

1. अ-क—ततः प्रहस्य तद्वाक्यं नारदो मुनिसत्तमः । [अधिकः पाठः]

स ह्यर्क इव तेजस्वी भास्करे पर्वतोत्तमे ।
तपश्चरति लोकस्य स्वस्तिहेतोर्धृतं वचः ॥ ११३॥

न तुल्यस्तेजसा तस्य धर्मेण च दमेन च ।
उपतिष्ठत तं सर्वे वरदं मुनिपुङ्गवम् ॥ ११४॥

व्यासः—

ततस्तस्य वचश्श्रुत्वा नारदस्य महात्मनः ।
हृष्टेन मनसा सर्वे तस्य वाक्यमधिष्ठिताः ॥ ११५॥

नारदं ते तथेत्युक्त्वा सर्वे कृत्वा प्रदक्षिणम् ।
प्रसन्नमनसो वीर जग्मुस्ते भास्करं गिरिम् ॥ ११६॥

ते तं गिरिवरं पुण्यं सर्वकालफलद्रुमम् ।
अधिरुह्य यतात्मानस् सर्वतः प्रत्यलोकयन् ॥ ११७॥

स तु पर्वतराजस्य भास्करस्यांशुमानिव ।
उपर्युपरि धर्मात्मा चरत्युग्रं तपश्शुचिः ॥ ११८॥

तं दृष्ट्वा विस्मितास्सर्वे ऋषयश्शत्रुसूदन ।
तस्मान्नातर्कयंस्ते तद् यदुक्तं नारदेन वै ॥ ११९॥

ततस्त्वधिगतास्सर्वे तं बालमृषिसत्तमाः ।
अष्टाशीतिसहस्राणि प्रयतानि यतानि च ॥ १२०॥

सर्वेषां वचनात् तेषां भृगुस्तत्र यतव्रतः ।
अब्रवीत्तं महात्मानं दीप्यमानं स्वतेजसा ॥ १२१॥

भृगुः—

अगस्त्य श्रेष्ठ साधूनां नित्यं सुचरितव्रत ।
श्रोतुमर्हसि धर्मज्ञ वचो मुनिवरात्मज ॥ १२२॥

वयं दैवतदृष्टेन अहङ्कारेण लङ्घिताः ।
दममुत्सृज्य धर्मेण रागस्पृष्टा विमोहिताः ॥ १२३॥

भवत्प्रसादादिच्छामो गन्तुमिष्टां शुभां गतिम् ।
अहङ्कारादिदग्धानां सर्वेषां शरणं भव ॥ १२४॥

अष्टाशीतिसहस्राणि मोक्षयित्वा भवानिमान् ।
कल्मषादतिधर्मेण शश्वल्लोकानवाप्स्यसि ॥ १२५॥

दानेनानेन धर्मस्य महर्षे मुनिसत्तम ।
आत्मानं च पितॄंश्चैव जीवलोकं च तारय ॥ १२६॥

वयं त्वां प्रयतास्सर्वे स्वर्गहेतोरुपस्थिताः ।
अष्टाशीतिसहस्राणि तारयेमानि तेजसा ॥ १२७॥

वयं त्वभिगतास्सर्वे भवतस्स्वर्गकाङ्क्षिणः ।
आशया त्वत्सकाशाच्च काङ्क्षमाणाश्शिवं पदम् ॥ १२८॥

यथार्थं कुरु धर्मज्ञ ऋषीणामिह चागमम् ।
अर्हसे तेजसा तेन रक्षितुं शरणागतान् ॥* १२९॥

द्वैपायनः—

स तानृषिगणान् दृष्ट्वा अगस्त्यश्शरणागतान् ।

---

*अ-क—मोक्षधर्मे नवत्यधिकशततमोऽध्यायः

बद्धाञ्जलिपुटान् सर्वान् प्रहृष्टवदनोऽभवत् ॥ १३०॥

प्रत्यर्चयित्वा सर्वान् वै विनयेनोपगम्य तु ।
कृताञ्जलिरुवाचेदं सर्वान् स ऋषिसत्तमान् ॥ १३१॥

अगस्त्यः—

सुस्वागतं वो भवतु साधूनां सर्वशस्त्विह ।
स्वमाश्रमपदं तावद् ऋषीणां भावितात्मनाम् ॥ १३२॥

द्वैपायनः—

ततस्तेष्वर्हतः कृत्वा स चातिथिविधिं द्विजः ।
उपविश्य यथान्यायं प्रश्रयावनतस्स्थितः ॥ १३३॥

अगस्त्यस्तांस्ततस्सर्वान् कृताञ्जलिरभाषत ॥ १३४

अगस्त्यः—

नमो भगवतामस्तु सर्वेषामेव वस्समम् ।
पुत्रोऽहं भवतां साधु शिष्यो वा प्रणतोऽब्रुवम् ॥ १३५

का शक्तिर्मम बालस्य मुनेरकृतकर्मणः ।
भवतामभयं दातुं स्वर्गं प्रापयितुं तथा ॥ १३६

मुनेः कर्तव्यधर्मोऽयं केवलं किञ्चिदेव हि ।
नाम धर्म इति श्रुत्वा किञ्चिन्नियमवानहम् ॥ १३७

कुतो धर्मः कुतः पुण्यं कुतो दानं कुतो दमः ।
येन दद्यामहं धर्मं भवतां स्वर्गकाङ्क्षिणाम् ॥ १३८

प्रसीदत न मे रोषं यूयं वै कर्तुमर्हथ ।

सम्भावयामि नात्मानं येन दद्यामहोऽभयम् ॥ १३९

व्यासः—

तदेतद्वचनं श्रुत्वा मुनेस्तस्य महात्मनः ।
चक्रुस्ते गमने बुद्धिं तामेव वितमां तदा ॥ १४०

ततस्त्वगस्त्यस्सहसा तानुवाच धृतव्रतः ॥ १४०॥

अष्टाशीतिसहस्राणि ऋषीणां भावितात्मनाम् ।
शिरस्यञ्जलिना बालः प्रणम्य शिरसा ह्यपि ॥ १४१॥

इदं वचनमिष्टात्मा सर्वानेव तदाऽब्रवीत् ॥ १४२

अगस्त्यः—

न गन्तव्यमलं तावत् सर्वैर्ऋषिगणैरितः ।
दास्यामि यदि शक्ष्यामि स्वर्गीयं भवतां वचः ॥ १४३

गमिष्यथ यथापूर्वं यदि धर्मो भविष्यति ।
मूहूर्तं स्थीयतां तावद् यावत्तावदुपस्पृशे ॥ १४४

व्यासः—

स गत्वा वितमां पुण्याम् ऋषिस्त्वरितमात्मवान् ।
यथाविधिरुपस्पृश्य ततस्त्वभ्याजगाम ह ॥ १४५

ततः पूर्वां दिशं धीमान् अधिष्ठाय कृताञ्जलिः ।
हृष्टेन मनसोवाच स्थितो ह्यूर्ध्वमुदङ्मुखः ॥ १४६

अगस्त्यः—

यद्यस्ति सुकृतं किञ्चिद् देवता वा सुपूजिताः ।

अष्टाशीतिसहस्राणि यान्त्वेतानि यथा पुरा ॥ १४७
ध्रुवाय चास्तु सर्वेषां स्वर्गे स्थानं महात्मनाम् ।
मम सत्येन तपसा नियमेन दमेन च ॥ १४८

व्यासः—

एतस्य वचनस्यान्ते ततस्ते भरतर्षभ ।
अष्टाशीतिसहस्राणि मुनीनां पुण्यकर्मणाम् ॥ १४९
वचनं श्रूयते तत्र साधु साध्वित्यनन्तरम् ॥ १४९॥

ऋषयः—

साधु पुत्र सुपुत्रस्त्वं मित्रस्य वरुणस्य च ।
साधु सत्त्ववतां श्रेष्ठ साधु सत्यव्रतां वर ॥ १५०॥
साधु दानमिदं पुण्यं साधु ब्रह्मण्यता च ते ॥ १५१
त्वत्प्रसादाद्वयं सर्वे नाकपृष्ठमिदं क्षणात् ।
प्राप्तवन्तो यथापूर्वम् अहो दानं तवाक्षयम् ॥ १५२

व्यासः—

नेदुर्दुन्दुभयस्स्वर्गे अहो दानफलस्य वै ।
घुष्यते चाप्यहो दानं त्रिभिर्लोकैर्महामुनेः ॥ १५३
देवा महोरगा यक्षा गन्धर्वास्सिद्धचारणाः ।
अगस्त्यं पुरुषश्रेष्ठं पुष्पवर्षैरवाकिरन् ॥ १५४
गन्धर्वा गीतघोषेण विचित्रैर्वादितैस्तथा ।

अहो दानं घोषयन्तो अगस्त्यं पूजयन्ति वै ॥ १५५

ऊर्वशी मेनका रम्भा श्यामा काली तथैव च ।
रामा योजनगन्धा च गन्धकाली तथैव च ॥ १५६

वराप्सरसो नृत्यन्त अगस्त्यं पुरुषर्षभ ।
अहो दानं घोषयन्ति शतशश्चैव मानद ॥ १५७

मनोरमं सुसंहृष्टा देवगन्धर्वपन्नगाः ।
घोषयन्तो महानादम् अगस्त्ये मुदितास्तदा ॥ १५८

तिष्ठन्त्यभिगतास्स्वर्गे साधु साध्वित्यथोऽब्रुवन् ।
ध्रुवं ते चाप्यहो दानं तस्य लोकात्त्रयस्तदा ॥ १५९

दिव्यपुष्पधरा मेघास् सर्वतस्समुपस्थिताः ।
ववृषुः पुष्पवर्षाणि अगस्त्यस्याश्रमं प्रति ॥ १६०

एवं तदा महाराज अगस्त्ये साधु वादिनः ।
घुष्यते चाप्यहो दानं सर्वतो भरतर्षभ ॥* १६१

तस्मिन् दाने घुष्यमाणे ब्रह्मर्षेस्तस्य वै तदा ।
नारदः परमाश्चर्यम् अद्भुतं प्रतिवीक्ष्य तु ॥ १६२

स तस्माद्वितमातीराद् उत्थाय मुनिपुङ्गवः ।
हर्षेण महता युक्तो भास्करं गिरिमारुहत् ॥ १६३

सोऽधिरुह्य महाप्राज्ञः पश्यते बालकं मुनिम् ।

---

*क-अ—मोक्षधर्मे एकनवत्यधिकशततमोऽध्यायः

निर्विकारं तदाऽऽसीनं धैर्येण महताऽन्वितम् ॥ १६४

तं दृष्ट्वा नारदो बालम् अगस्त्यं मुनिसत्तमम् ।
देवर्षिर्वर्धयामास हर्षादमरसन्निभम् ॥ १६५

नारदः—

दिष्ट्या वर्धसि धर्मज्ञ ध्रुवाय मुनिसत्तम ।
भवता विजिता लोका हितकाम्य महामुने ॥ १६६

अष्टाशीतिसहस्राणि प्रापयित्वा नभस्तलम् ।
तदेतद्भवताऽवाप्तं महादानं महोदयम् ॥ १६७

नैतदिन्द्रादिभिर्देवैर् अवाप्तमृषिभिर्न च ।
यत्त्वयाऽद्य महाप्राज्ञ प्राप्तं बालेन केवलम् ॥ १६८

स्वर्गीयमेतद्धर्मज्ञ ध्रुवाय मुनिसत्तम ।
भवता विजिता लोकास् सर्वलोकहितैषिणा ॥ १६९

कर्तव्यो बहुलश्चैव त्वया धर्मो ह्यसंशयम् ।
भवानस्मिन् युगे पूर्वे ऋषिरेको गुणैस्स्मृतः ॥ १७०

भविष्यसि महाप्राज्ञ ध्रुवश्शाश्वत अव्ययः ॥ १७०॥

व्यासः—

तस्य तद्वचनं श्रुत्वा नारदस्य महात्मनः ।
अभिवाद्य यथान्यायम् इदं वचनमब्रवीत् ॥ १७१॥

अगस्त्यः—

भगवन् केवलं बाल्याद् अवाप्तं तपसा विभो ।

मयाऽद्य कथमप्युक्तं कृते तेषां महात्मनाम् ॥ १७२॥
ते गतास्सहसा सर्वे वचनान्मम नारद ।
नाकपृष्ठं महात्मानस् स हि धर्मस्समार्जितः ॥ १७३॥

व्यासः—

अगस्त्यवचनं श्रुत्वा नारदो भरतर्षभ ।
उवाच परमप्रीतस् तद्वाक्यमभिपूजयन् ॥ १७४॥

नारदः—

किं नाम बुध्यसे त्मानम् अगस्ते पूर्वनिर्जितान् ।
लोकांस्त्वया महाप्राज्ञ धर्मेण महता चिरम् ॥ १७५॥
भवानेको मुनिः पूर्वं वृषभो नाम नामतः ॥ १७६
यदा च वर्षकोटिं वै युगमासीन्महाव्रत ।
दिव्यसङ्कल्पकं नाम पूर्वकल्पे कृते युगे ॥ १७७
यदा द्वीपान् समुद्रांश्च पर्वतांश्च वनानि च ।
विष्णुस्सङ्कल्पयामास सहितः पद्मयोनिना ॥ १७८
तदाऽपि हि भवाञ्जातस् सलिलाद्धि स्वयं प्रभो ॥ १७८॥
पुष्कराच्च यथा ब्रह्मा यथा तोयाच्च पावकः ।
तथा त्वमपि धर्मज्ञ स्वयम्भूस्सलिलोद्भवः ॥ १७९॥
एवं हि कथयामास वरदः पद्मसम्भवः ।
तव सर्वं महाप्राज्ञ पूर्वजन्म तपोमयम् ॥ १८०॥

तन्न ते त्मा न संज्ञेयः पूर्वजन्म प्रबुध्यताम् ॥ १८१

अगस्त्यः—

यथा तथाऽस्तु भगवन् दिष्ट्या ते ऋषयो गताः ।
दिष्ट्या ते न वृथा सत्या भगवन् वागुदाहृता ॥ १८२

अहङ्कारकृतं मन्ये न च सत्यं ममान्यथा ।
न स्मराम्यनृतं तात कदाचिदपि भाषितम् ॥ १८३

व्यासः—

नारदस्तु वचस्तस्य प्रतिपूज्य महात्मनः ।
प्रदक्षिणं च तं कृत्वा वर्धयित्वा च भारत ॥ १८४

जगाम त्रिदिवं तात तदा देवर्षिभिर्वृतः ।
पूज्यमानो महाराज देवगन्धर्वचारणैः* ॥ १८५

व्यासः—

युधिष्ठिर महाप्राज्ञ श्रूयतां परमद्भुतम् ।
यच्छ्रुत्वा मनुजश्रेष्ठ नरो मुच्येत किल्बिषात् ॥ १८६

प्रयाणे चोपयाने च राज्ञां मङ्गल्यमिच्छताम् ।
स्त्रीणां प्रसवकाले च मङ्गल्यं भरतर्षभ ॥ १८७

अभिषेककाले राज्ञां च कुमाराणां च मङ्गलम् ।
निबोधस्वेदमाश्चर्यम् अनुभूतमगस्तिना ॥ १८८

* क-ध—मोक्षधर्मे द्विनवत्यधिकशततमोऽध्यायः

यत्ते श्रुत्वा नरश्रेष्ठ कल्मषं नाशमेष्यति ।
भविष्यति न दुस्स्वप्नः पापं न प्रभविष्यति ॥ १८९

नित्यं स्वस्तिकरं धन्यं पुत्रपौत्रे भविष्यति ।
भविष्यति महाराज जीवलोकस्य पावनम् ॥ १९०

तदिदं कथयिष्यामि कुन्तीपुत्र निबोध मे ।
पुरा द्वादशवर्षेण यदवाप्तमगास्तिना ॥ १९१

स कदाचिन्महाराज महात्मा कुम्भसम्भवः ।
उपवासस्य महतस् समाप्तौ नियतव्रतः ॥ १९२

उपविष्टश्शुचिस्स्नातस् समाधौ सुधृतव्रतः ॥ १९२॥

ततस्तु सहसा ह्येव उत्पपात महातपाः ।
स जगाम तदाऽकाशं वायुनेव समुद्धतः ॥ १९३॥

देवगन्धर्वचरितां गतिं सिद्धनिषेविताम् ।
स सिद्धचारणाकीर्णां विद्याधरनिषेविताम् ॥ १९४॥

प्राप्यान्तरिक्षं भगवान् किंस्वित् किमिति चाब्रवीत् ॥ १९५

स सप्तमपथं गत्वा पवनस्य महातपाः ।
पश्यते विमलास्सर्वा दिशो दश नृपोत्तम ॥ १९६

विमानानि च देवानां पर्वतांश्च वनानि च ।
महानुभावान् यक्षांश्च सर्वतः प्रविलोकयन् ॥ १९७

देवतानां निकेतानि दिव्यानि भवनानि च ।

गन्धर्वनगरं चैव तत्र तत्रान्ववैक्षत ॥ १९८
सप्तद्वीपवतीं रम्यां बहुपर्वतशोभिताम् ।
पट्टणागारकीर्णां च चतुस्सागरमण्डिताम् ॥ १९९
सोऽपश्यत महीं रम्याम् अगस्त्यो भरतर्षभ ।
दिव्येन चक्षुषा राजन् दैवतानि च भारत ॥ २००
ततस्त्वाकाशमाविश्य सप्तवायुपथां गतिम् ।
अगस्त्यो नीयते राजन् धर्मेण भरतर्षभ ॥ २०१
स पश्यति नभो दीप्तं ज्वालार्चिर्भिर्निरन्तरम् ।
धूमान्धकारसञ्छन्नं प्रदीप्तवनसन्निभम् ॥ २०२
तं दृष्ट्वा व्यथितश्चासीत् स तदा कुम्भसम्भवः ।
किमेतदिति चाविमृश् चक्रे संस्थामवस्थिताम् ॥ २०३
ततस्तु सहसाऽऽगत्य दैवतं पुरुषाकृति ।
तस्थौ वै पुरतस्तस्य अगस्त्यस्य कृताञ्जलिः ॥ २०४
स तु तं प्रश्रयादेव उपसङ्गम्य चाब्रवीत् ।
अगस्त्यः प्रयतो नित्यं शुचिना चैव चेतसा ॥ २०५

अगस्त्यः—

ब्राह्मणोऽस्मि महाभाग कथमप्यागतो नभः ।
ततः प्रदीप्तमालोक्य शङ्कितस्साधु कथ्यताम् ॥ २०६
सशरीरतया नेदं विदितं मे यथाविधम् ।
ततोऽस्मि व्यथितो देव तत् प्रसीद वदस्व मे ॥ २०७

द्वैपायनः—

एवं पृष्टं तदा राजन् मुनिना दैवतं तु तत् ।
सत्कृत्य वचनं तस्य ततो वचनमब्रवीत् ॥ २०८

देवः—

अवगच्छाम्यगस्त्य त्वाम् ऋषिं परमधार्मिकम् ।
सशरीरमनुप्राप्तम् अतोऽहं समुपस्थितः ॥ २०९

इदं खलु नभस्सर्वम् अग्निरेव धृतव्रत ।
ततो ज्योतिषमित्युक्तं कारणेन न संशयः ॥ २१०

ज्योतींष्येतास्तारका वै नक्षत्राणि ग्रहांस्तथा ।
नित्यं तापयते चापि सहस्रार्चिर्दिवाकरः ॥ २११

इदं तु दहनाकारं यत् पश्यसि धृतव्रत ।
स्वर्ग्यस्तत्र महातेजा दाहनं पावकस्य च ॥ २१२

तत्रार्चिष्मान् हुतवहो लोकत्रयचरो महान् ।
स्वयमग्निस्स्थितो विप्र अतो दीप्तमिदं नभः ॥ २१३

अत्रस्थमधिगच्छन्ति देवास्सर्षिगणास्तदा ।
अत्रस्थं वरदं देवं सर्वदेवनमस्कृतम् ॥ २१४

अधिगच्छति देवानां शान्त्यर्थं मधुसूदनः ।
अत्रस्थं दैवतैर्ब्रह्म जीवलोकश्च निर्मितः ॥ २१५

पर्वताश्च समुद्राश्च द्वीपाश्च सरितस्तथा ।
एतत्तत् प्रथमं स्थानम् अग्नेस्त्रैलोक्यपूजितम् ॥ २१६

प्रदीप्तं यत् त्वमालोक्य शङ्कितोऽभूर्द्विजोत्तम ।
तदेतन्निर्विशङ्कस्त्वं मुने प्रविश मा व्यथा ॥ २१७

नेदं धर्मात्मना दीप्तं नभः पवनशीतलम् ॥ २१७॥

व्यासः—

तस्य तद्वचनं श्रुत्वा दैवतस्य धृतव्रतः ।
सत्कृत्य तदसम्मोहाद् विवेश स मुनिर्नभः ॥ २१८॥

स पश्यमानस्तत्रस्थान् देवानृषिगणांस्तथा ।
जगाम दृश्यमानश्च पूज्यमानश्च तैरपि ॥ २१९॥

स तन्नभो महातेजा विवेश हिमशीतलम् ।
महर्षिर्दैवताकीर्णं पद्मैरिव जलाशयम् ॥ २२०॥

तत्रस्थानि विमानानि दैवतानां ददर्श च ।
सध्वजानि पताकाश्च सविमानान् सतोरणान् ॥ २२१॥

गन्धर्वांश्चैव धर्मात्मा प्रनृत्तांश्चाप्सरोगणान् ।
सोऽपश्यत महातेजास् तस्मिन् हौताशने हि खे ॥* २२२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
[अस्मिन्नध्याये २२२॥ श्लोकाः]

---

* अ-क—मोक्षधर्मे त्रिनवत्यधिकशततमोऽध्यायः

## ॥ सप्ताधिकत्रिशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति व्यासकृतशुकानुशासनानुवादः ॥

युधिष्ठिरः—

कथं निर्वेदमापन्नश्शुको वैयासकिः पुरा ।
एतदिच्छामि कौरव्य श्रोतुं कौतूहलं हि मे ॥ १

भीष्मः—

प्राकृतेन स्ववृत्तेन चरन्तमकुतोभयम् ।
अध्याप्य कृत्स्नं स्वाध्यायम् अन्वाशिक्षयत स्वयम् ॥ २

व्यासः—

धर्मं पुत्र निषेवस्व सुतीक्ष्णौ च हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ॥ ३

सत्यमार्जवमक्रोधम् अनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च विधिवत् परिपालय ॥ ४

सत्ये तिष्ठ रतो धर्मे [1]हित्वा सर्वमनार्जवम् ।
देवतातिथिशेषेण यात्रां प्राणस्य पालय ॥ ५

फेनपात्रोपमे देहे जीवे शकुनिवत् स्थिते ।
अनित्येऽप्रियसंवासे कथं स्वपिषि पुत्रक ॥ ६

---

1. ख—जित्वा ग—हित्वाऽधर्मेम

अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु ।
अन्तरं लिप्समानेषु बालस्त्वं नावबुध्यसे ॥ ७

गण्यमानेषु वर्षेषु क्षीयमाणे तथाऽऽयुषि ।
जीविते [1]लुप्यमाने च किमुत्थाय न धावसि ॥ ८

ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥ ९

धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषाम् अनुयाताऽपि पीड्यते ॥ १०

ये तु तुष्टास्सुनियतास् [2]सत्यागमपरायणाः ।
धर्म्यं पन्थानमारूढास् तानुपास्व च पृच्छ च ॥ ११

उपधार्य मतं तेषां वृद्धानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ १२

अद्यकालिकया बुद्ध्या दूरे श्व इति निश्चयात् ।
सर्वभक्षा न पश्यन्ति कर्मभूमिमचेतनाः ॥ १३

धर्मं निश्श्रेणिमास्थाय किञ्चित् किञ्चित् समारुह ।
कोशकारवदात्मानं वेष्टयन् नावबुध्यसे ॥ १४

---

1. ग—लिख्य

2. ख—परागमाः ; ग—सत्यार्जवपरायणाः

नास्तिकं भिन्नमर्यादं कूलघातमिव स्थितम् ।
वामतः कुरु विस्रब्धं [1]रथरेणुमिवोद्धतम् ॥ १५

[2]कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा [3]सर्वदुर्गाणि सन्तर ॥ १६

मृत्युनाऽभ्याहते लोके जरया परिवारिते ।
अमोघासु पतन्तीषु धर्मयानेन [4]सन्तर ॥ १७

तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा ।
निर्वृतिं लभसे कस्माद् यस्मात्त्वं मृत्युना सितः ॥ १८

सञ्चिन्वानकमेवैनं कामानामवितृप्तकम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १९

क्रमशस्सञ्चितशिखो धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्ये दीपो यत्नेन धार्यताम् ॥ २०

सम्पतन् देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस् तत् पुत्र परिपालय ॥ २१

ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्यानन्तसुखाय च ॥ २२

---

1. ग—खुररेणु
2. अ-क-ख-घ—कामं क्रोधं च मृत्युं च
3. ग—जम्भ
4. ख-ग-घ—सञ्चर

ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्
तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे च [1]सम्प्रयुक्तो
मोक्षार्थी कुशलपरस्सदा यतस्व ॥ २३

अव्यक्तप्रकृतिरयं कलाशरीरस्
सूक्ष्मात्मा क्षणत्रुटिकानिमेषरोमा ।
ऋत्वास्यस्समबलशुक्लकृष्णनेत्रो
मासाङ्गो द्रवति वयोहयो नराणाम् ॥ २४

तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं
गच्छन्तं सततमिहाप्यवेक्षमाणम् ।
चक्षुस्ते यदि न परप्रणेतृनेयं
धर्मे ते भवतु मनः परं निशाम्य ॥ २५

येऽमी तु प्रचलितधर्मकामवृत्ताः
क्रोशन्तस्सततमनिष्टसम्प्रयोगात् ।
क्लिश्यन्ते परिगतवेदनाशरीरा
बह्वीभिस्सुभृशमधर्मवागुराभिः ॥ २६

---

1. ग—नित्ययुक्तः क्षेमार्थी

[1]राजा धर्मपरस्सदा शुभगोप्ता
समीक्ष्य सुकृतिनां दधाति लोकान् ।
बहुधर्ममपि चरतः
प्रतिदिशति सुखमनपगतं निरवद्यम् ॥ २७

श्वानो भीषणका अयोमुखानि वयांसि
बलगृध्रकुररपक्षिणां च सङ्घाताः[2] ।
उपाधिभिरसुखकृत्स्नपरमनिरये
भृशमसुखमनुभवति दुष्कृतकर्मा ॥ २८

उष्णां वैतरणीं महानदी-
मवगाढोऽसिपत्रवनविपन्नगात्रः ।
परशुवनशयो निपतितो
वसति महानिरयेषु भृशार्तः ॥ २९

---

1. ग—राजा धर्मपरस्सदा शुभाशुभानि
गोप्ता ददाति सुकृतिनां समीक्ष्य लोकान् ।
बहुविधमपि चरतः
प्रतिदिशति सुखमपगतं निरवद्यम् ॥ [पाठान्तरम्]

2. ग—तदङ्करुधिरपा गुरुवचननुदमुचरतं विशसन्ति ।
मर्यादा नियता स्वायम्भुवा इमा भिनत्ति दशगुणमनोनुगत्वात् ।
निर्विशति भृशमसुखं पितृविषयविपिनमवगाह्य स पापम् ।
यो........प्रियानृतश्च मनुष्यस्सततनिकृतिवञ्चनारतिस्स्यात् ॥
[अधिकः पाठः]

महापदानि कत्थसे न चाप्यवेक्षसे परम्
चिरस्य मृत्युकारिताम् अथागतां न बुध्यसे ।
प्रयास्यतां किमास्यते समुत्थितं महद्भयम्
अतिप्रमाथि दारुणं सुखस्य संविधीयताम् ॥ ३०

पुरा मृतः प्रणीयसे यमस्य राजशासनात्
तवान्तिकाय दारुणैः प्रयत्नमार्जवे कुरु ।
पुरा समूलबन्धनं प्रभुर्हरत्यदुःखवत्
तवेह जीवितं यमो न चास्ति तस्य वारकः ॥ ३१

पुरा विवाति मारुतो यमस्य यः पुरस्सरः
पुरैक एव नीयसे कुरुष्व साम्परायिकम् ।
[1]पुरा स एक एव ते प्रयाति मारुतोऽन्तकः
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ॥ ३२

स्मृतिश्च सन्निरुध्यते पुरा तवैव पुत्रक
समाकुलस्य गच्छतस्समाधिमुत्तमं कुरु ।
शुभाशुभे कृताकृते प्रमादकर्मविप्लुते
स्मरन् पुराऽनुतप्यसे स्मरस्व केवलं निधिम् ॥ ३३

पुरा जरा कलेबरं विजर्झरीकरोति भो
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ।

---

1. ग—पुरा सहिक एवते प्रयाति

पुरा शरीरमन्तको भिनत्ति [1]रोगसायकैः
प्रसह्य जीवितक्षये तपो महत् समारभ ॥ ३४

पुरा वृका भयङ्करा मनुष्यदेहगोचरा
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ।
पुराऽन्धकारमेकतो न पश्यसि त्वरस्व वै
पुरा हिरण्मयान् नगान् न पश्यसेऽद्रिमूर्धतः ॥ ३५

पुराऽत्र सङ्गता हि ते सुहृन्मुखाश्च शत्रवो
विचारयन्ति दर्शनाद् वदस्व पुत्र यत्परम् ।
धनस्य यस्य राजतो भयं न चास्ति चोरतो
मृतश्च यन्न मुञ्चसे समार्जयस्व तद्धनम् ॥ ३६

[2]न तत्र संविभज्यते स्वकर्मभिः परस्परम्
यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ।
परत्र यन्न जीर्यते तदेव पुत्र चीयताम्
धनं यदक्षयं ध्रुवं समार्जयस्व तत् स्वयम् ॥ ३७

न यावदेव पच्यते महाजनस्य यावकम्
अपक्व एव यावके [3]मनो नियच्छ पुत्रक ।

---

1. अ-क-ख-घ—लोकसारथिः
2. अ-क-ख-घ—पादचतुष्टयं नास्ति
3. ग—पुरा प्रमीयसे त्वर

न मातृपुत्रबान्धवा न संस्कृतः प्रियो जनः
अनुव्रजन्ति सङ्कटे व्रजन्तमेकपातिनम् ॥ ३८

यदेव कर्म केवलं [1]पुराकृतं शुभाशुभम्
तदेव तस्य साक्षिकं भवत्यमुत्र गच्छतः ।
हिरण्यरत्नसञ्चयास्स्पृहावशेन सञ्चिता
न तस्य देहसङ्क्षये भवन्ति कार्यसाधकाः ॥ ३९

परत्र गामिकस्य ते कृताकृतस्य कर्मणो
न [2]साक्षिरात्मना समो नृणामिहास्ति कश्चन ।
मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः
प्रपश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वतः ॥ ४०

इहाग्निसूर्यवायवश्शरीरमाश्रितास्त्रयस्
त एव तस्य साक्षिणो भवन्ति धर्मदर्शनाः ।
[3]तथा निशेषु सर्वतस्स्पृशेषु सर्वचारिषु
प्रकाशगूढवृत्तिषु स्वधर्ममेकमाचर ॥ ४१

अनेकपारिपन्थिके विरूपरौद्ररक्षिते
स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति ।

---

1. ख-ग—स्वयंकृतं 2. ग—सारमात्मना
3. घ—यथावशेषु

न तत्र संविभज्यते स्वकर्मणा परस्परम्
यथा कृतं स्वकर्मजं तदेव भुज्यते फलम् ॥ ४२

यथाऽप्सरोगणैः फलं सुखं महर्षयस्सह
तथाऽऽप्नुवन्ति कर्मतो विबुद्धिमोहनं पुनः ।
यथेह यत् कृतं शुभं तथैव तैर्विपाप्मभिस्
तथाऽऽप्नुवन्ति मानवास्तथा विशुद्धयोनयः ॥ ४३

प्रजापतेस्सलोकतां बृहस्पतेश्शतक्रतोर्
व्रजन्ति ते परां गतिं गृहस्थकर्मसेतुभिः ।
सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे
[1]अबुद्धिमोहनं पुनर् भृगुर्विना न यावकः ॥ ४४

गता द्विरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः
कुरुष्व धर्मसञ्चयं वयो हि तेऽतिवर्तते ।
पुरा करोति सोऽन्तकः प्रमादगोमुखां चमूं
यथागृहीतमुत्थितस्त्वरस्व धर्मपालने ॥ ४५

यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि
तथा गतिं गमिष्यतः किमात्मना परेण वा
यदेकपातिनां सतां भवत्यमुत्र गच्छताम्
भयेषु साम्परायिकं निधत्स्व तं महानिधिम् ॥ ४६

1. ग—अबुद्धिमोहनात्पुनः प्रभुर्विना न याजकः । [पाठान्तरम्]

सतूलमूलबन्धनं प्रभुर्हरत्यसंशयम्
न सन्ति यत्र हारकाः कुरुष्व धर्मसंविधिम् ।
इदं निदर्शनं मया तवेह पुत्र सम्मतम्
स्वदर्शनानुमानतः प्रवर्णितं कुरुष्व तत् ॥ ४७

दधाति यस्स्वकर्मणा धनानि यस्य कस्यचित्
प्रबुद्धमोहजैर्गुणैश्शतैस्स एव युज्यते ।
श्रुतं स्वधर्ममश्नुते प्रकुर्वतश्शुभाः क्रियास्
तदेव तत्र दर्शनं कृतज्ञमर्थसंहितम् ॥ ४८

निबध्नती रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ४९

[1]किं ते धनेन किं बन्धुभिस्ते
किं ते पुत्रैः पुत्रक यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताश्च सर्वे ॥ ५०

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
को हि तद्वेद कस्याद्य मृत्युसेनाऽभिवीक्ष्यते ॥ ५१

अनुगम्य श्मशानान्ते निवर्तन्ते हि बान्धवाः ।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयस्सुहृदस्तथा ॥ ५२

---

1. ग—अर्धद्वयं नास्ति

नास्तिकान् निरनुक्रोशान् नरान् पापमतौ स्थितान् ।
वामतः कुरु विस्रम्भं परं प्रेप्सुरतन्द्रितः ॥ ५३

एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥ ५४

अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः ।
सम्यक् स्वधर्मं कृत्वेह परत्र सुखमश्नुते ॥ ५५

न देहभेदे मरणं विजानतां
न च प्रणाशस्त्वनुपालिते पथि ।
धर्मं हि यो वर्तयते स पण्डितो
य एव धर्माच्च्यवते स [1]हीयते ॥ ५६

प्रवृत्तयोः कर्मपथे स्वकर्मणोः
फलं प्रयोक्ता लभते यथाकृतम् ।
विहीनकर्मा नरकं प्रपद्यते
त्रिविष्टपं गच्छति धर्मपारगः ॥ ५७

सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।
अथात्मानं समादध्याद् भ्रश्यते न पुनर्यथा ॥ ५८

यस्य नोत्क्रामति मतिस् स्वर्गमार्गानुसारिणी ।
तमाहुः पुण्यकर्माणम् अशोच्यं मित्रबान्धवैः ॥ ५९

---

1. ग—मुह्यते

यस्य नोपहता बुद्धिर् निश्चयेष्ववलम्बते ।
स्वर्गे कृतावकाशस्य नास्ति तस्य महद्भयम् ॥ ६०
तपोवने च ये जातास् तत्रैव निधनं गताः ।
तेषामल्पतरो धर्मः कामभोगमजानताम् ॥ ६१
यस्तु भोगान् परित्यज्य शरीरेण तपश्चरेत् ।
न तेन किञ्चिदप्राप्तं तन्मे बहुफलं मतम् ॥ ६२
मातापितृसहस्राणि पुत्रदारशतानि च ।
अनागतान्यतीतानि कस्य ते कस्य वा वयम् ॥ ६३
[1]अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।
तं न पश्यामि यस्याहं न स पश्यति यो मम ॥ ६४
न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि यातानि भवांश्चैव गमिष्यति ॥ ६५
इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥ ६६
सञ्चिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
[2]ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥ ६७
पश्यत्यच्छिन्नभूतं हि जीवलोकं स्वकर्मणा ।
तत् कुरुष्व यथा पुत्र कृत्स्नं यत् समुदाहृतम् । ६८

1. अ-क-ख-घ—अर्धद्वयं नास्ति
2. अ-क-ख-घ—अर्धपञ्चकं नास्ति

तथैव तत् प्रपश्येत कर्मभूमिं प्रपश्यतः ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥ ६९

[1]मासर्तुसंज्ञापरिवर्तनेन
सूर्याग्निना रात्रिदिवेन्धनेन ।
स्व[2]कर्मनिष्ठाफलसाक्षिकेण
भूतानि कालः पचति प्रसह्य ॥ ७०

धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपून् न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो वशी ॥ ७१

भीष्मः—

इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुकोऽगात् सम्परित्यज्य पितरं मोक्षदर्शिकम् ॥ ७२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
[ अस्मिन्नध्याये ७२ श्लोकाः ]

---

1. ख-घ—नास्तीदमर्धम्
2. क-ख-घ—धर्म

## ॥ अष्टाधिकत्रिशततमोऽध्यायः ॥*

भीष्मेण युधिष्ठिरं प्रति सर्वथा धर्मस्य कर्तव्यताकथनम् ॥

युधिष्ठिरः—

यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च ।
गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।
स्वकर्म कलुषं कृत्वा क्लेशे महति लीयते ॥ २

दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्मिणः ॥ ३

उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनस्थाश्शुभकारिणः ॥ ४

व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ ५

प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवता मार्गम् आस्थिता हस्तदक्षिणाः ॥ ६

पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु ।

---

* ग-कोशे अयमध्यायो नास्ति

तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ ७
सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येन येन यथाकृतम् ॥ ८
पापं तिष्ठति तिष्ठन्तं धावन्तमनुधावति ।
करोति कुर्वतः कर्म च्छायेवानुविधीयते ॥ ९
येन येन यथा यद्यत् पुरा कर्म सुनिश्चितम् ।
तत्तदेव नरो भुङ्क्ते नियतं विहितात्मना ॥ १०
समानकर्मनिक्षेपविधानपरिरक्षणम् ।
भूतग्राममिमं कालस् समन्तादपकर्षति ॥ ११
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते [1]तथा कर्म पुराकृतम् ॥ १२
सम्मानश्चावमानश्च धनलाभक्षयव्ययाः ।
प्रवृत्ता न निवर्तन्ते निधनान्ताः पदे पदे ॥ १३
आत्मना विहितं दुःखम् आत्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भजते पौर्वदेहिकम् ॥ १४
बालो युवा च वृद्धश्च यत् करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां भुङ्क्ते जन्मनि जन्मनि ॥ १५
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।

1. ख—द्दृतश्चत्वारः पादा न सन्ति

तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १६

मलिनं हि यथा वस्त्रं पश्चाच्छुध्यति वारिणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ १७

दीर्घकालं हि तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां समृध्यन्ते मनोरथाः ॥ १८

शकुनानामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा पुण्यकृतां गतिः ॥ १९

अलमन्यैरुपालब्धैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

## ॥ नवाधिकत्रिशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति शुकोत्पत्तिप्रकारकथनारम्भः ॥ १ ॥ तथा पुत्रार्थं व्यासतपश्चर्याकथनम् ॥ २ ॥



युधिष्ठिरः—

कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः ।
सिद्धिं च परमां प्राप्तस् तन्मे ब्रूहि पितामह ॥ १

कस्यां चोत्पादयामास शुकं व्यासस्तपो[1]धनः ।
न ह्यस्य जननीं विद्मो जन्म चास्य महात्मनः ॥ २

कथं च बालस्य सतस् सूक्ष्मज्ञाने रता मतिः ।
यथा नान्यस्य लोकेऽस्मिन् द्वितीयस्येह कस्यचित् ॥ ३

एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
न हि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ॥ ४

माहात्म्यमात्मयोगं च तथा जन्म शुकस्य ह ।
यथावदानुपूर्व्येण तन्मे ब्रूहि पितामह ॥ ५

भीष्मः—

न हायनैर्न पलितैर् न वित्तैर्न च बन्धुभिः ।

1. ब—निधिः

[1]ऋषयश्चक्रिरे धर्मं योऽनूचानस्स नो महान् ॥ ६

तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव ।
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ॥ ७

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
सन्नियम्य तु तान्येव सिद्धिं प्राप्नोति मानवः ॥ ८

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
योगस्य कलया तात न तुल्यं विद्यते फलम् ॥ ९

अत्र ते वर्तयिष्यामि जन्मयोग[2]फलं तथा ।
शुकस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः ॥ १०

मेरुशृङ्गे किल पुरा कर्णिकारवनेषु वै ।
विजहार महादेवो [3]भीमैर्भूतगणैर्वृतः ॥ ११

शैलराजसुता चैव देवी तत्राभवत् पुरा ।
तत्र दिव्यं तपस्तेपे कृष्णद्वैपायनः प्रभुः ॥ १२

योगेनात्मानमाविश्य योगधर्मपरायणः ।
धारयन् स तपस्तेपे पुत्रार्थं कुरुसत्तम ॥ १३

अग्नेर्भूमेरपां वायोर् अन्तरिक्षस्य चाभिभो ।
वीर्येण सम्मितः पुत्रो मम भूयादिति स्म ह ॥ १४

---

1. घ—नास्तीदमर्धम् 2. ग—बलं
3. अ-क-ख-घ—भूमौ भूतगणैर्नृप

सङ्कल्पेनाथ मौनेन दुष्प्रापेणाकृतात्मभिः ।
वरयामास देवेशम् आस्थितस्तप उत्तमम् ॥ १५
अतिष्ठन्मारुताहारश् शतं किल समाः प्रभुः ।
आराधयन् महादेवं बहुरूपमुमापतिम् ॥ १६
तत्र ब्रह्मर्षयश्चैव सर्वे देवर्षयस्तथा ।
लोकपालाश्च लोकेशं साध्याश्च वसुभिस्सह ॥ १७
आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ ।
मारुतो मरुतश्चैव सागरा[1]स्सुरभिस्तथा ॥ १८
अश्विनौ देवगन्धर्वास् तथा नारदपर्वतौ ।
विश्वावसुश्च गन्धर्वस् सिद्धाश्चाप्सरसां गणाः ॥ १९
तत्र रुद्रो महादेवः कर्णिकारमयीं शुभाम् ।
धारयानस्स्रजं भाति ज्योत्स्नामिव निशाकरः ॥ २०
तस्मिन् दिव्ये मनोरम्ये देवदेवर्षिसङ्कुले ।
आस्थितः परमं योगम् ऋषिः पुत्रार्थमच्युतः ॥ २१
न चास्य हीयते [2]वक्त्रं न ग्लानिरुपजायते ।
त्रयाणामपि लोकानां तदद्भुतमिवाभवत् ॥ २२
जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः ।
प्रज्वलन्त्यस्स्म दृश्यन्ते युक्तस्यामिततेजसः ॥ २३

1. ग—स्सरित 2. ग—वर्णो

मार्कण्डेयो हि भगवान् एतदाख्यातवान् मम ।
स देवचरितानीह कथयामास मे तदा ॥ २४

एता अद्यापि कृष्णस्य तेजसा तेन दीपिताः ।
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ॥ २५

एवंविधेन तपसा तस्य भक्त्या च भारत ।
महेश्वरः प्रसन्नात्मा चकार [1]मनसा मतिम् ॥ २६

[2]ततस्तस्य महादेवो दर्शयामास साम्बिकः ।
उवाच चैनं भगवांस् त्र्यम्बकः प्रहसन्निव ॥ २७

महादेवः—

एवंविधस्ते तनयो द्वैपायन भविष्यति ॥ २७॥

यथा ह्यग्निर्यथा वायुर् यथा भूमिर्यथा जलम् ।
यथाऽऽकाशस्तथा शुद्धो भविष्यति सुतो महान् ॥ २८॥

तद्भावभाविता बुद्धिस् तदात्मा तदपाश्रयः ।
तेजसाऽऽवृत्य लोकांस्त्रीन् यशः प्राप्स्यसि केवलम् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

---

1. ग—मतिमान्मतिम्
2. ग—इदमर्धं नास्ति

## ॥ दशाधिकत्रिशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शुकोत्पत्तिप्रकारकथनम् ॥

भीष्मः—

स लब्ध्वा परमं देवाद् वरं सत्यवतीसुतः ।
अरणीं तु ततो गृह्य ममन्थाग्निचिकीर्षया ॥ १

अथ रूपं परं राजन् बिभ्रतीं स्वेन तेजसा ।
घृताचीं नामाप्सरसम् अपश्यद्भगवानृषिः ॥ २

ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः ।
अभवद्भगवान् व्यासो वने तस्मिन् युधिष्ठिर ॥ ३

सा च कृत्वा तदा व्यासं कामसंविग्नमानसम् ।
शुकी भूत्वा महाराज घृताची समुपागमत् ॥ ४

स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम् ।
शरीरजेनानुगतस् सर्वगात्रातिगेन ह ॥ ५

स तु धैर्येण महता अगृह्णाद्धृच्छयं मुनिः ।
न शशाक नियन्तुं तद् व्यासः प्रविसृतं मनः ॥ ६
भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः ॥ ६॥

यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत् ॥ ७॥

सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस् तस्यां जज्ञे शुको नृप ॥ ८॥
[1]निर्मथ्यमानेन च स शुको जज्ञे महातपाः ।
परमर्षिर्महायोगी अरणीगर्भसम्भवः ॥ ९॥
यथाऽध्वरे समिद्धोऽग्निर् भाति हव्यमुपात्तवान् ।
तथारूपश्शुको जज्ञे प्रज्वलन्निव तेजसा ॥ १०॥
बिभ्रत् पितुश्च कौरव्य रूपं वर्णमनुत्तमम् ।
बभौ तदा भावितात्मा विधूमोऽग्निरिवोत्थितः ॥ ११॥
तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ।
स्वरूपिणी तदाऽभ्येत्य स्नापयामास वारिणा ॥ १२॥
अन्तरिक्षाच्च कौरव्य दण्डः कृष्णाजिनं च ह ।
पपात भुवि राजेन्द्र शुकस्यार्थे महात्मनः ॥ १३॥
जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयश्चैव प्रावाद्यन्त सहस्रशः ॥ १४॥
विश्वावसुश्च गन्धर्वस् तथा नारदपर्वतौ ।
हाहा हूहूश्च गन्धर्वौ तुष्टुवुश्शुकसम्भवम् ॥ १५॥
ततश्शक्रपुरोगाश्च लोकपालास्समागताः ।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च ॥ १६॥

1. ग—शुके निर्मथ्यमाने स

दिव्यानि सर्वपुष्पाणि प्रववर्षात्र मारुतः ।
जङ्गमं स्थावरं चैव प्रहृष्टमभवज्जगत् ॥ १७॥

तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः ।
जातमात्रं मुनेः पुत्रं विधिनोपानयत् तदा ॥ १८॥

तस्य देवेश्वरश्शक्रो दिव्यमद्भुतदर्शनम् ।
ददौ कमण्डलुं प्रीत्या देववासांसि चाभि भो ॥ १९॥

हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ।
प्रदक्षिणं प्रकुर्वन्तश् शुकाश्चाषाश्च भारत ॥ २०॥

आरणेयस्तथा दिव्यं प्राप्य जन्म महाद्युतिः ।
तत्रैवोवास मेधावी ब्रह्मचारी समाहितः ॥ २१॥

उत्पन्नमात्रं तं वेदास् सरहस्यास्ससङ्ग्रहाः ।
उपतस्थुर्महाराज यथाऽस्य पितरं तथा ॥ २२॥

बृहस्पतिं तु वव्रे स वेदवेदाङ्गभाष्यवित् ।
उपाध्यायं महाराज धर्ममेवानुचिन्तयन् ॥ २३॥

सोऽधीत्य सकलान् वेदान् सरहस्यान् ससङ्ग्रहान् ।
इतिहासांश्च शास्त्राणि राजशास्त्राणि चाभि भो ॥ २४॥

गुरवे दक्षिणां दत्त्वा समावृत्तो महाद्युतिः ।
उग्रं तपस्समारेभे ब्रह्मचारी समाहितः ॥ २५॥

देवानां च ऋषीणां च बाल्येऽपि स महातपाः ।

सम्मन्त्रणीयो मान्यश्च ज्ञानेन तपसा तदा ॥ २६॥

न त्वस्य रमते बुद्धिर् आश्रमेषु नराधिप ।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

## ॥ एकादशाधिकत्रिशततमोऽध्यायः ॥

शुकेन व्यासाज्ञया तत्वजिज्ञासया मिथिलास्थं जनकं प्रत्यागमनम् ॥

---

भीष्मः—

स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् ।
प्राहाभिवाद्य च गुरुं श्रेयोर्थी विनयान्वितः ॥ १

शुकः—

मोक्षधर्मेषु कुशलो भगवान् प्रब्रवीतु मे ।
यथा मे मनसश्शान्तिः परमा सम्भवेत् प्रभो ॥ २

भीष्मः—

श्रुत्वा पुत्रस्य वचनं परमर्षिरुवाच तम् ॥ २॥

व्यासः—

अधीहि पुत्र मोक्षं वै धर्मांश्च विविधानपि ॥ ३

भीष्मः—

पितुर्नियोगाज्जग्राह शुको वेदविदां वरः ।
योगशास्त्रेण निखिलं कापिलं चैव भारत ॥ ४

स तं ब्राह्मया श्रिया युक्तं ब्रह्मतुल्यपराक्रमम् ।
मेने पुत्रं यदा व्यासो मोक्षविद्याविशारदम् ॥ ५

उवाच गच्छेति तदा जनकं मिथिलेश्वरम् ।
स ते वक्ष्यति मोक्षार्थं निखिलेन विशेषतः ॥ ६

पितुर्नियोगादगमन्मैथिलं जनकं नृपम् ।
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ॥ ७

उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मयः ।
न प्रभावेन गन्तव्यम् अन्तरिक्षचरेण वै ॥ ८

आर्जवेनैव गन्तव्यं न सुखान्वेषिणा पथा ।
नान्वेष्टव्या विशेषास्ते विशेषा हि प्रसङ्गिनः ॥ ९

अहङ्कारो न कर्तव्यो याज्येतस्मिन्नराधिपे ।
स्थातव्यं च वशे तस्य स ते छेत्स्यति संशयान् ॥ १०

स धर्मकुशलो राजा मोक्षधर्मविशारदः ।
याज्यो मम स यद्ब्रूयात् तत् कार्यमविशङ्कया ॥ ११

एवमुक्तस्स धर्मात्मा जगाम मिथिलां मुनिः ।
पद्भ्यां शक्तोऽन्तरिक्षेण क्रान्तुं भूमिं ससागराम् ॥ १२

स गिरींश्चाप्यतिक्रम्य नदीस्तीर्त्वा सरांसि च ।
बहुव्यालमृगाकीर्णा विविधाश्चौषधीस्तथा ॥ १३

मेरोर्गिरेश्च द्वे वर्षे वर्षं हैमवतस्य तम् ।
[1]क्रमेणैवमतिक्रम्य भारतं वर्षमासदत् ॥ १४

स देशान् विविधान् पश्यंस् चीनहूणनिषेवितान् ।
आर्यावर्तमिमं देशं जगाम स महामुनिः ॥ १५

पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन् ।
अध्वानं सोऽतिचक्राम [2]सञ्चरन् खे चरन्निव ॥ १६

पत्तनानि च रम्याणि स्थिराणि नगराणि च ।
रत्नानि च विचित्राणि शुकः पश्यन् न पश्यति ॥ १७

उद्यानानि च रम्याणि तथैवायतनानि च ।
पुण्यानि चैव तीर्थानि ततोऽत्यक्रामदध्वगः ॥ १८

सोऽचिरेणैव कालेन विदेहानाससाद ह ।
रक्षितान् धर्मराजेन जनकेन महात्मना ॥ १९

तत्र ग्रामान् बहून् पश्यन् बह्वन्नरसभोजनान् ।
पल्लीघोषान् समृद्धांश्च बहुगोकुलसङ्कुलान् ॥ २०

वृतांश्च शालियवकैर् हंससारससेवितान् ।

---

1. घ—क्रौञ्चस्यैवमतिक्रम्य
2. ग—खचरः खे चरन्निव

पद्मिनीभिश्च शतशश् श्रीमतीभिरलङ्कृतान् ॥ २१

सर्वान् देशानतिक्रम्य समृद्धजनसेवितान् ।
मिथिलोपवनं रम्यम् आससाद [1]समृद्धिमत् ॥ २२

हस्त्यश्वरथसङ्कीर्णं नरनारीसमाकुलम् ।
[2]पश्यन्नपश्यन्निव तत् समतिक्रामदच्युतः ॥ २३
आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह ॥ २३॥

तस्या द्वारं समासाद्य द्वारपालैर्निवारितः ।
स्थितो ध्यानपरो मुक्तो विदितः प्रविवेश ह ॥ २४॥

स राजमार्गमासाद्य समृद्धजनसङ्कुलम् ।
पार्थिवक्षयमासाद्य निश्शङ्कः प्रविवेश ह ॥ २५॥

तत्रापि द्वारपालास्तम् उग्रवाचा न्यषेधयन् ।
तथैव च शुकस्तत्र निर्मन्युस्समतिष्ठत ॥ २६॥

न चातपाध्वसन्तप्तः क्षुत्पिपासाश्रमान्वितः ।
प्रताम्यति ग्लायति वा नोपैति च यथा रुषम् ॥ २७॥

तेषां तु द्वारपालानाम् एकश्शोकसमन्वितः ।
मध्यंगतमिवादित्यं दृष्ट्वा शुकमवस्थितम् ॥ २८॥

पूजयित्वा यथान्यायम् अभिवाद्य कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां प्रथमां राजवेश्मनः ॥ २९॥

---

1. ग—महर्धिमत् 2. अ-क-ख-घ—अर्धपञ्चकं नास्ति

[1]तत्रासीनश्शुकस्तात मोक्षमेवानुचिन्तयन् ।
छायायामातपे चैव समदर्शी समद्युतिः ॥ ३०॥
तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत् ततः कक्ष्यां द्वितीयां राजवेश्मनः ॥ ३१॥
[2]तत्रान्तःपुरसम्बद्धं महच्चैत्ररथोपमम् ।
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपम् ॥ ३२॥
तं दर्शयित्वा स शुकं मन्त्री काननमुत्तमम् ।
अर्हमासनमादिश्य निश्चक्राम ततः पुनः ॥ ३३॥
तं चारुवेषास्सुश्रोण्यस् तरुण्यः प्रियदर्शनाः ।
सूक्ष्मरक्ताम्बरधरास् तप्तकाञ्चनभूषणाः ॥ ३४॥
सँल्लापालापकुशला नृत्तगीतविशारदाः ।
स्मितपूर्वाभिभाषिण्यो रूपेणाप्सरसां समाः ॥ ३५॥
कालोपचारकुशला भावज्ञास्सत्त्वकोविदाः ।
परं पञ्चशतं नार्यो वारमुख्यास्समाद्रवन् ॥ ३६॥
पाद्यादीनि प्रतिग्राह्य पूजया परयाऽस्य च ।
देशकालोपपन्नेन स्वाद्वन्नेनाप्यतर्पयन् ॥ ३७॥
तस्य भुक्तवतस्तात तदन्तःपुरकाननम् ।
सुरम्यं दर्शयामासुर् ऐकैकश्येन भारत ॥ ३८॥

1. अ-क—अर्धाष्टकं नास्ति 2. ख-घ—अर्धचतुष्टयं नास्ति

क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चैव तांश्शुकम् ।
उदारसत्त्वास्सत्त्वज्ञास् सर्वाः पर्यचरंस्तदा ॥ ३९॥

आरणेयस्तु शुद्धात्मा [1]निस्सन्देहस्स्वकर्मकृत् ।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ॥ ४०॥

तस्मै शय्यासनं दिव्यं वरार्हं रत्नभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं ददुस्ताः परमस्त्रियः ॥ ४१॥

पादशौचं तु कृत्वैव शुकस्सन्ध्यामुपास्य च ।
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ॥ ४२॥

पूर्वरात्रे तु तत्रासौ भूत्वा ध्यानपरायणः ।
मध्यरात्रे यथान्यायं निद्रामाहारयत् प्रभुः ॥ ४३॥

ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम् ।
स्त्रीभिः परिवृतो धीमान् ध्यानमेवान्वपद्यत ॥ ४४॥

अनेनविधिना ऽभीक्ष्णं तदहश्शेषमच्युत ।
तां च रात्रिं नृपकुले वर्तयामास भारत ॥ ४५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
[ अस्मिन्नध्याये ४५॥ श्लोकाः ]

---

1. क—त्रिसन्देहस्त्रिकर्मकृत् (निस्सन्देहस्स्वकर्मकृत्)
ग—त्रोसन्देहस्त्रिकर्मकृत् ख-घ—त्रिसन्देहस्त्रिकर्मकृत्

## ॥ द्वादशाधिकत्रिशततमोऽध्यायः ॥



जनकेन शुकं प्रति मोक्षसाधनीभूताश्रमधर्मकथनपूर्वकं शुकप्रशंसनम् ॥

भीष्मः—

ततस्स राजा जनको मन्त्रिभिस्सह भारत ।
पुरोहितं पुरस्कृत्य सर्वाण्यन्तःपुराणि च ॥ १

आसनं च पुरस्कृत्य रत्नानि विविधानि च ।
शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्ययात् ॥ २

स तदासनमादाय बहुरत्नविभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ॥ ३

पुरोधसा सङ्गृहीतं हस्तेनालभ्य पार्थिव ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ॥ ४

तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रतिपूज्य तु ।
पाद्यं निवेद्य प्रथमम् अर्घ्यं गां च न्यवेदयत् ॥ ५

स नाम मन्त्रवत् पूजां प्रत्यगृह्णाद्यथाविधि ॥ ५॥

प्रतिगृह्य तु तां पूजां जनकाद्द्विजसत्तमः ।
गां चैव समनुज्ञाय राजानमनुमान्य च ॥ ६॥

पर्यपृच्छन्महातेजा राज्ञः कुशलमव्ययम् ॥ ७

अनामयं च राजेन्द्र शुकस्सानुचरस्य ह ॥ ७॥

अनुज्ञातस्स तेनाथ निषसाद सहानुगः ।
उदारसत्त्वाभिजनो भूमौ राजा कृताञ्जलिः ॥ ८॥

कुशलं चाव्ययं चैव पृष्ट्वा वैयासकिं नृपः ।
किमागमनमित्येवं पर्यपृच्छत पार्थिवः ॥ ९॥

शुकः—

पित्राऽहमुक्तो भद्रं ते मोक्षधर्मार्थकोविदः ।
विदेहराजो याज्यो मे जनको नाम विश्रुतः ॥ १०॥

तत्र त्वं गच्छ वै तूर्णं यदि ते हृदि संशयः ।
प्रवृत्तौ वा निवृत्तौ वा स ते च्छेत्स्यति संशयम् ॥ ११॥

सोऽहं पितृनियोगात् त्वाम् उपप्रष्टुमिहागतः ।
तन्मे धर्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ॥ १२॥

किं कार्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः ।
कथं च मोक्षः कर्तव्यो ज्ञानेन तपसाऽपि वा ॥ १३॥

जनकः—

यत् कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ॥ १४

कृतोपनयनः पित्रा जपवेदपरायणः ।
तपसा गुरुवृत्त्या च ब्रह्मचर्येण चापि भो ॥ १५

देवतानामृषीणां चाप्यनृणोऽप्यनसूयकः ।

वेदानधीत्य नियतो दक्षिणामपवर्ज्य च ॥ १६
अभ्यनुज्ञामनुप्राप्य समावर्तेत वै द्विजः ॥ १६॥

समावृत्तश्च गार्हस्थ्ये सदारो नियतो वसेत् ।
अनसूयुर्यथान्यायम् आहिताग्निरनावृतः ॥ १७॥

उत्पाद्य पुत्रं पौत्रं तु [1]वन्याश्रमपदे वसेत् ।
[2]तानेवाग्नीन् यथाशास्त्रम् अर्चयन्नतिथिप्रियः ॥ १८॥

स वनेऽग्नीन् यथान्यायम् आत्मन्यारोप्य धर्मवित् ।
निर्द्वन्द्वो वीतरागात्मा ब्रह्माश्रमपदे वसेत् ॥ १९॥

शुकः—

उत्पन्ने ज्ञानविज्ञाने प्रत्यक्षे हृदि शाश्वते ।
किमवश्यं निवस्तव्यम् आश्रमेषु वनेषु च ॥ २०॥

एतद्भवन्तं पृच्छामि तद्भवान् वक्तुमर्हति ।
यथावेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ॥ २१॥

जनकः—

[3]न विना ज्ञानविज्ञानं मोक्षस्याधिगमो भवेत् ।
न विना गुरुसम्बन्धं ज्ञानस्याधिगमस्स्मृतः ॥ २२॥

आचार्यः [4]प्लाविता तस्य ज्ञानं प्लव इहोच्यते ।

---

1. ख-घ—पत्याश्रम  2. घ—अर्धत्रयं नास्ति
3. ख-घ—नापि ज्ञानान्तविज्ञानात्
4. ख-ग-घ—प्रापिता

विज्ञानकृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ॥ २३॥

अनुच्छेदाय लोकानाम् अनुच्छेदाय कर्मणाम् ।
पूर्वैराचरितो धर्मश् चातुराश्रम्यसंस्थितः ॥ २४॥

अनेन क्रमयोगेन बहुजातिषु कर्मणाम् ।
हित्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते ॥ २५॥

भावितैः करणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥ २६॥

तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ।
त्रिष्वाश्रमेषु कोन्वर्थो भवेत् परमभीप्सतः ॥ २७॥

राजसांस्तामसांश्चैव नित्यं दोषान् विवर्जयेत् ।
सात्त्विकं मार्गमास्थाय पश्येदात्मानमात्मना ॥ २८॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन्नोपलिप्येत जले वारिचरो यथा ॥ २९॥

पक्षीव प्रायणादूर्ध्वम् अमुत्रानन्त्यमश्नुते ।
विहाय देहं निर्मुक्तो निर्द्वन्द्वः प्रशमं गतः ॥ ३०॥

अत्र गाथाः पुरा गीताश् शृणु राज्ञा ययातिना ।
धार्यन्ते या द्विजैस्तात मोक्षशास्त्रविशारदैः ॥ ३१॥

ज्योतिरात्मनि नान्यत्र रमतेऽत्रैव चैव तत् ।

स्वयं च शक्यं [1]तं द्रष्टुं सुसमाहितचेतसा ॥ ३२॥

न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तु सः ॥ ३३॥

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ३४॥

[2]संयोज्य तपसाऽऽत्मानम् ईर्ष्यामुत्सृज्य मोहनीम् ।
त्यक्त्वा कामं च लोभं च ततो ब्रह्मत्वमश्नुते ॥ ३५॥

यदा श्राव्ये च दृश्ये च सर्वभूतेषु चाप्ययम् ।
समो भवति निर्द्वन्द्वो ब्रह्म सम्पद्यते तदा ॥ ३६॥

यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ।
काञ्चनं चायसं चैव सुखं दुःखं तथैव च ॥ ३७॥

शीतमुष्णं तथैवार्थम् अनर्थं प्रियमप्रियम् ।
जीवितं मरणं चैव ब्रह्म सम्पद्यते तदा ॥ ३८॥

प्रसार्येह यथाऽङ्गानि कूर्मस्संहरते पुनः ।
तथेन्द्रियाणि मनसा नियन्तव्यानि भिक्षुणा ॥ ३९॥

तमःपरिगतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ ४०॥

---

1. ख—यं ग—पद्रष्टुं
2. अ-क-ख-घ—अर्धचतुष्टयं नास्ति

एतत् सर्वं च पश्यामि त्वयि बुद्धिमतां वर ।
यच्चान्यदपि [1]बोद्धव्यं तत्त्वतो वेद तद्भवान् ॥ ४१॥
ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः ॥ ४२
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ।
तस्यैव च प्रसादेन प्रादुर्भूतं महामुने ॥ ४३
ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ॥ ४३॥
अधिकं [2]तव विज्ञानम् अधिका च गतिस्तव ।
अधिकं च तवैश्वर्यं त्वं तु तन्नावबुध्यसे ॥ ४४॥
बाल्याद्वा संशयाद्वाऽपि भयाद्वाऽप्यविमोक्षजात् ।
उत्पन्ने चापि विज्ञाने नाधिगच्छसि तां गतिम् ॥ ४५॥
व्यवसायेन शुद्धेन त्वद्विधश्छिन्नसंशयः ।
विमुच्य हृदयग्रन्थीन् आसादयति तां गतिम् ॥ ४६॥
भवांश्चोत्पन्नविज्ञानस् स्थिरबुद्धिरलोलुपः ।
व्यवसायादृते ब्रह्मन्नासादयति तत् परम् ॥ ४७॥
नास्ति ते सुखदुःखेषु विशेषो नासि लोलुपः ।
नौत्सुक्यं नृत्तगीतेषु न राग उपजायते ॥ ४८॥
[3]न बन्धुषु निबन्धस्ते न भयेष्वस्ति ते भयम् ।

---

1. ख-ग-घ—नोक्तं मे 2. ख-ग-घ—भवति ज्ञानं
3. घ—अर्धचतुष्टयं नास्ति

पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ॥ ४९॥

अहं च त्वाऽनुपश्यामि ये चाप्यन्ये मनीषिणः ।
आस्थितं परमं मार्गम् अक्षयं तमनामयम् ॥ ५०॥

यत् फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः ।
तस्मिन् प्रवर्तसे ब्रह्मन् किमन्यत् परिपृच्छसि ॥ ५१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुष्षष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
[ अस्मिन्नध्याये ५१॥ श्लोकाः ]

---

## ॥ त्रयोदशाधिकत्रिशततमोऽध्यायः ॥



जनकाभ्यनुज्ञातेन शुकेन व्यासमेत्य स्वस्य जनकेन सह संवादप्रकार-कथनम् ॥ १ ॥ व्यासस्य वैशम्पायनादिभिः सह संवादः ॥ २ ॥

---

भीष्मः—

एतच्छ्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः ।
आत्मनाऽऽत्मानमास्थाय दृष्ट्वा चात्मानमात्मना ॥ १

कृतकार्यस्सुखी [1]दान्तस् तूष्णीं प्रायादुदङ्मुखः ।
शैशिरं गिरिमुद्दिश्य सधर्मा मातरिश्वनः ॥ २

---

1. ख-ग-घ—शान्तः

[1]एतस्मिन्नेव काले तु देवर्षिर्नारदस्तदा ।
हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम् ॥ ३
[2]गन्धर्वैस्तु समाकीर्णं गीतस्वनविनादितम् ।
किन्नराणां [3]सहस्रैश्च भृङ्गराजैस्तथैव च ॥ ४
मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः ।
[4]चित्रवर्णैर्मयूरैश्च केकाशतविराविभिः ॥ ५
राजहंससमूहैश्च हृष्टैः परभृतैस्तथा ॥ ५॥
[5]पक्षिराजो गरुत्मांश्च यं नित्यमधिगच्छति ।
चत्वारो लोकपालाश्च देवास्सर्षिगणास्तथा ॥ ६॥
यत्र नित्यं समायान्ति लोकस्य हितकाम्यया ॥ ७
विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना ।
यत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः ॥ ८
शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमत्य वै ॥ ८॥
यत्रोवाच जगत् स्कन्दः क्षिपन् वाक्यमिदं तदा ॥ ९
योऽन्योऽस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः ॥ ९॥
यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्यवान् ॥ १०

1. ख-घ—अर्धद्वयं नास्ति
2. ख-घ—तमप्सरोगणसङ्कीर्णं ग—तमप्सरोगणाकीर्णं गीतस्वरमिना
3. क-ख-ग-घ—समूहैश्च
4. ख-ग-घ—नास्तीदमर्धम्
5. ख-घ—अर्धचतुष्टयं नास्ति

सोऽभ्युद्धरत्विमां शक्तिम् अथवा कम्पयत्विति ॥ १०॥
तच्छ्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति ॥ ११
अथ देवगणं सर्वं सम्भ्रान्तेन्द्रियमानसम् ।
अपश्यद्भगवान् विष्णुः क्षिप्तं सासुरराक्षसम् ॥ १२
किन्वत्र सुकृतं कार्यं भवेदिति विचिन्तयन् ॥ १२॥
स नामृष्यत तं क्षेपम् अवैक्षत च पावकिम् ॥ १३
स प्रसह्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा ।
कम्पयामास सव्येन पाणिना पुरुषोत्तमः ॥ १४
शक्त्यां तु कम्प्यमानायां विष्णुना [1]प्रभविष्णुना ।
मेदिनी कम्पिता सर्वा सशैलवनकानना ॥ १५
शक्तेनापि समुद्धर्तुं कम्पिता सा न तद्धृता ।
रक्षिता स्कन्दराजस्य धर्षणा प्रभविष्णुना ॥ १६
तां कम्पयित्वा भगवान् [2]विष्णुः प्रह्लादमब्रवीत् ॥ १६॥

श्रीभगवान्—

पश्य वीर्यं कुमारस्य नैतदन्यः करिष्यति ॥ १७

भीष्मः—

सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः ।
जग्राह तां तदा शक्तिं न चैनामप्यकम्पयत् ॥ १८

---

1. ख-घ-ग—बलिना तदा
2. ख-ग—प्रह्लादमिदमब्रवीत्

नादं महान्तं मुक्त्वा स मूर्च्छितो गिरिमूर्धनि ।
विह्वलः प्रापत[1]द्वीरो हिरण्यकशिपोस्सुतः ॥ १९

यत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः ।
तपोऽतप्यत दुर्धर्षे तात नित्यं वृषध्वजः ॥ २०
पावकेन [2]परिक्षिप्तो दीप्यते तस्य चाश्रमः ॥ २०॥

आदित्यबन्धनं नाम [3]दुष्प्रापमकृतात्मभिः ।
न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः ॥ २१॥

दशयोजनविस्तारम् अग्निज्वालसमावृतम् ।
भगवान् पावकस्तत्र स्वयं तिष्ठति वीर्यवान् ॥ २२॥

[4]सर्वान् विघ्नान् प्रशमयन् महादेवस्य धीमतः ।
[5]दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः ॥ २३॥

देवान् सन्तापयंस्तत्र महादेवो धृतव्रतः ।
ऐन्द्रीं तु दिशमास्थाय शैलराजस्य मूर्धनि ॥ २४॥

विविक्ते पर्वततटे पाराशर्यो महातपाः ।
वेदानध्यापयामास व्यासश्शिष्यान् महामुनिः ॥ २५॥

---

1. ख-घ-ग—द् भूमौ
2. ख-घ—परिक्षिप्तं दिव्यकायस्य चाश्रमम्
   ग—परिक्षिप्तं दीप्यता तस्य चाश्रमम्
3. ख-घ-ग—दुर्धर्षं
4. घ—अर्धंद्वयं नास्ति
5. ख—अर्धद्वयं नास्ति

सुमन्तुं च महाभागं वैशम्पायनमेव च ।
जैमिनिं च महाप्राज्ञं पैलं [1]चैव तपस्विनम् ॥ २६॥
एभिश्शिष्यैः परिवृतो व्यास आस्ते महातपाः ।
तत्राश्रमपदं पुण्यं ददर्श पितुरुत्तमम् ॥ २७॥
आरणेयो विशुद्धात्मा नभसीव दिवाकरः ॥ २८
अथ व्यासः परिक्षिप्तं ज्वलन्तमिव तेजसा ।
ददृशे सुतमायान्तं दिवाकरसमप्रभम् ॥ २९
असज्जमानं वृक्षेषु शैलेषु विषमेषु च ।
योगयुक्तं महात्मानं यथा बाणं गुणच्युतम् ॥ ३०
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः ।
यथोपजोषं तैश्चापि समागच्छन्महामुनिः ॥ ३१
ततो निवेदयामास पित्रे सर्वमशेषतः ।
शुको जनकराजेन संवादं प्रीतमानसः ॥ ३२
एवमध्यापयञ् शिष्यान् व्यासः पुत्रं च वीर्यवान् ।
उवास हिमवत्पृष्ठे पाराशर्यो महामुनिः ॥ ३३
ततः कदाचिच्छिष्यास्तं परिवार्योपतस्थिरे ।
वेदाध्ययनसम्पन्नाश् शान्तात्मानो जितेन्द्रियाः ॥ ३४
वेदेषु निष्ठां सम्प्राप्य साङ्गेष्वपि तपस्विनः ।

---

1. ख-च—चामिततेजसम् ग—चातितपस्विनम्

अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम् ॥ ३५

शिष्याः—

महता श्रेयसा युक्ता यशसा च समन्विताः ।
एकं त्विदानीमिच्छामो गुरुणाऽनुग्रहं कृतम् ॥ ३६

भीष्मः—

इति तेषां वचश्श्रुत्वा ब्रह्मर्षिस्तानुवाच ह ।
उच्यतामिति तद्वत्सा यद्वः कार्यं प्रियं मया ॥ ३७

एतद्वाक्यं गुरोश्श्रुत्वा शिष्यास्ते हृष्टमानसाः ।
पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ॥ ३८
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम् ॥ ३८॥

शिष्याः—

यदि प्रीत उपाध्यायो धन्याःस्म मुनिसत्तम ॥ ३९

काङ्क्षामस्तु वयं सर्वे वरं दत्तं महर्षिणा ।
षष्ठश्शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः ॥ ४०

चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः ।
इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ॥ ४१

भीष्मः—

शिष्याणां वचनं श्रुत्वा [1]महर्षिप्रवरस्तदा ।
पराशरात्मजो धीमान् परलोकार्थचिन्तकः ॥ ४२

1. अ-क—व्यासो वचनमब्रवीत्

उवाच शिष्यान् धर्मात्मा धर्म्यं नैश्श्रेयसं वचः ॥ ४२॥

व्यासः—

ब्राह्मणाय सदा देयं ब्रह्म शुश्रूषवे भवेत् ।
ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षते ॥ ४३॥
भवन्तो बहुलास्सन्तु वेदो [1]विस्तार्यतामयम् ॥ ४४

नाशिष्ये सम्प्रदातव्यो नाव्रते नाकृतात्मनि ।
एते शिष्यगुणास्सर्वे विज्ञातव्या यथार्थतः ॥ ४५

नापरीक्षितचारित्रे विद्या देया कथञ्चन ॥ ४५॥

यथा हि कनकं शुद्धं तापच्छेदनिघर्षणैः ।
परीक्षेत तथा शिष्यान् ईक्षेत् कुलगुणादिभिः ॥ ४६॥

न नियोज्याश्च वश्शिष्या अनियोज्ये महाभये ।
यथामति यथातत्त्वं तथा विद्या फलिष्यति ॥ ४७॥

[2]सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।
श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ॥ ४८॥

वेदस्याध्ययनं हीदं देवकार्यं महत् स्मृतम् ।
स्तुत्यर्थमिह देवानां वेदास्सृष्टास्स्वयम्भुवा ॥ ४९॥

यो विनिन्देच्च सम्मोहाद् ब्राह्मणं वेदपारगम् ।
सोऽवज्ञानाद्ब्राह्मणस्य पराभूयादसंशयम् ॥ ५०॥

---

1. ख-ग—विस्तीर्यतां     2. अ-क—नास्त्यर्धद्वयम्

यश्चाधर्मेण विब्रूयाद् यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाऽधिगच्छति ॥ ५१॥

एतद्वस्सर्वमाख्यातं स्वाध्यायस्य विधिं प्रति ।
उपकुर्याञ्च शिष्याणाम् एतञ्च हृदि वो भवेत् ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
[ अस्मिन्नध्याये ५२॥ श्लोकाः ]

---

## ॥ चतुर्दशाधिकत्रिशततमोऽध्यायः ॥



वैशम्पायनादिशिष्यप्रवासेन विमनसं व्यासं प्रति नारदस्यागमनम् ॥

---

भीष्मः—

एतच्छ्रुत्वा गुरोर्वाक्यं व्यासशिष्या महौजसः ।
अन्योन्यं हृष्टमनसः [1]परिषस्वजिरे तदा ॥ १

शिष्याः—

उक्तास्स्मो यद्भगवता तदात्वायतिसंहितम् ।
तन्नो मनसि संरूढं करिष्यामस्तथा वयम् ॥ २

---

1. ख–ग—इतोऽष्टौ पादा न सन्ति

भीष्मः—

अन्योन्यं च समाभाष्य एवं सुप्रीतमानसाः ।
विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः ॥ ३

शिष्याः—

शैलादस्मान्महीं गन्तुं काङ्क्षितं नो महामुने ।
वेदाननेकधा कर्तुं यदि ते रुचितं प्रभो ॥ ४

भीष्मः—

शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः ।
प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम् ॥ ५

व्यासः—

क्षितिर्वा देवलोको वा गम्यतां यदि रोचते ।
अप्रमादश्च वः कार्यो ब्रह्म हि प्रचुरच्छलम् ॥ ६

भीष्मः—

तेऽनुज्ञातास्ततस्सर्वे गुरुणा सत्यवादिना ।
जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्ध्ना प्रणम्य च ॥ ७

अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन् ।
संयाजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा ॥ ८

पूज्यमाना द्विजैर्नित्यं मोदमाना गृहे रताः ।
याजनाध्यापनरताश् श्रीमन्तो लोक[1]पूजिताः ॥ ९

---

1. ख-ग-घ—विश्रुताः

अवतीर्णेषु शिष्येषु व्यासः पुत्रसहायवान् ।
तूष्णीं ध्यानपरो धीमान् एकान्ते समुपाविशत् ॥ १०

[1]एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा ।
हिमवन्तमगाद्द्रष्टुं सिद्धचारणसेवितम् ॥ ११

तं ददर्शाश्रमपदे नारदस्सुमहातपाः ।
अथैनमब्रवीत् काले मधुराक्षरया गिरा ॥ १२

नारदः—

भोभो महर्षे वासिष्ठ ब्रह्मघोषो न वर्तते ।
एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव ॥ १३

ब्रह्मघोषैर्विरहितः पर्वतोऽयं न शोभते ।
रजसा तमसा चैव सोमस्सोपप्लुवो यथा ॥ १४

न भ्राजते यथापूर्वं निषादानामिवालयः ।
देवर्षिगणजुष्टोऽपि वेदध्वनिविनाकृतः ॥ १५

ऋषयश्च हि देवाश्च गन्धर्वाश्च महौजसः ।
विमुक्ता ब्रह्मघोषेण न भ्राजन्ते यथापुरम् ॥ १६

भीष्मः—

नारदस्य वचश्श्रुत्वा कृष्णद्वैपायनोऽब्रवीत् ॥ १६॥

व्यासः—

महर्षे यत् त्वया प्रोक्तं वेदवादविचक्षण ।

1. अ-क—अर्धद्वयं नास्ति

एतन्मनोऽनुकूलं मे भवानर्हति भाषितुम् ॥ १७॥
सर्वज्ञस्सर्वदर्शी च सर्वत्र च कुतूहली ॥ १८

त्रिषु लोकेषु यद्वृत्तं सर्वं तव मतौ स्थितम् ।
तदाज्ञापय विप्रर्षे ब्रूहि किं करवाणि ते ॥ १९

यन्मया समनुष्ठेयं ब्रह्मर्षे तदुदाहर ।
वियुक्तस्य हि शिष्यैर्मे नास्ति हृष्टमिदं मनः ॥ २०

नारदः—

अनाम्नायमला वेदा ब्राह्मण[1]स्याव्रतं मलम् ।
मलं पृथिव्या बाह्लीकास् स्त्रीणां कौतूहलं मलम् ॥ २१

अधीयतां भवान् वेदान् सार्धं पुत्रेण धीमता ।
विधून्वन् ब्रह्मघोषेण रक्षोभयकृतं तमः ॥ २२

भीष्मः—

नारदस्य वचश्श्रुत्वा व्यासः परमधर्मवित् ।
तथेत्युवाच संहृष्टो वेदाभ्यासे धृतव्रतः ॥ २३

शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत् ।
स्वरेणोच्चैस्स शैक्षेण लोकानापूरयन्निव ॥ २४

तयोरभ्यसतोरेव नानाधर्मप्रवादिनोः ।
वातोऽतिमात्रं प्रववौ समुद्रानिलवेगितः ॥ २५

1. ख-ब—स्य तमो

ततोऽनध्याय इति तं व्यासः पुत्रमवारयत् ॥ २५॥

शुको वारितमात्रस्तु कौतूहलसमन्वितः ।
अपृच्छत् पितरं [1]ब्रह्मन् कुतो वायुरभूदयम् ॥ २६॥
आख्यातुमर्हति भवान् वायोस्सर्वं विचेष्टितम् ॥* २७

शुकस्यैतद्वचश्श्रुत्वा व्यासः परमधर्मवित् ।
अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत् ॥ २८

व्यासः—

दिव्यं ते चक्षुरुत्पन्नं स्वस्थं ते [2]निश्चलं मनः ।
तमसा रजसा चासि मुक्तस्सत्त्वे व्यवस्थितः ॥ २९

आदर्शे स्वामिव च्छायां पश्यस्यात्मानमात्मना ।
न्यस्यात्मनि स्वयं चेतो बुद्ध्या समनुचिन्तय ॥ ३०

देवयानंचरो विष्णुः पितृयानचरो रविः ।
द्वावेतौ प्रेत्य पन्थानौ दिवं चाधश्च गच्छतः ॥ ३१

[3]पृथिव्यामन्तरिक्षे च यत्र संवान्ति वायवः ।
सप्तैते वायुमार्गा वै तान् निबोधानुपूर्वशः ॥ ३२

तत्र देवगणास्साध्यास् सम्बभूवुर्महाबलाः ॥ ३२॥

---

1. ख-घ-ग—ब्रह्म
*ख-ग-घ—अत्राध्यायसमाप्तिर्दृश्यते
2. क—निर्मलं 3. ख-घ—अर्धद्वयं नास्ति

तेषामप्यभवत् पुत्रस् समानो नाम दुर्जयः ॥ ३३
उदानस्तस्य पुत्रोऽभूद् व्यानस्तस्याभवत् सुतः ।
अपानस्तु ततो ज्ञेयः प्राणश्चासीत् ततः परम् ॥ ३४

अनपत्योऽभवत् प्राणो दुर्धर्षश्शत्रुमर्दनः ।
[1]पृथक्कर्माणि तेषां तु प्रवक्ष्यामि यथातथम् ॥ ३५

प्राणिनां सर्वतो वायुश् चेष्टां वर्तयते पृथक् ।
प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते ॥ ३६

[2]प्रेरयत्यभ्रसङ्घातान् धूमजानूष्मजांश्च यः ।
प्रथमः प्रथमे मार्गे [3]प्रवहो नाम सोऽनिलः ॥ ३७

अम्बरे स्नेहमभ्रेभ्यस् तडिद्भ्यश्चोत्तमद्युतिः ।
[4]आवहो नाम संवाति द्वितीयश्च स नो महान् ॥ ३८

उदयं ज्योतिषां शश्वत् सोमादीनां करोति यः ।
अन्तर्देहेषु चोदानं यं वदन्ति महर्षयः ॥ ३९

यश्चतुर्भ्यस्समुद्रेभ्यो वायुर्धारयते जलम् ।

---

1. ख-घ—नास्तीदमर्धम्
2. ख—पृथिव्यामन्तरिक्षे च यत्र संयाति सायकः ।
स्वतते वायुमार्गा वै तान्निबोधानुपूर्वशः ॥
प्रवीरकर्माणि तेषां प्रवक्ष्यामि यथातथम् ।　[अधिकः पाठः]
3. ग—आवहो नाम सोऽ-
4. ख-घ-ग—प्रवहो×सतोयदः

उद्धृत्य ददते चापो जीमूतेभ्योऽम्बरेऽनिलः ॥ ४०
योऽद्भिस्सम्पूर्य जीमूतान् पर्जन्याय प्रयच्छति ।
उद्वहो नाम वर्षिष्ठस् तृतीयस्स सदागतिः ॥ ४१

समुह्यमाना बहुधा येऽनिलाश्च पृथग्घनाः ।
वर्षमोक्षकरारम्भास् ते भवन्ति घनाघनाः ॥ ४२

संहता येन चाविद्धा भवन्ति नदनान्तराः ।
रक्षणार्थाय भूतानां मेघत्वमुपयान्ति च ॥ ४३

योऽसौ वहति देवानां विमानानि विहायसा ।
चतुर्थस्संवहो नाम वायुस्स गिरिमर्दनः ॥ ४४

येन वेगवता तूर्णं रूक्षेणारुजता रसान् ।
वायुना विहता मेघा न भवन्ति बलाहकाः ॥ ४५

दारुणोत्पातसञ्चारो नभसस्स्तनयित्नुमान् ।
पञ्चमस्स महावेगो विवहो नाम मारुतः ॥ ४६

यस्मिन् पारिप्लवा दिव्या भवन्त्यापो विहायसा ।
पुण्यं चाकाशगङ्गायास् तोयं विष्टभ्य तिष्ठति ॥ ४७

दूरात् प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः ।
यो निरंशुस्सहस्रस्य येन याति वसुन्धराम् ॥ ४८

यस्मादाप्यायते सोमो योनिर्दिव्योऽमृतस्य यः ।

षष्ठः परिवहो नाम स वायुर्जीविनां वरः ॥ ४९

सर्वप्राणभृतां प्राणान् योऽन्तकाले नियच्छति ।
यस्य वर्त्मानुवर्तेते मृत्युवैवस्वतावुभौ ॥ ५०

सम्यगन्वीक्षतां बुद्ध्या शान्तयाऽध्यात्मनित्यया ।
ध्यानाभ्यासाभिरामाणां योऽमृतत्वाय कल्पते ॥ ५१

यं समासाद्य वेगेन दिशामन्तं प्रपेदिरे ।
दक्षस्य दशपुत्राणां सहस्राणि प्रजापतेः ॥ ५२

येन सृष्टः पराभूतो यात्येव न निवर्तते ।
परावहो नाम परो वायुस्स दुरतिक्रमः ॥ ५३

एवमेते दितेः पुत्रा मारुताः परमाद्भुताः ।
अनारमन्तस्संवान्ति सर्वगास्सर्वधारिणः ॥ ५४

एतत्तु महदाश्चर्यं यदयं पर्वतोत्तमः ।
कम्पितस्सहसा तेन वायुनाऽभिप्रवायता ॥ ५५

विष्णोर्निश्श्वासवातोऽयं यदा वेगसमीरितः ।
स यदोदीर्यते तात जगत् प्रव्यथते तदा ॥ ५६

तस्माद् ब्रह्मविदो ब्रह्म नाधीयन्तेऽतिवायति ।
वायौ वायुभयं ह्युक्तं ब्रह्म तत् पीडितं भवेत् ॥ ५७

भीष्मः—

एतावदुक्त्वा वचनं पराशरसुतः प्रभुः ।
उक्त्वा पुत्रमधीष्वेति व्योमगङ्गामगात्तदा ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
[ अस्मिन्नध्याये ५८ श्लोकाः ]

---

## ॥ पञ्चदशाधिकत्रिशततमोऽध्यायः ॥



नारदेन शुकं प्रति ऋषिभ्यः सनत्कुमरोक्तहितवचनानुवादः ॥

---

भीष्मः—

एतस्मिन्नन्तरे [1]शून्ये नारदस्समुपागमत् ।
शुकं स्वाध्यायनिरतं वेदार्थान् [2]प्रष्टुमीप्सितान् ॥ १

देवर्षिं तु शुको दृष्ट्वा नारदं समुपस्थितम् ।
अर्घ्यपूर्वेण विधिना वेदोक्तेनाभ्यपूजयत् ॥ २

नारदोऽथाब्रवीत् प्रीतो ब्रूहि ब्रह्मविदां वर ।
केन त्वां श्रेयसा वत्स योजयामीति हृष्टवत् ॥ ३

नारदस्य वचश्श्रुत्वा शुकः प्रोवाच भारत ॥ ३॥

---

1. ख-ग-घ—भूते 2. ख-ग—न्वक्तुमीप्सितान्

शुकः—

अस्मिँल्लोके हितं यत् स्यात् तेन मां योक्तुमर्हसि ॥ ४

नारदः—

तत्त्वं जिज्ञासतां पूर्वम् ऋषीणां भावितात्मनाम् ।
सनत्कुमारो भगवान् इदं वचनमब्रवीत् ॥ ५

सनत्कुमारः—

नास्ति विद्यासमं चक्षुर् नास्ति [1]सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ ६

निवृत्तिः कर्मणः पापात् सततं पुण्यशीलता ।
सद्वृत्तिस्समुदाचारश् श्रेय एतदनुत्तमम् ॥ ७

मानुष्यमसुखं प्राप्य यस्सज्जति न मुच्यते ।
नालं स दुःखमोक्षाय सङ्गो वै दुःखलक्षणम् ॥ ८

सक्तस्य बुद्धिश्चलति मोहजालविवर्धनी ।
मोहजालावृतो दुःखम् इह चामुत्र चाश्नुते ॥ ९

सर्वोपायैस्तु कामस्य क्रोधस्य च विनिग्रहः ।
कार्यश्श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥ १०

नित्यं क्रोधात्तपो रक्षेच् छ्रियं रक्षेच्च मत्सरात् ।
विद्यां मानावमानाभ्याम् आत्मानं तु प्रमादतः ॥ ११

1. क—विद्या

आनृशंस्यं परो धर्मः [1]क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् ॥ १२

सत्यस्य वचनं श्रेयस् सत्यादपि हितं भवेत् ।
यद्भूतहितमत्यन्तम् एतत् सत्यं सतां मतम् ॥ १३

सर्वारम्भ[2]परित्यागी निराशीर्निष्परिग्रहः ।
येन सर्वं परित्यक्तं स विद्वान् स च पण्डितः ॥ १४

इन्द्रियैरिन्द्रियार्थान् यश् चरत्यात्मवशैरिह ।
असज्जमानश्शान्तात्मा निर्विकारस्समाहितः ॥ १५

आत्मभूतैरतद्भूतस् सह चैव विनैव च ।
स विमुक्तः परं श्रेयो नचिरेणाधिगच्छति ॥ १६

अदर्शनमसंस्पर्शस् तथाऽसम्भाषणं सदा ।
यस्य भूतैस्सह मुने स श्रेयो विन्दते परम् ॥ १७

न हिंस्यात् सर्वभूतानि मैत्रायणगतिश्चरेत् ।
नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् ॥ १८

आकिञ्चन्यं सुसन्तोषो निराशीष्ट्वमचापलम् ।
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥ १९

परिग्रहं परित्यज्य भव तात जितेन्द्रियः ।

---

1. ख-घ—कर्म चापि परं
2. अ-क—फलत्यागी

अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥ २०
निराशिषो न शोचन्ति त्यजेदाशिषमात्मनः ।
परित्यज्याशिषं सौम्य दुःखात्तावद्विमोक्ष्यसे ॥ २१
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ २२
[1]गुणसङ्गेष्वनासक्त एकचर्यारतस्सदा ।

---

1. ख-घ—विहाय देहं निर्मुक्तो निर्द्वन्द्वश्शमसंयुतः ॥
अत्र गाथा पुरा गीता शृणु राज्ञा ययातिना ।
धार्यते यं द्विजैस्तात मोक्षशास्त्रविशारदैः ॥
ज्योतिरात्मा निरवाय तदत्रैव चैव तत् ? ।
स्वयं च शक्यं यद्द्रष्टुं सुसमाहितचेतसा ॥
न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तु सः ॥
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥
प्रसार्येह यथाऽङ्गानि कूर्मस्संवितते पुनः ।
तथेन्द्रियाणि सर्वाणि नियन्तव्यानि भिक्षुणा ॥
तमःपरिगतं वेश्म यथा दीपेन पश्यति ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥
एतत् सर्वं हि पश्यामि तथा बुद्धिमतां वर ।
यच्चान्यदपि नोक्तं मे तत्त्वतो वेद तद्भवान् ॥
ब्रह्मर्षेर्विदितश्चासि विषयान्तमुपागतः ।
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ॥
तस्यैव तत्प्रसादेन प्रादुर्भूतं महामुने ।
ज्ञानं दिव्यं त्वयि तदा तेनासि विदितो मम ॥
अधिकं च तवैश्वर्यं किं तत्त्वं नावबुध्यसे ॥

ब्राह्मणो नचिरादेव सुखमायात्यनुत्तमम् ॥ २३

द्वन्द्वारामेषु भूतेषु य एको रमते मुनिः ।
विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति ॥ २४

शुभैर्लभति देवत्वं व्यामिश्रैर्जन्म मानुषम् ।
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ २५

---

पूर्वतोऽनुवृत्तम्

बाला द्वन्द्वशयाद्वापि ? मोक्षज्ञानविमोक्षजात् ।
उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिम् ॥
व्यवसायविशुद्धेन त्वयि यत्तन्न संशयः ।
विमुच्य हृदयग्रन्थिं नासादयति तां गतिम् ॥
भवांश्चोत्पन्नविज्ञानस् स्थिरबुद्धिरलोलुपः ।
व्यवसायादृते पृच्छन्नासादयति तत्परम् ॥
नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपः ।
नौत्सुक्यं नृत्तगीतेषु न राग उपजायते ॥
यत् फलं ब्राह्मणस्येह मोक्षो यश्च यदात्मकः ॥
तस्मिन् वै वर्ण्यसे विप्र किमन्यत् परिपृच्छसि ॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि मोक्षधर्मे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

---

॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मः—

एतच्छ्रुत्वा तु वचनं कृताकृतविनिश्चयः ।
आत्मनाऽऽत्मानमास्थाय दृष्ट्वा चात्मानमात्मना ॥
कृतकार्यस्सुखी शान्तस् तूष्णीं प्रायादुदङ्मुखः ।
शैशिरं गिरमुद्दिश्य धर्मैश्च...सङ्गिराः ॥ [अधिकः पाठः]

[1]तत्र जन्मजरादुःखैस् सततं समभिद्रुतः ।
संसारे पच्यते जन्तुस् तत् कथं नावबुध्यसे ॥ २६

अहिते हितसंज्ञस्त्वम् अध्रुवे ध्रुवसंज्ञकः ।
अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ॥ २७

संवेष्ट्यमानं बहुभिर् मोहतन्तुभिरात्मजैः ।
कोशकारवदात्मानं वेष्टयन् नावबुध्यसे ॥ २८

अलं परिग्रहेणेह दोषवान् हि परिग्रहः ।
क्रिमिर्हि कोशकारस्तु बध्यते स्वपरिग्रहात् ॥ २९

पुत्रदारकुटुम्बेषु सक्तास्सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ ३०

महाजालसमाकृष्टान् [2]स्थले मत्स्यानिवोद्धृतान् ।
[3]स्नेहजालसमाकृष्टान् पश्य जन्तून् सुदुःखितान् ॥ ३१

कुटुम्बपुत्रदाराश्च शरीरं सञ्चयाश्च ये ।
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ॥ ३२

यदा सर्वं परित्यज्य गन्तव्यमवशेन ते ।
अनर्थे किं प्रसक्तस्त्वं स्वमर्थं नानुतिष्ठसि ॥ ३३

अविश्रान्तमनालम्बम् अपाथेयमदैशिकम् ।

---

1. ख-ग-घ—तत्र मृत्युवशो
2. ख—अयं पादोऽनन्तरश्च न स्तः
3. ग-घ—सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैश्च सङ्गताः । [अधिकः पाठः]

तमःकान्तारमध्वानं कथमेको गमिष्यसि ॥ ३४

न हि त्वां प्रस्थितं कश्चित् पृष्ठतोऽनुगमिष्यति ।
सुकृतं दुष्कृतं च त्वा यास्यन्तमनुयास्यतः ॥ ३५

विद्या कर्म च [1]कार्यं च ज्ञानं च बहुविस्तरम् ।
अर्थार्थमनुसार्यन्ते सिद्धार्थस्तु विमुच्यते ॥ ३६

निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ ३७

रूपकूलां मनस्स्रोतां स्पर्शद्वीपां रसावहाम् ।
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ ३८

[2]क्षमारित्रां सत्यमयीं धर्मस्थै[3]र्यावटाकराम् ।
त्यागवाताध्वगां शीघ्रं [4]असन्तार्यां नदीं तरेत् ॥ ३९

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज ॥ ४०

[5]त्यज धर्ममसङ्कल्पाद् अधर्मं चाप्यलिप्सया ।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ ४१

अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ४२

1. ख-घ-ग—शौर्यं च
2. क—क्षमातरित्रां
3. ख-ग-घ—र्यपदाङ्कुराम
4. ख-ग-घ—नौतार्यां तां
5. अ-क—षड्भांनि न सन्ति

जराक्रोधसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासं समुत्सृजेत् ॥ ४३
इदं विश्वं जगत् सर्वम् अजगच्चापि यद्भवेत् ।
महाभूतात्मकं सर्वं महद्यत् परमाणु यत् ॥ ४४
[1]महाभूतानि खं वायुर् अग्निरापस्तथा मही ।
षष्ठं तु चेतना या तु आत्मा सप्तम उच्यते ॥ ४५
अष्टमं तु मनो ज्ञेयं बुद्धिस्तु नवमी स्मृता ।
इन्द्रियाणि च पञ्चैव तमस्सत्त्वं रजस्तथा ॥ ४६
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ।
सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैश्च संहृतः ॥ ४७
[2]सप्तविंशक इत्येष व्यक्ताव्यक्तमयो गुणः ॥ ४७॥
एतैस्सर्वैस्समायुक्तः पुमानित्यभिधीयते ॥ ४८
त्रिवर्गोऽत्र सुखं दुःखं जीवितं मरणं तथा ॥ ४८॥
य इदं वेद तत्त्वेन स वेद प्रभवाप्ययौ ।
[3]पाराशर्येह बोद्धव्यं जानता यच्च किञ्चन ॥ ४९॥
[4]इन्द्रियैर्गृह्यते यद्यत् तत्तद्व्यक्तमिति स्थितिः ।

---

1. अ-क—अधिकं नास्ति 2. अ-क—पञ्चविंशक
3. अ-क—पारावर्येण×ज्ञामानाम्
4. क—सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैश्च संहृतः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ॥
एतैस्सर्वैस्समायुक्तः पुमानित्यभिधीयते ॥ [अधिकः पाठः]

अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ५०॥

इन्द्रियैर्नियतैर्देही धाराभिरिव तप्यते ।
लोके विततमात्मानं लोकांश्चात्मनि पश्यति ॥ ५१॥

परावरविदश्शक्तिर् ज्ञानमूला न नश्यति ॥ ५२

पश्यतस्सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ ५३

ज्ञानेन विविधान् क्लेशान् अतिवृत्तस्य मोहजान् ।
लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते ॥ ५४

[1]अनादिनिधनज्ञं तम् आत्मनि स्थितमव्ययम् ।
अकर्तारममूर्तं च भगवानाह तीर्थवित् ॥ ५५

यो जन्तुस्स्वकृतैस्तैस्तैः कर्मभिर्नित्यदुःखितः ।
स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा ॥ ५६

ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
तप्यतेऽथ पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः ॥ ५७

अजस्रमेव मोहार्तो दुःखेषु सुखसंज्ञितः ।
बध्यते मथ्यते चैव कर्मभिर्मन्थवत् सदा ॥ ५८

ततो निर्वृत्तबन्धत्वात् कर्मणामुदयादिह ।

---

1. ख-घ—लोके विततमात्मानं लोकं चात्मनि पश्यति । [अधिकः पाठः]
ग—अनादिनिधनं जन्तुं [पाठान्तरम्]

परिभ्रमति संसारं चक्रवद्बहुवेदनः ॥ ५९

स चेन्निवृत्तबन्धस्तु निवृत्तश्चापि कर्मणः ।
सर्ववित् सर्वजित् सिद्धो भवेद् भावविवर्जितः ॥ ६०

संयमेन नवं बन्धं निवर्त्य तपसो बलात् ।
सम्प्राप्ता बह्वस्सिद्धिम् अप्यबाधां सुखोदयाम् ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
[ अस्मिन्नध्याये ६१ श्लोकाः ]

## ॥ षोडशाधिकत्रिशततमोऽध्यायः ॥

नारदेन शुकं प्रति मोक्षमार्गप्रदर्शकहितोपदेशः ॥

नारदः—

अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।
निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥ १

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढम् आविशन्ति न पण्डितम् ॥ २

तस्मादनिष्टनाशार्थम् इतिहासं निबोध मे ।
तिष्ठते चेद्वशे बुद्धिर् लभते शोकनाशनम् ॥ ३

अनिष्टसम्प्रयोगाच्च विप्रयोगात् प्रियस्य च ।

मनुष्या मानसैर्दुःखैर् युज्यन्ते येऽल्पबुद्धयः ॥ ४
द्रव्येषु समतीतेषु ये गुणास्तान् न चिन्तयेत् ।
ताननाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ॥ ५
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवर्द्धि तत् पश्येत् तथा क्षिप्रं विरज्यते ॥ ६
[1]नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ ७
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ॥ ८
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ९
नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु सन्ततिम् ।
सम्यक् प्रपश्यतस्सर्वं नाश्रुकर्मोपपद्यते ॥ १०
दुःखोपघाते शारीरे मानसे वाऽप्युपस्थिते ।
यस्मिन् न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत् ॥ ११
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ १२
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।

1. घ – अर्धचतुष्टयं नास्ति

एतद्विज्ञानसामर्थ्ये न बालैस्समतामियात् ॥ १३
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ १४
न जानपदिकं दुःखम् एकश्शोचितुमर्हति ।
अशोचन् प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ १५
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः ।
स्निग्धत्वादिन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ १६
परित्यजति यो दुःखं सुखं वाऽप्युभयं नरः ।
अभ्येति ब्रह्म सोऽत्यन्तं न तं शोचन्ति पण्डिताः ॥ १७
त्यज्यन्ते दुःखमर्था हि पालनेन च ते सुखाः ।
दुःखेन चाधिगम्यन्ते [1]नाशमेषां न चिन्तयेत् ॥ १८
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
अतृप्ता यान्ति विध्वंसं सन्तोषं यान्ति पण्डिताः ॥ १९
सर्वे क्षयान्ता निचयाः पतनान्तास्समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ २०
अन्तो नास्ति पिपासायास् तुष्टिस्तु परमं सुखम् ।
तस्मात् सन्तोषमेवेह [2]धनं पश्यन्ति पण्डिताः ॥ २१
निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति ।

---

1. ख-ध—आशामेषां　　2. ग—सुखं पश्यन्ति

स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ॥ २२
भूतेष्वभावं सञ्चिन्त्य ये बुद्ध्वा [1]मनसः परम् ।
न शोचन्ति गताध्वानः पश्यन्ति परमां गतिम् ॥ २३
सञ्चिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥ २४
तथाऽप्युपायं सम्पश्येद् दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ २५
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात् परं किञ्चिद् धनिनो वाऽधनस्य च ॥ २६
[2]प्राक्सम्प्रयोगाद्भूतानां नास्ति दुःखमनामयम् ।
विप्रयोगे तु सर्वस्य न शोचेत् प्रकृतिस्थितः ॥ २७
धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा ।
चक्षुश्श्रोत्रे च मनसा मनो वाचं च विद्यया ॥ २८
प्रणयांस्तु सुसंहृत्य संस्तुतेष्वितरेषु च ।
विचरेदसमुन्नद्धस् स सुखी स च पण्डितः ॥ २९
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन यश्चरेत् स सुखी भवेत् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

1. ख-ग—तमसः 2. अ-क—वाक् सम्प्रयोगो भूतानां

## ॥ सप्तदशाधिकत्रिशततमोऽध्यायः ॥

नारदेन शुकं प्रति जनानां रोगारोग्यपुत्रवत्त्वापुत्रवत्त्वभाग्यादीनां सर्वेषां दैवायत्तत्वमुपपाद्य सर्वेषामल्पत्वानित्यत्वे च सम्यक् निरूप्य मोक्षोपदेशः ॥

नारदः—

सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम् ॥ १

स्वभावाद्यत्नमातिष्ठेद् यत्नवान् नावसीदति ।
जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् ॥ २

रुजन्ति हि शरीराणि रोगाश्शारीरमानसाः ।
सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ॥ ३

व्यथितस्य विवित्साभिस् त्रस्यतो जीवितैषिणः ।
अवशस्य विनाशाय शरीरमपकृष्यते ॥ ४

स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ॥ ५

व्यत्ययो ह्ययमत्यन्तं पक्षयोश्शुक्लकृष्णयोः ।
जातं मर्त्यं जरयति निमेषान्नावतिष्ठते ॥ ६

सुखदुःखानि भूतानाम् अजरो जरयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ ७

अदृष्टपूर्वानादाय भावानपरिशङ्कितान् ।
इष्टानिष्टान् मनुष्याणाम् अस्तं गच्छन्ति रात्रयः ॥ ८

यो यमिच्छेद्यथाकामं कामानां तं तमाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ॥ ९

संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलास्सन्तः प्रहीणाश्च स्वकर्मभिः ॥ १०

अपरे बालिशास्सन्तो निर्गुणाः पुरुषाधमाः ।
[1]आशीर्भिरस्य संयुक्ता दृश्यन्ते कर्मकारिणः ॥ ११

भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ १२

अचेष्टमानमासीनं श्रीः कञ्चिदुपतिष्ठति ।
कर्मी कर्मानुसृत्याऽन्यो न प्राप्यमधिगच्छति ॥ १३

अपराधं समाचक्ष्व पुरुषस्य स्वभावतः ।
शुक्र[2]मन्यत्र सम्भूतं पुनरन्यत्र गच्छति ॥ १४

तस्य योनौ प्रसक्तस्य गर्भो भवति वा न वा ।
आम्रपुष्पोपमा यस्य निर्वृत्तिरुपलभ्यते ॥ १५

केषाञ्चित् पुत्रकामानाम् अनुसन्तानमिच्छताम् ।

---

1. ख-ग-घ—अशुभैरप्य×सर्वकामिनः
2. ग—मन्यस्य

सिद्धौ प्रयतमानानां नैर्विण्यमुपजायते ॥ १६

गर्भाश्चोद्विजमानानां क्रुद्धादाशीविषादिव ।
आयुष्माञ्जायते पुत्रः कथं प्रेतः पिता इव ॥ १७

देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दश मासान् परिधृता जायन्ते कुलपांसनाः ॥ १८

अपरे धनधान्यानि भोगांश्च पितृसञ्चितान् ।
विपुलानभिजायन्ते लब्धैस्तैरेव मङ्गलैः ॥ १९

अन्योन्यं समभिप्रीत्या मैथुनस्य समागमे ।
उपद्रव इवाविष्टे योनिं गर्भः प्रपद्यते ॥ २०

जीर्णे परशरीरेण निश्छवीकं शरीरिणम् ।
प्राणिनां प्राणसंरोधे मांसश्लेष्मविचेष्टितम् ॥ २१

निर्दग्धं परदेहे च परदेहं चलाचलम् ।
विनश्यन्तं विनाशान्ते नावि नावमिवाहिताम् ॥ २२

सङ्गत्या जठरे न्यस्तं रेतोबिन्दुमचेतनम् ।
केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि ॥ २३

अन्नपानानि जीर्यन्ते यत्र भक्षाश्च भक्षिताः ।
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते ॥ २४

गर्भे मूत्रपुरीषाणां स्वभावनियता गतिः ।
धारणे वा विसर्गे वा न कर्तुर्विद्यते वशः ॥ २५

स्रवन्ते ह्युदराद्गर्भा जायमानास्तथा परे ।
आगमेन तथाऽन्येषां विनाश उपपद्यते ॥ २६

एतस्माद्योनिसम्बन्धाद् यो जीवन् परिमुच्यते ।
प्रजां च लभते काञ्चित् पुनर्द्वन्द्वेषु मज्जति ॥ २७

[1]ये तस्य सहजातस्य सप्तमीं [2]नवमीं दशाम् ।
प्राप्नुवन्ति ततः पञ्च न भवन्ति शतायुषः ॥ २८

अभ्युत्थाने मनुष्याणां रोगास्स्युर्नात्र संशयः ॥
व्याधिभिश्च विमथ्यन्ते व्यालैः क्षुद्रमृगा इव ॥ २९

व्याधिभिर्भक्ष्यमाणानां त्यजतां विपुलं धनम् ।
वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ॥ ३०

ते चापि निपुणा वैद्याः कुशलास्सम्भृतौषधाः ।
व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्दिताः ॥ ३१

ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ ३२

के वा भुवि चिकित्सन्ते रोगार्तान् मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ॥ ३३

[3]धीरानपि दुराधर्षान् नृपतीनुग्रतेजसः ।

---

1. क—स (ये) ख-ग-घ—शतस्य
2. ग—दशमीं दशाम् 3. घ—धीमतोऽपि

आक्रम्य रोगाः खादन्ते पशून् पशुपचा इव ॥ ३४

इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसा [1]महता क्षिप्तं ह्रियमाणं बलीयसा ॥ ३५

न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावा विनिवर्तन्ते ये नियुक्ताश्शरीरिषु ॥ ३६

न म्रियेरन् न जीर्येरन् सर्वे स्युस्सर्वकामिनः ।
नाप्रियं प्रतिपश्येयुर् उत्थानस्य फलं यदि ॥ ३७

उपर्युपरि लोकस्य सर्वो भवितुमिच्छति ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ ३८

ऐश्वर्यमदमत्ताश्च मत्ता मद्यमदेन च ।
अप्रमत्ताश्शठाः क्रूरा विक्रान्ताः पर्युपासते ॥ ३९

क्लेशाः प्रतिनिवर्तन्ते केषाञ्चिदसमीक्षिताः ।
स्वं स्वं न पुनरन्येषां न किञ्चिदधिगम्यते ॥ ४०

महच्च फलवैषम्यं दृश्यते कर्मसिद्धिषु ।
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकागताः ॥ ४१

सर्वेषामृद्धिकामानाम् अन्ये रथपुरस्सराः ।
मनुजाश्च गतस्त्रीकाश् शतशो विधवास्स्त्रियः ॥ ४२

द्वन्द्वारामेषु भूतेषु गच्छन्त्येकैकशो [2]जनाः ।

---

1. ख-ग-घ—सहसा　　　2. ख-ग-घ—गुणाः

इदमन्यत् परं पश्य माऽत्र मोहं करिष्यसि ॥ ४३

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा [1]येन त्यजसि तं त्यज ॥ ४४

एतत्ते परमं गुह्यम् आख्यातमृषिसत्तम ।
येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः* ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
[अस्मिन्नध्याये ४५ श्लोकाः]

---

1. ख-घ—योगान्मुक्तो भविष्यसि
* अ-क—कोशेषु नात्राध्यायसमाप्तिः ।

## ॥ अष्टादशाधिकत्रिशततमोऽध्यायः ॥

नारदवचनाज्जातवैराग्येण शुकेन स्वयमालोच्य सूर्यमण्डलप्रविविक्षाया व्यासनारदयोर्निवेदनम् ॥

भीष्मः—

[1]नारदस्य वचश्श्रुत्वा शुकः परमबुद्धिमान् ।
सञ्चिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ॥ १

शुकः—

पुत्रदारे महान् क्लेशो विद्याम्नाये महाञ् छ्रमः ।
किंनु स्याच्छाश्वतं स्थानम् अल्पक्लेशं महोदयम् ॥ २

भीष्मः—

ततो मुहूर्तं सञ्चिन्त्य निश्चलां गतिमात्मनः ।
परावरज्ञो धर्मस्य परां नैश्श्रेयसीं गतिम् ॥ ३

शुकः—

[2]कथं न्वहमसङ्क्लिष्टो गच्छेयं परमां गतिम् ।
नावर्तेयं यथा भूयो योनिसंसारसागरे ॥ ४

परं भावं हि काङ्क्षामि यत्र नावर्तते पुनः ।
सर्वान् सङ्गान् परित्यज्य निश्चितां परमां गतिम् ॥ ५

तत्र यास्यामि यत्रात्मा शमं मेऽधिगमिष्यति ।

1. ख-ब—तस्य तद्वचनं 2. ख-ब—नासीदमर्थम्

अक्षयश्चाऽव्ययश्चैव यत्र स्थास्यामि शाश्वतः ॥ ६

न तु योगमृते शक्या प्राप्तुं सा परमा गतिः ।
अवबन्धो हि युक्तस्य कर्मभिर्नोपपद्यते ॥ ७

तस्माद्योगं समास्थाय त्यक्त्वा गृहकलेबरम् ।
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ॥ ८

न ह्येष क्षयमायाति सोमस्सुरगणैर्यथा ।
कम्पितः पतते भूमिं पुनश्चैवाधिरोहति ॥ ९

क्षीयते च यथा सोमः पुनश्चैवाभिपूर्यते ।
[1]नेच्छाम्येवं विदित्वैते ह्रासवृद्धी पुनः पुनः ॥ १०

रविस्तु सन्तापयति लोकान् रश्मिभिरुल्बणैः ।
सर्वतस्तेज आदत्ते नित्यमक्षयमण्डलः ॥ ११

अतो मे रोचते गन्तुम् आदित्यं दीप्ततेजसम् ।
अत्र वत्स्यामि दुर्धर्षो निस्सङ्गेनान्तरात्मना ॥ १२

सूर्यस्य [2]तपतश्चाहं जगत् स्थावरजङ्गमम् ।
ऋषिभि[3]स्सहितो दीप्तं तेजो वत्स्यामि नित्यदा ॥ १३

प्रवेक्ष्यामि नगान् नागान् गिरीनुर्वीं दिशो दश ।

---

1. क-ख-घ—नास्तीदमर्धम्
2. ख-ग-घ—सदने चाहं निक्षिप्येदं कलेबरम्
3. ख-ग-घ—स्सह वत्स्यामि सौरं तेजोऽतिदुस्सहम्

देवदानवगन्धर्वान् पिशाचोरगराक्षसान् ॥ १४

लोकेषु सर्वभूतानि प्रवेक्ष्यामि न संशयः ।

पश्यन्तु योगवीर्यं मे सर्वे देवास्सहर्षिभिः ॥ १५

भीष्मः—

अथानुज्ञाप्य तमृषिं नारदं लोकविश्रुतम् ।

तस्मादनुज्ञां सम्प्राप्य जगाम पितरं प्रति ॥ १६

सोऽभिवाद्य महात्मानं कृष्णद्वैपायनं मुनिम् ।

शुकः प्रदक्षिणं कृत्वा कृष्णमापृष्टवान् मुनिम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥

शुकेन कैलासशिखरारोहणं तस्मादन्तरिक्षोत्पतनं च ॥ १ ॥ शुकेनात्मानमवलोकयता देवान् प्रति व्यासेन शुकेत्याक्रोशे तं प्रति प्रतिवचनचोदना ॥ २ ॥

---

भीष्मः—

श्रुत्वा मुनिस्तद्वचनं शुकस्य
परं प्रहृष्टः पुनराह चैनम् ॥ ॥

व्यासः—

भो भो पुत्र स्थीयतां तावदद्य
यावच्चक्षुः प्रीणयामि त्वदर्थम् ॥ १

भीष्मः—

निरपेक्षश्शुको भूत्वा निस्स्नेहो मुक्तसंशयः ।
मोक्षमेवानुसञ्चिन्त्य गमनाय मनो दधे ॥ २

पितरं सम्परित्यज्य जगाम द्विजसत्तमः ।
कैलासपृष्ठं विपुलं महद्योगं निषेवितुम् ॥ ३

गिरिपृष्ठं समारुह्य शुको व्यासस्य पश्यतः ।
समे देशे विविक्ते च निश्शलाक उपाविशत् ॥ ४

धारयामास चात्मानं यथाशास्त्रं महामुनिः ।
पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् ॥ ५

ततस्स प्राङ्मुखो विद्वान् आदित्ये नाचिरोदिते ।

पाणिपादं समाधाय विनीतवदुपाविशत् ॥ ६
न यत्र पक्षिसम्पातो न शब्दो नापि दर्शनम् ।
तत्र वैयासकिर्धीमान् योक्तुं समुपचक्रमे ॥ ७
स ददर्श तदाऽऽत्मानं सर्वसङ्गविनिस्सृतम् ।
प्रजहास ततो हासं शुकस्सम्प्रेक्ष्य तत् परम् ॥ ८
स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये ।
महायोगेश्वरो भूत्वा सोऽत्यक्रामद्विहायसम् ॥ ९
ततः प्रदक्षिणं कृत्वा [1]देवर्षिं नारदं तदा ।
निवेदयामास च तं स्वं योगं परमर्षये ॥ १०

शुकः—

दृष्टो मार्गः प्रवृत्तोऽस्मि स्वस्ति तेऽस्तु तपोधन ।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ॥ ११

भीष्मः—

नारदेनाभ्यनुज्ञातश् शुको द्वैपायनात्मजः ।
अभिवाद्य पुनर्योगम् आस्थायाकाशमाविशत् ॥ १२
कैलासपृष्ठादुत्पत्य स पपात दिवं तदा ।
अन्तरिक्षचरश्श्रीमान् व्यासपुत्रस्सुनिश्चितः ॥ १३
[2]तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम् ।

---

1. ग—ब्रह्मर्षिं नारदं तथा
2. ङ-ग-च—व्यासपुत्रं द्विजश्रेष्ठं मनोमारुतरंहसम् ।
दद्दशुस्सर्वभूतानि वैनतेयसमद्युतिम् ॥ [पाठान्तरम्]

दद्दशुस्सर्वभूतानि मनोमारुतरंहसम् ॥ १४
व्यवसायेन लोकांस्त्रीन् [1]सोऽन्यत् कामादचिन्तयन् ।
आस्थितो दिव्यमध्वानं पावकार्कसमप्रभः ॥ १५
तमेकमनसं यान्तम् अव्यग्रमकुतोभयम् ।
दद्दशुस्सर्वभूतानि जङ्गमानीतराणि च ॥ १६
यथाशक्ति यथान्यायं पूजयाञ्चक्रिरे तदा ।
पुष्पवर्षैश्च दिव्यैस्तम् एवं चक्रुर्दिवौकसः ॥ १७
तं दृष्ट्वा विस्मितास्सर्वे गन्धर्वाप्सरसां गणाः ।
ऋषयश्चैव संसिद्धाः परं विस्मयमागताः ॥ १८
अन्तरिक्षचरः कोऽयं तपसा सिद्धिमागतः ।
अधःकायोर्ध्ववक्त्रश्च नेत्रैस्समतिवाह्यते ॥ १९
ततः परमधीरात्मा त्रिषु लोकेषु विश्रुतः ।
भास्करं समुदीक्षन् स प्राङ्मुखो वाग्यतोऽगमत् ॥ २०
शब्देनाकाशमखिलं पूरयन्निव सर्वशः ॥ २०॥
तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः ।
सम्भ्रान्तमनसो राजन्नासन् परमविस्मिताः ॥ २१॥
पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः ॥ २२
दैवतं कतमं त्वेतद् उत्तमां गतिमास्थितम् ।

1. ख-ग-घ—सर्वान् सोऽथ विचिन्तयन्

सुनिश्चितमिहायाति निर्मुक्तमिव निस्स्पृहम् ॥ २३
ततस्समतिचक्राम [1]मलयं नाम पर्वतम् ।
ऊर्वशी पूर्वचित्तिश्च यं नित्यमुपसेवतः ॥ २४
ते स्म ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम् ॥ २४॥

ऊर्वशी—

अहो बुद्धिसमाधानं वेदाभ्यासरते बुधे ॥ २५
अचिरेणैव कालेन [2]जगद्व्याप्स्यत्यसंशयम् ।
पितृशुश्रूषया सिद्धिं सम्प्राप्तोऽयमनुत्तमाम् ॥ २६
[3]पितृभक्तो दृढतपाः पितुस्सुदयितस्सुतः ।
[4–5]अनन्यमनसा तेन कथं पित्रा विसर्जितः ॥ २७

भीष्मः—

ऊर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित् ।
उदैक्षत दिशस्सर्वा वचने गतमानसः ॥ २८
सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम् ।
विलोकयामास तदा सरांसि सरितस्तथा ॥ २९
ततो द्वैपायनसुतं बहुमानात् समन्ततः ।

---

1. अ-क—मन्दरं
2. ख-ग—नभश्चरति चन्द्रवत् घ—न भयं याति चन्द्रवत्
3. घ—पितृभक्तौ दृढा सिद्धिस्तया स मुदितस्सुतः ।
4. ख-घ—कृताञ्जलिपुटास्सर्वास् तुष्टुवु हृष्टमानसाः । [ अधिकः पाठः ]
5. घ—पितुरत्यन्तमिष्टोऽयं

कृताञ्जलिपुटास्सर्वा निरीक्षन्ते स्म देवताः ॥ ३०

अब्रवीत् तास्तदा वाक्यं शुकः परमधर्मवित् ॥ ३०॥

शुकः—

पिता यद्यनुगच्छेन्मां क्रोशमानश्शुकेति वै ।

तस्य प्रतिवचो देयं सर्वैरेव समाहितैः ॥ ३१॥

एतन्मे स्नेहतस्सर्वे वचनं कर्तुमर्हथ ॥ ३२

भीष्मः—

शुकस्य वचनं श्रुत्वा दिशस्सवनकाननाः ।

समुद्रास्सरितश्शैलाः प्रत्यूचुस्तं समन्ततः ॥ ३३

समुद्रादयः—

यथा ज्ञापयसे विप्र बाढमेवं भविष्यति ।

ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
[ अस्मिन्नध्याये ३४ श्लोकाः ]

---

## ॥ विंशत्यधिकत्रिशततमोऽध्यायः ॥



अन्तरिक्षाद्गिरिशिखरे निपतितेन शुकेन तद्विभेदनपूर्वकं ततो निष्क्रमणम् ॥ १ ॥ ततः पुत्रवियोगविषण्णस्य व्यासस्य रुद्रेण समाश्वासनम् ॥ २ ॥

भीष्मः—

इत्येवमुक्ते वचने ब्रह्मर्षिस्समहातपाः ।
प्रातिष्ठत शुकस्सिद्धो [1]हित्वा दोषांश्चतुर्विधान् ॥ १

[2]तमो ह्यष्टविधं हित्वा जहौ पञ्चविधं रजः ।
ततस्सत्त्वं जहौ धीमांस् तदद्भुतमिवाभवत् ॥ २

ततस्तस्मिन् पदे नित्ये निर्गुणे लिङ्गवर्जिते ।
ब्रह्मणि प्रत्यतिष्ठत् स विधूमोऽग्निरिव ज्वलन् ॥ ३

[3]उल्कापाता दिशां दाहा भूमिकम्पास्तथैव च ।

1. ख-ग-घ—गत्वा देशांश्च पर्वतान्
2. ग-घ—अर्धचतुष्टयं नास्ति
3. ख-ग-घ—सदृशेऽप्रतिमे दिव्ये हिमवद्गिरिसम्भवे ।
संश्लिष्टे श्वेतपीते द्वे रूप्यरुक्ममये शुभे ॥
शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत ।
उदीचीं दिशमाश्रित्य रुचिरे सन्ददर्श ह ॥
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ।
तस्मिन् पर्वतश्रृङ्गे ते सहसैव द्विधाकृते ॥
शुकमेतादृशं सूक्ष्मं ऋषिपुत्रस्य यत्तदा ।
अदृश्येतां महाराज तदद्भुतमिवाभवत् ॥ [अधिकः पाठः]

प्रादुर्भूताः क्षणे तस्मिस् तदद्भुतमिवाभवत् ॥ ४
द्रुमाश्शाखाश्च मुमुचुश् शिखराणि च पर्वताः ।
निर्घातशब्दैर्बहुभिर् हिमवान् दीर्यतीव ह ॥ ५
न बभासे सहस्रांशुर् न जज्वाल च पावकः ।
ह्रदाश्च सरितश्चैव चुक्षुभुस्सागरास्तथा ॥ ६
[1]ववर्ष वासवस्तोयं रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवहश्शुचिः ॥ ७
[2]स शृङ्गप्रतिमे दिव्ये हिमवन्मेरुसन्निभे ।
संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे ॥ ८
शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत ।
उदीचीं दिशमाश्रित्य रुचिरे सन्ददर्श ह ॥ ९
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ॥ ९॥
ततः पर्वतशृङ्गे ते सहसैव द्विधाकृते ।
अदृश्येतां महाराज तदद्भुतमिवाभवत् ॥ १०॥
ततः पर्वतशृङ्गाभ्यां सहसैव विनिस्सृतः ।
न च प्रतिजघानास्य स गतिं पर्वतोत्तमः ॥ ११॥
ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ॥ १२

1. ख-घ—अर्धद्वयमत्र नास्ति - सार्धत्रयोदशश्लोकानन्तरं वर्तते
2. ख-ग—अर्धसप्तकं नास्ति

गन्धर्वाणामृषीणां च ये च शैलनिवासिनः ।
दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधा कृतम् ॥ १३
साधु साध्विति तत्रासीन्नादस्सर्वत्र भारत[1] ॥ १३॥
स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा ।
यक्षराक्षससङ्घैश्च विद्याधरगणैस्तथा ॥ १४॥
दिव्यैः पुष्पैस्समाकीर्णम् अन्तरिक्षं समन्ततः ।
आसीत् किल महाराज शुकाभिपतने तदा ॥ १५॥
ततो मन्दाकिनीं रम्याम् उपरिष्टादभिव्रजन् ।
शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ॥ १६॥
तत्र क्रीडन्त्यभिरतास् स्नान्ति चैवाप्सरोगणाः ।
शून्याकारा निराकारं शुकं दृष्ट्वा विवाससः ॥ १७॥
तं प्रक्रमन्तमाज्ञाय पिता स्नेहसमन्वितः ।
उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ॥ १८॥
शुकस्तु मरुतामूर्ध्वं गतिं गत्वाऽन्तरिक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतोऽभवत् तदा ॥ १९॥
[2]महायोगगतिं चाग्र्यां व्यासोत्थाय महातपाः ।

---

1. ख-घ—ववर्ष वासवस्तोयं रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवहश्शुचिः ॥ [अधिकः पाठः]
2. ग—ततश्शुकेति दीर्घेण शैक्षेणाक्रन्दितस्तदा । [अधिकः पाठः]

निमेषान्तरमात्रेण शुकाभिपतनं ययौ ॥ २०॥
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ।
शशंसुर्ऋषयस्तस्मै कर्म पुत्रस्य तत्तदा ॥ २१॥
ततश्शुकेति दीर्घेण शैक्षेणाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस् त्रीँल्लोकाननुनाद्य वै ॥ २२॥
शुकस्सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।
प्रत्यभाषत धर्मात्मा भोशब्देनानुनादयन् ॥ २३॥
तत एकाक्षरं नादं भो इत्येव समीरयत् ।
प्रत्याहरज्जगत् सर्वम् उच्चैस्स्थावरजङ्गमम् ॥ २४॥
ततःप्रभृति चाद्यापि शब्दानुच्चारितान् पृथक् ।
गिरिगह्वरपृष्ठेषु [1]व्याहरन्ति शुकं प्रति ॥ २५॥
अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ।
गुणान् सन्त्यज्य शब्दादीन् पदमभ्यगमत् परम् ॥ २६॥
[2]महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।

1. क-ख-ग-घ—व्याजहार
2. ख-ग—प्रातिष्ठत शुकस्सिद्धिं हित्वा दोषांश्चतुर्विधान् ।
तमोऽप्यष्टविधं हित्वा जहौ पञ्चविधं रजः ॥
ततस्सत्त्वं जहौ धीमांस्तदद्भुतमिवाभवत् ।
ततस्तस्मिन् पदे शीते निर्गुणे लिङ्गवर्जिते ॥
ब्रह्मणि प्रत्यतिष्ठत् स विधूमोऽग्निरिव ज्वलन् ॥
[अधिकः पाठः]

निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् ॥ २७॥

ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्वास् सम्भ्रान्ता गतचेतसः ॥ २८॥

जले निलिल्यिरे काश्चित् काश्चिद्गुल्मान् प्रपेदिरे ।
[1]वसनान्याददुः काश्चिद् दृष्ट्वा तं मुनिसत्तमम् ॥ २९॥

तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा ।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ॥ ३०॥

तं देवगन्धर्ववृतो महर्षिगणपूजितः ।
पिनाकहस्तो भगवान् अभ्यागच्छत शङ्करः ॥ ३१॥

तमुवाच महादेवस् सान्त्वपूर्वमिदं वचः ।
पुत्रशोकाभिसन्तप्तं कृष्णद्वैपायनं तदा ॥ ३२॥

श्रीमहादेवः—

अग्नेर्भूमेरपां वायोर् अन्तरिक्षस्य चैव ह ।
वीर्येण सदृशः पुत्रस् त्वया मत्तः पुरा वृतः ॥ ३३॥

स तथालक्षणो जातस् तपसा तव सम्भृतः ।
[2]मम चैव प्रभावेण ब्रह्मतेजोमयश्शुचिः ॥ ३४॥

स गतिं परमां प्राप्तो दुष्प्रापामकृतात्मभिः ।

---

1. ख-ग-घ—वासांस्याददिरे
2. ख-घ—तवैव च

दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ॥ ३५॥

यावत् स्थास्यन्ति गिरयो यावत् स्थास्यन्ति सागराः ।
तावत्तवाक्षया कीर्तिस् सपुत्रस्य भविष्यति ॥ ३६॥

छायां पुत्रस्य सदृशीं सर्वतोऽनपगां सदा ।
द्रक्ष्यसि त्वं च लोकेऽस्मिन् मत्प्रसादान्महामुने ॥ ३७॥

भीष्मः—

सोऽनुनीतो भगवता स्वयं रुद्रेण भारत ।
छायां पश्यन् परावृत्तस् स मुनिः परया मुदा ॥ ३८॥

इति जन्म गतिश्चैव शुकस्य भरतर्षभ ।
विस्तरेण मयाऽऽख्यातं यन्मां त्वं परिपृच्छसि ॥ ३९॥

एतदाचष्ट मे राजन् देवर्षिर्नारदः पुरा ।
व्यासश्चैव महायोगी सञ्जल्पेषु पदे पदे ॥ ४०॥

इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम् ।
धारयेद्यश्शमपरस् स गच्छेत् परमां गतिम् ॥* ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
[अस्मिन्नध्याये ४१॥ श्लोकाः

* एतावदेव ग-कोशे लभ्यते इतः परं तालपत्रं त्रुटितं दृश्यते

## ॥ एकविंशत्यधिकत्रिशततमोऽध्यायः ॥

(नारायणीयारम्भः)



भीष्मेण युधिष्ठिरं प्रति दैवपित्र्यकर्मानुष्ठानस्यावश्यकत्वप्रतिपादकनारदनारायणसंवादानुवादः ॥

---

युधिष्ठिरः—

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत् सिद्धिमास्थातुं देवतां कां यजेत सः ॥ १

कुतो हि स्याद् ध्रुवस्स्वर्गः कुतो नैश्श्रेयसं परम् ।
विधिना केन जुहुयाद् दैवं पित्र्यमथापि वा ॥ २

मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद् येन न च्यवते दिवः ॥ ३

देवतानां च को देवः पितॄणां च पिता तथा ।
[1]तस्मात् परतरं यच्च तन्मे ब्रूहि पितामह ॥ ४

भीष्मः—

गूढं मां प्रश्नवित् प्रश्नं पृच्छसे त्वमिहानघ ।
न ह्येतदन्यथा शक्यं वक्तुं वर्षशतैरपि ॥ ५

ऋते देवप्रसादाद्वा राजञ् ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन् ॥ ६

---

1. ख-घ—स्पष्टेः पर

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नारदस्य च संवादम् ऋषेर्नारायणस्य च ॥ ७

नारायणो हि विश्वात्मा चतुर्मूर्तिस्सनातनः ।
धर्मात्मजस्सम्बभूव पितैवं मेऽभ्यभाषत ॥ ८

कृते युगे महाराज पुरा स्वायम्भुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ९

[1]तेषां नारायणनरौ तपस्तेपतुरव्ययौ ।
बदर्याश्रममासाद्य शकटे कनकामये ॥ १०

अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम् ।
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसन्ततौ ॥ ११

तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि ।
यस्य प्रसादं कुर्वाते स देवौ द्रष्टुमर्हति ॥ १२

नूनं तयोरनुमते हृदि हृच्छयचोदितः ।
महामेरोर्गिरेश्शृङ्गात् प्रच्युतो गन्धमादनम् ॥ १३

नारदस्सुमहद्भूतं सर्वाँल्लोकानचीचरत् ।
तं देशमगमद्राजन् बदर्याश्रममाशुगः ॥ १४

तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत् ॥ १४॥

1. ख-घ—नरनारायणौ रौद्रं

नारदः—

इदं तदास्पदं कृत्स्नं यस्मिँल्लोकाः प्रतिष्ठिताः ।
सदेवासुरगन्धर्वास्[1]सर्षिकिन्नरलेलिहः ॥ १५॥

एका पूर्वं मूर्तिरियं जाता भूयश्चतुर्विधा ॥ १६

धर्मस्य कुलसन्ताने धर्म एभिश्च वर्धितः ।
अहोऽप्यनुगृहीतोऽद्य धर्म एभिस्सुरैरिह ॥ १७

नरनारायणाभ्यां च कृष्णेन हरिणा तथा ॥ १७॥

तत्र कृष्णो हरिश्चैव कस्मिंश्चित् कारणान्तरे ।
स्थितौ धर्मस्य वै गेहे इमौ तपसि धिष्ठितौ ॥ १८॥

एतौ हि परमं धाम काऽनयोराह्निकक्रिया ॥ १९

पितरौ सर्वभूतानां दैवतं च यशस्विनौ ।
कां देवतां तु यजतः पितॄन् वा कान् महा[2]मती ॥ २०

भीष्मः—

इति सञ्चिन्त्य मनसा भक्त्या नारायणस्य ह ।
सहसा प्रादुरभवत् समीपे देवयोस्तदा ॥ २१

कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः ।
पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः ॥ २२

तद्दृष्ट्वा महदाश्चर्यम् अपूर्वं विधिविस्तरम् ।

1. ख-ध—सकिन्नरमहोरगाः 2. ख—द्युतीन्

उपोपविष्टस्सुप्रीतो नारदो भगवानृषिः ॥ २३

नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना ।
नमस्कृत्य महादेवम् इदं वचनमब्रवीत् ॥ २४

नारदः—

वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ।
त्वमजश्शाश्वतो धाता [1]पिता माता च सत्तम ॥ २५

प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत् ।
चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ॥ २६

[2]यजन्ते त्वामहरहर् नानामूर्तिसमास्थितम् ।
पिता माता च सर्वेषां दैवतं त्वं च शाश्वतम् ॥ २७

कं च त्वं यजसे देवं पितरं कं नु मन्यसे ।
[3]कन्दर्प सुमहाभाग तन्मे ब्रूहीह पृच्छतः ॥ २८

श्रीभगवान्—

अवाच्यमेतद्वक्तव्यम् आत्मगुह्यं सनातनम् ।
तव भक्तिमतो ब्रह्मन् वक्ष्यामि तु यथातथम् ॥ २९

यत्तत् सूक्ष्ममविज्ञेयम् अव्यक्तमचलं ध्रुवम् ।
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥ ३०

---

1. ख-घ—विधाता मृत्युरुत्तमः
2. ख—अर्धेलयं नास्ति
3. अ-क—नास्तीदमर्धम्

स ह्यन्तरात्मा भूतानां क्षेत्रज्ञ इति कथ्यते ।
त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति शब्दितः ॥ ३१

तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।
अव्यक्ता व्यक्तभावस्था या सा प्रकृतिरव्यया ॥ ३२

तां योनिमावयोर्विद्धि [1]योऽसौ सदसदात्मकः ।
[2]आवाभ्यां पूज्यते सोऽथ दैवे पित्र्ये च कल्पिते ॥ ३३

नास्ति तस्मात् परोऽन्यो हि पिता देवोऽथ वा द्विज ।
आत्मा हि नौ स विज्ञेयस् ततस्तं पूजयावहे ॥ ३४

[3]तेनैषा कथिता ब्रह्मन् मर्यादा लोकभाविनी ।
दैवं पित्र्यं च कर्तव्यम् इति तस्यानुशासनम् ॥ ३५

ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपो दमः ।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥ ३६

वसिष्ठः परमेष्ठी च विवस्वान् सोम एव च ।
कर्दमश्चापि यः प्रोक्तः [4]एकतो द्वित एव च ॥ ३७

एकविंशतिरुत्पन्नास् ते प्रजापतयस्मृताः ।
तस्य देवस्य मर्यादां पूजयन्ति सनातनीम् ॥ ३८

---

1. ख—या सा सदसदात्मिका
2. ख—त्वया सम्पूज्यतेऽसौ हि
3. ख-ग—तेनैव स्थापिता
4. ख-ग—कृतो विकृतिरेव च

दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः ।
आत्मप्राप्तानि च ततो ज्ञानानि द्विजसत्तम ॥ ३९
स्वर्गस्था अपि ये केचित् तान् नमस्यन्ति देहिनः ।
ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलां गतिम् ॥ ४०
ये हीनास्सप्तदशभिर् गुणैः कर्मभिरेव च ।
कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः ॥ ४१
मुक्तानां तु गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्पितः ।
स हि सर्वगतिश्चैव निर्गुणश्चापि कथ्यते ॥ ४२
दृश्यते ज्ञानयोगेन आवां च प्रसृतौ ततः ।
एवं ज्ञात्वा तमात्मानं पूजयावस्सनातनम् ॥ ४३
तं वेदाश्चाश्रमाश्चैव नानातनुसमाश्रितम् ।
भक्त्या सम्यग्च्छ्रयन्त्वाद्यां गतिं चैषां दधाति सः ॥ ४४
ये तु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः ।
एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ॥ ४५
इति गुह्यसमुद्देशस् तव नारद कीर्तितः ।
भक्त्या प्रेम्णा च तस्यर्षेर् अस्मद्भक्त्या च ते श्रुतः ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
[ अस्मिन्नध्याये ४६ श्लोकाः ]

---

## ॥ द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥



बदरीनारायणाभ्यनुज्ञातेन नारदेन श्वेतद्वीपं प्रति गमनम् ॥ १ ॥ श्वेतद्वीपवर्णनम् ॥ २ ॥ भीष्मेण युधिष्ठिरं प्रति नारदोदितोपरिचरवसुचरितानुवादारम्भः ॥ ३ ॥ मरीच्यादिचित्रशिखण्डिभिर्नारायणानुग्रहेण स्वकृतधर्मशास्त्रस्य बृहस्पतौ स्थापनम् ॥ ४ ॥

---

भीष्मः—

स एवमुक्तो द्विपदां वरिष्ठो
नारायणेनोत्तमपूरुषेण ।
जगाद वाक्यं द्विपदां वरिष्ठं
नारायणं लोकहिताधिवासम् ॥ १

नारदः—

यदर्थमात्मप्रभवेह जन्म
तवोत्तमं धर्मगृहे चतुर्धा ।
तत् साध्यतां लोकहितार्थमद्य
गच्छामि द्रष्टुं प्रकृतिं तवाद्याम् ॥ २

वेदास्स्वधीता मम लोकनाथ
तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि
परस्य गुह्यं न च भिन्नपूर्वम् ॥ ३

गुप्तानि [1]चत्वारि यथागमं मे
शत्रौ च मित्रे च समोऽस्मि नित्यम् ।
तं चादिदेवं सततं प्रपन्न
एकान्तभावेन वृणोम्यजस्रम् ॥ ४

एभिर्विशेषैः परिशुद्धसत्त्वः
कस्मान्न पश्येयमनन्तमीशम् ॥ ४॥

भीष्मः—

तत् पारमेष्ठ्यस्य वचो निशम्य
नारायणस्सात्त्वतधर्मगोप्ता ।
गच्छेति तं नारदमुक्तवान् वै
सम्पूजयित्वा विधिवत् क्रियाभिः ॥ ५॥

ततो विसृष्टः परमेष्ठिपुत्रस्
सोऽभ्यर्चयित्वा तमृषिं पुराणम् ॥
खमुत्पपातोत्तम[2]योगयुक्तस्
ततोऽधिमेरौ सहसा निलिल्ये ॥ ६॥

तत्रावतस्थे च मुनिर्मुहूर्तम्
एकान्तमासाद्य गिरेस्स शृङ्गे ॥

1. ख—तत्त्वानि 2. ख-घ—वेग

आलोकयन्नुत्तरपश्चिमेन
[1]ददर्श चात्यद्भुतयुक्तरूपम् ॥ ७॥

क्षीरोदधेरुत्तरतो हि द्वीपश्
श्वेतस्स नाम्ना प्रथितो विशालः ।
मेरोस्सहस्रेण हि योजनानां
[2]शतत्रयाद्वै कविभिर्निरुक्तः ॥ ८॥

अनिन्द्रियाश्चानशनाश्च नित्यं
निष्पन्दहीनास्सुसुगन्धिनश्च ।
श्वेताः पुमांसो गतसर्वपापाश्
चक्षुर्मुषः पापकृतां [3]नराणाम् ॥ ९॥

वज्रास्थिकायास्समानोन्माना
दिव्यावयवरूपाश्शुभसारोपेताः ।
छत्राकृतिशीर्षा मेघौघनिनादास्
सममुष्कचतुष्का राजीवच्छदपादाः ॥ १०॥

---

1. अ-क—ततो ददर्शाद्भुतचित्ररूपम्
2. ख-घ—द्वात्रिंशदग्रे
4. ख—जनानाम्

[1]षष्ट्या दन्तैर्युक्ताश्शुक्लै-
रष्टाभिर्ये षष्ट्याभिश्च ।
जिह्वाभिर्ये वक्त्रं शुभ्रं
लेलिह्यन्ते सूर्यप्रख्यम् ॥ ११॥

भक्तादेवं विधिविशेषोत्पत्तिं
यस्मात् सर्वे लोकास्सम्प्रसूताः ।
वेदा धर्मा मुनयश्शान्ता
देवास्सर्वे तस्य विसर्गः* ॥ १२॥

युधिष्ठिरः—

[2]अनिन्द्रिया निराहारा अनिष्पन्दास्सुगन्धिनः ।
कथं ते पुरुषा जाताः का तेषां गतिरुत्तमा ॥ १३॥

ये [3]हि भक्ता भवन्तीह नरा भरतसत्तम । †
तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम् ॥ १४॥

---

1. ख-घ—षष्ट्या दन्तैर्युक्ताश्शुक्लैरष्टाभिश्चाभि
जिह्वाभिर्येऽवगन्यर्क्क लेलिह्यन्ते स्त्रियः प्राख्यम् ॥
भक्ता देवं विश्वोत्पन्नं
यस्मात् सर्वे लोकास्सम्प्रसूताः ।
नानारूपाः देवादयं धर्ममुनय-
श्शान्ता देवास्सर्वे नानासर्गाः ॥ [एवं पाठो वर्तते]

* ख-घ—कोशयोरत्रैवाध्यायसमाप्तिर्दृश्यते

2. घ—अतीन्द्रिया अनाहाराः

3. घ—विमुक्ता

† इतः परं ख—कोशे ग्रन्थो नोपलभ्यते, तालपत्रं त्रुटितं वर्तते

तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे ।
त्वं हि सर्वकथारामस् त्वां चैवोपाश्रिता वयम् ॥ १५॥

भीष्मः—

विस्तीर्णैषा कथा राजञ् श्रुता मे पितृसन्निधौ ।
सैषा तव हि वक्तव्या कथासारो हि स स्मृतः ॥ १६॥

[1]शन्तनोः कथयामास नारदो मुनिसत्तमः ।
राज्ञा पृष्टः पुरा प्राह तत्राहं श्रुतवान् पुरा ॥ १७॥

नारदः—

राजोपरिचरो नाम बभूवाधिपतिर्भुवः ।
आखण्डलसमः ख्यातो भक्तो नारायणं हरिम् ॥ १८॥

धार्मिको नित्यभक्तश्च पितुर्नित्यमतन्द्रितः ।
साम्राज्यं तेन सम्प्राप्तं नारायणवरात् पुरा ॥ १९॥

सात्त्वतं विधिमास्थाय प्राक्[2]सूर्यमुखनिस्सृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥ २०॥

पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः ।
शेषान्नभुक् सत्यपरस् सर्वभूतेष्वहिंसकः ॥ २१॥

सर्वभावेन भक्तस्स देवदेवं जनार्दनम् ।
अनादिमध्यनिधनं लोककर्तारमव्ययम् ॥ २२॥

---

1. अ-क—अर्धद्वयं नास्ति

2. घ—सूरिर्मुनिभिस्स्मृतः

तस्य नारायणे भक्तिं वहतोऽमित्रकर्शन ।
एकशय्यासनं शक्रो दत्तवान् देवराट् स्वयम् ॥ २३॥

आत्मराज्यं धनं चैव कलत्रं वाहनानि च ।
एतद्भागवतं सर्वम् इति तत्प्रेक्षितं सदा ॥ २४॥

काम्यनैमित्तिकाजस्रयाज्ञीयाः परमक्रियाः ।
सर्वास्सात्त्वतमास्थाय विधिं चक्रे समाहितः ॥ २५॥

पाञ्चरात्रविदो मुख्यास् तस्य गेहे महात्मनः ।
प्रापणं भगवद्भुक्तं भुञ्जते चाऽग्रभोजनम् ॥ २६॥

तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक् समभवन्मनो दुष्टं न चाभवत् ॥ २७॥
न च कायेन कृतवान् स पापं परमण्वपि ॥ २८

ये हि ते मुनयः ख्यातास् [1]सर्वे चित्रशिखण्डिनः ।
[2]तैरेकमतिभिर्भूत्वा यत् प्रोक्तं शास्त्रमुत्तमम् ॥ २९

वेदैश्चतुर्भिस्समितं कृतं मेरौ महागिरौ ।
आस्यैस्सप्तभिरुद्गीतं लोकधाम ह्यनुत्तमम् ॥ ३०

मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजा एते चित्रशिखण्डिनः ॥ ३१

---

1. घ—सप्त  2. घ—अर्धपञ्चकं नास्ति

सप्त प्रकृतयो ह्येतास् तथा स्वायम्भुवोऽष्टमः ।
एताभिर्धार्यते लोकस् ताभ्यश्शास्त्रं विनिस्सृतम् ॥ ३२
एकाग्रमनसो दान्ता मुनयस्संयमे रताः ॥ ३२॥

इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान् विचिन्त्य मनसा ततश्शास्त्रं प्रचक्रिरे ॥ ३३॥

तत्र धर्मार्थकामा हि मोक्षः पश्चाद्धि कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥ ३४॥

आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं [1]ते तस्थुः पवनपा द्विजाः ॥ ३५॥

नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तानृषीन् सर्वाँल्लोकानां हितकाम्यया ॥ ३६॥

ततः प्रवर्तिता सम्यक् क्रियाविद्भिर्द्विजातिभिः ।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ॥ ३७॥

आदावेव हि तच्छास्त्रम् ओङ्कारस्वरभूषितम् ।
ऋषिभिश्श्रावितं तत्र यत्र कारुणिको ह्यसौ ॥ ३८॥

ततः प्रसन्नो भगवान् अनिर्दिष्टशरीरगः ।
ऋषीनुवाच तान् सर्वान् अदृश्यः पुरुषोत्तमः ॥ ३९॥

---

1. घ—वै समस्तैर्मुनिभिस्सह

श्रीभगवान्—

कृतं शतसहस्रं हि श्लोकानामिदमुत्तमम् ।
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रपत्स्यते ॥ ४०॥

प्रवृत्तौ च निवृत्तौ च योनिरेतद्भविष्यति ।
ऋग्यजुस्सामभिर्जुष्टम् अथर्वाङ्गिरसैस्तथा ॥ ४१॥

यथाप्रमाणं च मया कृतो ब्रह्मा प्रसादजः ।
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा ॥ ४२॥

सूर्याचन्द्रमसौ चात्र भूमिरापोऽग्निरेव च ।
सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ॥ ४३॥

अधिकारेषु वर्तन्ते यथास्वं ब्रह्मवादिनः ।
सर्वे प्रमाणं हि यथा तथा तच्छास्त्रमुत्तमम् ॥ ४४॥

[1]भविष्यति प्रमाणं वै एतन्मदनुशासनम् ।
अस्मात् प्रवक्ष्यते धर्मान् मनुस्स्वायम्भुवस्स्वयम् ॥ ४५॥

उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
ततः प्रवक्ष्यतश्शास्त्रं [2]युष्मन्मतिभिरन्वितम् ॥ ४६॥

स्वायम्भुवेषु शास्त्रेषु शास्त्रे चोशनसा कृते ।
बृहस्पतिमते चैव लोकेषु प्रविचारिते ॥ ४७॥

---

1. अ-क-ख—नास्तीदमर्धम्
2. घ—इतष्षट् पादा न सन्ति

युष्मत्कृतमिदं शास्त्रं [1]लोकपालो वसुस्ततः ।
बृहस्पतिसकाशाद्वै प्राप्स्यते द्विजसत्तमाः ॥ ४८॥

स हि मद्भावितो राजा मद्भक्तश्च भविष्यति ।
तेन शास्त्रेण लोकेषु क्रियास्सर्वाः करिष्यति ॥ ४९॥

एतद्धि सर्वशास्त्राणां [2]शास्त्रमुत्तमसंज्ञितम् ।
एतदर्थ्यं च धर्म्यं च यशस्यं चैतदुत्तमम् ॥ ५०॥

अस्य प्रवर्तनाच्चैव प्रजावन्तो भविष्यथ ।
स च राजा श्रिया युक्तो भविष्यति महान् वसुः ॥ ५१॥

संस्थिते नृपतौ तस्मिन् शास्त्रमेतत् सनातनम् ।
अन्तर्धास्यति तत् सर्वम् एतद्वः कथितं मया ॥ ५२॥

भीष्मः—

एतावदुक्त्वा वचनम् ईश्वरः पुरुषोत्तमः ।
विसृज्य तानृषीन् सर्वान् कामपि प्रसृतो दिशम् ॥ ५३॥

ततस्ते लोकपितरस् सर्वलोकार्थचिन्तकाः ।
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् ॥ ५४॥

उत्पन्नेऽङ्गिरसे चैव युगे प्रथमकल्पिते ।
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ॥ ५५॥

---

1. घ—प्रजा
2. घ—शास्त्रं सारमनुत्तमम्

जग्मुर्यथेप्सितं देशं तपसे कृतनिश्चयाः ।
धारणात् सर्वलोकानां सर्वो धर्मः प्रवर्तते ॥ ५६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुस्सप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥
[ अस्मिन्नध्याये ५६॥ श्लोकाः ]

## ॥ त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥

बृहस्पतिना उपरिचरवसोर्याजनम् ॥ २ ॥ तत्र श्रीहरिणा परोक्षतया भागग्रहणात्क्रुद्धं बृहस्पतिं प्रति एकतादिभिः श्वेतद्वीपवर्णनपूर्वकं भगवन्महिमोक्त्या परिसान्त्वनम् ॥ २ ॥

भीष्मः—

ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसस्सुते ।
बभूवुर्मुदिता देवास् तदा देवपुरोहिते ॥ १

बृहद्ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः ।
एभिस्समन्वितो राजन् गुणैर्विद्वान् बृहस्पतिः ॥ २

तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः ।
अधीतवांस्तदा शास्त्रं सम्यक् चित्रशिखण्डिजम् ॥ ३

स राजा भावितः पूर्वं दैवेन विधिना नृपः ।

पालयामास पृथिवीं दिवमाखण्डलो यथा ॥ ४
तस्य यज्ञो महानासीद् अश्वमेधो महात्मनः ।
बृहस्पतिरुपाध्यायस् तत्र होता बभूव ह ॥ ५
धनुषाक्षोऽथ रैभ्यश्च त्ववावसुपरावसू ।
ऋषिर्मेधातिथिश्चैव ताण्ड्यश्चैव महानृषिः ॥ ६
ऋषिश्शक्तिर्महाभागस् तथा वेदशिराश्च यः ।
कपिलश्च मुनिश्रेष्ठश् शालिहोत्रपितामहः ॥ ७
आद्यकारस्तैत्तिरिश्च वैशम्पायनपूर्वजः ।
कण्वोऽथ देवहोत्रश्च एते षोडश कीर्तिताः ॥ ८
प्रजापतिसुताश्चात्र सदस्याश्चाभवंस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ॥ ९
सम्भृतास्सर्वसम्भारास् तस्मिन् राज्ञो महाक्रतौ ।
न तत्र पशुघातोऽभूत् स राजा विस्मितो ह्यभूत् ॥ १०
अहिंसारतिरक्षुद्रो निराशीःकर्मसंस्थितः ।
आरण्यकपदोद्गीता भागास्तत्र प्रकल्पिताः ॥ ११
प्रीतस्ततोऽस्य भगवान् देवदेवः पुरातनः ।
साक्षात् तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ॥ १२
स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् ।
अदृश्येन हृते भागे देवेन हरिमेधसा ॥ १३

बृहस्पतिस्ततः क्रुद्धस् स्रुवमुद्यम्य वेगितः ।
आकाशे स्रुक्स्रुवौ क्षिप्त्वा स रोषादभ्यवर्तत ॥ १४

उवाच चोपरिचरं मया भागोऽयमुद्यतः ।
ग्राह्यस्स्वयं हि देवेन मत्प्रत्यक्षं न संशयः ॥ १५

उद्यता यज्ञभागा हि साक्षात् प्राप्तास्सुरैरिह ।
किमर्थमिह न प्राप्तो दर्शनं मे हरिर्नृप ॥ १६

ततस्स तं समुद्भूतं भूमिपालो महान् वसुः ।
प्रसादयामास मुनिं सदस्यास्ते च सर्वशः ॥ १७

वसुः—

हुतस्त्वया वदानीह पुरोडाशस्य यावती ।
गृहीतो देवदेवेन मत्प्रत्यक्षं न संशयः ॥ १८

भीष्मः—

इत्येवमुक्ते वसुना सरोषश्चाब्रवीद्गुरुः ॥ १८॥

बृहस्पतिः—

न यजेयमहं चात्र परिभूतस्त्वयाऽनघः ।
त्वया पशुर्वारितोऽयं कृतः पिष्टमयः पशुः ॥ १९॥

त्वं देवं पश्यसे नित्यं न पश्येयमहं कथम् ॥ २०

वसुः—

पशुहिंसा वारिता च यजुर्वेदादिमन्त्रतः ।
अहं निवारये हिंसां द्रक्ष्याम्येकान्तिको हरिम् ॥ २१

तस्मात् कोपो न कर्तव्यो भवता करुणा मयि ॥ २१॥

भीष्मः—

वसुमेवं ब्रुवाणं तु क्रुद्ध एव बृहस्पतिः ।
उवाच ऋत्विजश्चैव किं नः कर्मेति वारयन् ॥ २२॥

अथैकतो द्वितश्चैव त्रितश्चैव महर्षयः ।
ऊचुश्चैनमसम्भ्रान्ता न रोषं कर्तुमर्हसि ॥ २३॥

शृणु त्वं वचनं पुत्र अस्माभिस्समुदाहृतम् ।
नष धर्मः कृतयुगे यस्त्वं रोषमिहाकृथाः ॥ २४॥

अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः ।
न स शक्यस्त्वया द्रष्टुम् अस्माभिर्वा बृहस्पते ॥ २५॥
यस्य प्रसादं कुरुते स हि तं द्रष्टुमर्हति ॥ २६

वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्तिताः ।
गता निश्श्रेयसार्थं हि कदाचिद्दिशमुत्तराम् ॥ २७

तप्त्वा वर्षसहस्राणि चत्वारि तप उत्तमम् ।
एकपादस्थितास्सन्तः काष्ठभूतास्समाहिताः ॥ २८

मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः ।
स देशो यत्र नस्तप्तं तपः परमदारुणम् ॥ २९

कथं पश्येमहि वयं देवं नारायणं प्रभुम् ॥ २९॥

अथ व्रतस्यावभृथे वागुवाचाशरीरिणी ॥ ३०

अशरीरवाक्—

सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना ।
यूयं जिज्ञासवो भूत्वा कथं द्रक्ष्यथ तं प्रभुम् ॥ ३१

क्षीरोदधेरुत्तरतश् श्वेतद्वीपो महाप्रभः ।
तत्र नारायणपराः पुरुषाश्चन्द्रवर्चसः ॥ ३२

एकान्तभावोपगतास् ते भक्ताः पुरुषोत्तमाः ।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥ ३३

[1]अनिन्द्रिया निराहारा अनिष्पन्दास्सुगन्धिनः ।
एकं दिनं ते पुरुषाश् श्वेतद्वीपनिवासिनः ॥ ३४

गच्छन्तु तत्र मुनयस् तत्रात्मा मे प्रकाशितः ॥ ३४॥

एकतादयः—

अथ श्रुत्वा वचस्सर्वे तेजसा तस्य मोहिताः ।
ततो नो दृष्टिविषये तदा प्रतिगतोऽभवत् ॥ ३५॥

न च पश्याम पुरुषं तत्तेजोहृतदर्शनाः ॥ ३६

ततो नः प्रादुरभवद् विज्ञानं देवयोगजम् ।
न किलातप्ततपसा शक्यते द्रष्टुमञ्जसा ॥ ३७

ततः पुनर्वर्षशतं तप्त्वा तात्कालिकं महत् ।

1. ब—अतीन्द्रिया अनाहारा

व्रतावसाने सुशुभान् नरान् पश्यामहे वयम् ॥ ३८
श्वेतांश्चन्द्रप्रभान् साध्यान् सर्वलक्षणलक्षितान् ।
नित्याञ्जलिकृतान् ब्रह्म जपतः प्रागुदङ्मुखान् ॥ ३९
मानसो नाम स जपो जप्यते तैर्महात्मभिः ।
तेनैकाग्रमानसेन प्रीतो भवति वै हरिः ॥ ४०
यावन्त्यो मुनिशार्दूल भास्सूर्यस्य युगक्षये ।
एकैकस्य प्रभा तादृक् साऽभवन्मानवस्य हि ॥ ४१
तेजोनिवासस्स द्वीप इति वै मन्महे वयम् ।
न तत्राभ्यधिकः कश्चित् सर्वे ते समतेजसः ॥ ४२
अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम् ।
सहसा दृष्टवन्तस्स्म पुनरेव बृहस्पते ॥ ४३
सहिताश्चाभिधावन्तस् ततस्ते मानवा ध्रुवम् ।
कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः ॥ ४४
ततो हि वदतां तेषाम् अश्रौष्म विपुलं ध्वनिम् ।
बलिः किलोपह्रियते तस्य देवस्य तैर्नरैः ॥ ४५
वयं तु तेजसा तस्य सहसा नष्टचेतसः ।
न किञ्चिदिह पश्यामो हतदृष्टिबलेन्द्रियाः ॥ ४६
एकस्तु विततश्शब्दश् श्रुतोऽस्माभिरुदीरितः ।
आकाशं पूरयन् सर्वं शिक्षाक्षरसमन्वितः ॥ ४७

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ ४८

इति शब्दश्श्रुतोऽस्माभिश् शिक्षाक्षरसमन्वितः ॥ ४८॥

एतस्मिन्नन्तरे वायुस् सर्वगन्धवहश्शुचिः ।
दिव्यान्युवाह पुष्पाणि कर्मण्याश्चौषधीस्तदा ॥ ४९॥

यैरिष्टः पञ्चकालज्ञैर् हरिरेकान्तिभिर्नरैः ।
नूनं तत्रागतो देवो यथा तैर्वागुदीरिता ॥ ५०॥

वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ॥ ५१

मारुते सन्निवृत्ते च बलौ च प्रतिपादिते ।
[1]चिन्ताव्याकुलितात्मानो जातास्मोऽङ्गिरसां वर ॥ ५२

मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु ।
अस्मान् न कश्चिन्मनसा चक्षुषा वाऽप्यपूजयत् ॥ ५३

ते हि स्वस्था मुनिगणा एकं भावमनुव्रताः ।

---

1. घ—भीष्मः—

ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसस्सुते ।
बभूवुर्मुदिता देवास् ततो देवपुरोहिते ॥
बृहद्ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः ।
एभिस्समन्वितो राजन् गुणैर्विद्वान् बृहस्पतिः ॥
वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ।
मारुते सन्निवृत्ते च बले च प्रतिपेदिरे ॥ [अधिकः पाठः]

नास्मासु दधिरे भावं ब्रह्मवाचमनुष्ठिताः ॥ ५४

ततोऽस्मान् सुपरिश्रान्तांस् तपसा चापि कर्शितान् ।
उवाच खस्थं किमपि भूतं तत्राशरीरकम् ॥ ५५

अशरीरवाक्—

दृष्टा वः पुरुषाश्श्वेताः पञ्चेन्द्रियविवर्जिताः ।
दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमाः ॥ ५६

गच्छध्वं मुनयस्सर्वे यथागतमितोऽचिरात् ।
न स शक्यो ह्यभक्तेन द्रष्टुं देवः कथञ्चन ॥ ५७

कामं कालेन महता एकान्तित्वं समास्थितैः ।
शक्यो द्रष्टुं स भगवान् प्रभामण्डलदुर्दृशः ॥ ५८

महत् कार्यं तु कर्तव्यं युष्माभिर्द्विजसत्तमाः ।
इतः कृतयुगेऽतीते विपर्यासं गतेऽपि च ॥ ५९

वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे ततः ।
सुराणां कार्यसिद्ध्यर्थं सहाया वा भविष्यथ ॥ ६०

एकतादयः—

ततस्तदद्भुतं वाक्यं निशम्यैव सुराधिपात् ।
तस्य प्रसादात् प्राप्तास्स्मो देशमीदृशमञ्जसा ॥ ६१

एवं सुतपसा चैव हव्यकव्यैस्तथैव च ।
देवोऽस्माभिर्न दृष्टस्स त्वं कथं द्रष्टुमर्हसि ॥ ६२

नारायणो महद्भूतं विश्वसृग्घव्यकव्यभुक् ॥ ६२॥

भीष्मः—

एवमेवोक्तवाक्येन द्वितत्रितमतेन च ।

अनुनीतस्सदस्यैश्च बृहस्पतिरुदारधीः ॥ ६३॥

समाप्य च ततो यज्ञं देवं तं समपूजयत् ॥ ६४

समाप्तयज्ञो राजर्षिः प्रजां पालितवान् वसुः ।

ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं तदा ॥ ६५

अन्तर्भूमिगतश्चैव सततं धर्मवत्सलः ॥ ६५॥

नारायणपरो भूत्वा नारायणपदं जपन् ।

तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः ॥ ६६॥

महीतलाद्गतस्स्थानं ब्रह्मणस्तदनन्तरम् ।

परां गतिमनुप्राप्त इति नैष्ठिकमञ्जसा ॥ ६७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥
[ अस्मिन्नध्याये ६७॥ श्लोकाः ]

---

## ॥ चतुर्विंशत्यधिकात्रिशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति उपरिचरवसोः शापप्राप्तितद्विमोचनप्रकार-कथनम् ॥

युधिष्ठिरः—

यदा भक्तो भगवत आसीद्राजा महान् वसुः ।
किमर्थं स परिभ्रष्टो विवेश विवरं भुवः ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ऋषीणां चैव संवादं त्रिदशानां च भारत ॥ २

इयं वै कर्मभूमिर्हि स्वर्गो भोगाय कल्पितः ।
तस्मादिन्द्रो महीं प्राप्य यजमानस्तु दीक्षितः ॥ ३

सवनीयपशोः काल आगते तु बृहस्पतिः ।
पिष्टमानीयतामत्र पश्वर्थमिति भाषत ॥ ४

तच्छ्रुत्वा देवतास्सर्वा इदमूचुर्द्विजोत्तमम् ।
बृहस्पतिं मांसपुष्टाः पृथक् पृथगरिन्दम ॥ ५

अजेन यष्टव्यमिति देवाः प्राहुर्द्विजोत्तमम् ।
स च छागो ह्यजो ज्ञेयो नान्यः पशुरिति स्मृतः ॥ ६

ऋषयः—

[1]बीजैर्यज्ञेषु यष्टव्यम् इति वै वैदिकी श्रुतिः ।
अजसंज्ञानि बीजानि भागं तस्य महात्मनः ॥ ७
नैष धर्मस्सतां देवा यत्र वध्येत वै पशुः ।
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ॥ ८
युष्माकमजरा बुद्धिर् ह्यजो बीजं तदुच्यते ॥ ८॥

भीष्मः—

तेषां संवदतामेव ऋषीणां विबुधैस्सह ।
मार्गागतो नृपश्रेष्ठस् तं देशं प्राप्तवान् वसुः ॥ ९॥
अन्तरिक्षचरश्श्रीमान् समग्रबलवाहनः ।
तं दृष्ट्वा सहसाऽऽयान्तं वसुं ते त्वन्तरिक्षगम् ॥ १०॥
ऊचुर्द्विजातयो देवा एष च्छेत्स्यति संशयम् ।
यज्वा दानपतिश्श्रेष्ठस् सर्वभूतहिते रतः ॥ ११॥
कथंस्विदन्यथा ब्रूयाद् वाक्यमेष महान् वसुः ॥ १२
एवं ते संविदं कृत्वा ऋषयो विबुधास्तथा ।
अपृच्छन् सहसाऽभ्येत्य वसुं राजानमन्तिकात् ॥ १३

देवर्षयः—

भो राजन् केन यष्टव्यम् अजेन किमथौषधैः ।

1. घ—अजै

एतन्नस्संशयं छिन्धि प्रमाणं नो भवान् मतः ॥ १४

भीष्मः—

स तान् कृताञ्जलिर्भूत्वा पर्यपृच्छन्न वै वसुः ।
कस्य वा को मतः पक्षो ब्रूत सत्यं समागताः ॥ १५

ऋषयः—

धान्यैर्यष्टव्यमित्येष पक्षोऽस्माकं नराधिप ।
देवतानां तु पशुभिः पक्षो राजन् वदस्व नः ॥ १६

भीष्मः—

देवानां तु मतं श्रुत्वा वसुना पक्षसंश्रयात् ।
छागेनाजेन यष्टव्यम् एवमुक्तं वचस्तदा ॥ १७

कुपितास्ते तदा सर्वे मुनयस्सूर्यवर्चसः ।
ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् ॥ १८

ऋषयः—

सुरपक्षो गृहीतस्ते यस्मात् तस्माद्दिवः पत ।
अद्यप्रभृति ते राजन्नाकाशे विहता गतिः ॥ १९

अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि ।
विरुद्धं वेदसूत्राणाम् उक्तं यदि भवेन्नृप ॥ २०

वयं विरुद्धवचना यदि तत्र पतामहे ॥ २०॥

भीष्मः—

ततस्तस्मिन् मुहूर्ते तु राजोपरिचरस्तथा ।

अधो वै सम्बभूवाशु भूमेर्विवरगो नृपः ॥ २१॥
स्मृतिं तु नैव प्रजहौ तदा नारायणाज्ञया ॥ २२
देवाश्च सहितास्सर्वे वसोश्शापविमोक्षणम् ।
चिन्तयामासुरव्यग्रास् सुकृतं हि नृपस्य नः ॥ २३
अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना ।
अस्य प्रतिप्रियं कार्यं स हि धर्मो दिवौकसः ॥ २४
इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वरम् ।
ऊचुस्तं हृष्टमनसो राजोपरिचरं तदा ॥ २५

देवाः—

ब्रह्मण्यं दैवतं गच्छ सुरासुरगुरुं हरिम् ।
कामं स तव तुष्टात्मा कुर्याच्छापविमोक्षणम् ॥ २६
मानना तु द्विजातीनां कर्तव्या नु महात्मनाम् ।
अवश्यं तपसा तेषां फलितव्यं नृपोत्तम ॥ २७
विरुद्धं वेदसूत्राणां न वक्तव्यं हितार्थिना ।
यतस्त्व सहसा दृष्ट्वा आकाशान्मेदिनीतलम् ॥ २८
अस्मत्पक्षनिमित्तं ते व्यसनं प्राप्तमीदृशम् ।
एकं त्वनुग्रहं तुभ्यं कुर्मो वै नृपसत्तम ॥ २९
यावत्त्वं शापदोषेण कालमीक्ष्यावतिष्ठसे ।
भूमेर्विवरगो भूत्वा तावन्तं कालमाप्स्यसि ॥ ३०

यज्ञेषु सुहुतां विप्रैर् वसोर्धारां महात्मभिः ।
प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिराविशेत् ॥ ३१
न क्षुत्पिपासे राजेन्द्र भूमिच्छिद्रे भविष्यतः ॥ ३१॥
वसोर्धारानुपीतत्वात् तेजसाऽप्यायितेन च ।
स देवोऽस्मद्वरात् प्रीतो ब्रह्मलोकं हि नेष्यति ॥ ३२॥

भीष्मः—

एवं दत्त्वा वरं जग्मुस् सर्वे तत्र दिवौकसः ।
क्रतुं समाप्य पिष्टेन मुनीनां वचनात् तदा ॥ ३३॥
गत्वा स्वभवनं देवा ऋषयश्च तपोधनाः ।
गृहीत्वा दक्षिणां सर्वे गतास्स्वानाश्रमान् प्रति ॥ ३४॥
वसुं विसृज्य शक्रश्च प्रविवेशामरावतीम् ।
वसुर्विवरगस्तत्र व्यलीकस्य फलाद्गुरोः ॥ ३५॥
चक्रे च सततं पूजां विष्वक्सेनाय भारत ।
जपञ् जगौ च सततं नारायणमुखोद्गतम् ॥ ३६॥
ततोऽपि पञ्चभिर्यज्ञैः पञ्चकालानरिन्दम ।
अयजद्धरिं तु सगुरुर् भूमेर्विवरगो वसुः ॥ ३७॥
ततोऽस्य तुष्टो भगवान् भक्त्या नारायणो हरिः ।
अनन्यभक्तस्य सतस् तत्परस्य जितात्मनः ॥ ३८॥
वरदो भगवान् विष्णुस् समीपस्थं द्विजोत्तमम् ।

गरुत्मन्तं महाभागम् आबभाषे स तं तदा ॥ ३९॥

श्रीभगवान्—

द्विजोत्तम महाभाग गम्यतां वचनान्मम ।
सम्राड्राजा वसुर्नाम धर्मात्मा संशितव्रतः ॥ ४०॥

ब्राह्मणानां प्रकोपेन प्रविष्टो वसुधातलम् ।
मानितास्ते न विप्रेन्द्रास् त्वं तु गच्छ द्विजोत्तम ॥ ४१॥

भूमेर्विवरगं गुप्तं गरुडेह ममाज्ञया ।
अधश्चरं नृपश्रेष्ठं खेचरं कुरु मा चिरम् ॥ ४२॥

भीष्मः—

गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् ।
विवेश विवरं भूमेर् यत्रास्ते वाग्यतो वसुः ॥ ४३॥

तत एनं समुत्क्षिप्य सहसा विनतासुतः ।
उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत ॥ ४४॥

तस्मिन् मुहूर्ते सञ्जज्ञे राजोपरिचरः पुनः ।
सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः ॥ ४५॥

एवं तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया ॥
प्राप्ता गतिर[1]यज्वार्हा द्विजशापान्महात्मना ॥ ४६॥

केवलं पुरुषस्तेन सेवितो हरिरीश्वरः ।

1. घ—यज्ञार्हा

ततश्शीघ्रं जहौ पापं ब्रह्मलोकमवाप च ॥ ४७॥

एतत्ते सर्वमाख्यातं सम्भूता मानवा यथा ।
नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः ॥ ४८॥

तत्ते सर्वं प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
[अस्मिन्नध्याये ४९ श्लोकाः]

---

## ॥ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति बहुनामभिर्नारदकृतश्वेतद्वीपगतभगवत्स्तोत्रानुवादः ॥



भीष्मः—

प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव नराञ् श्वेतांश्चन्द्रप्रभाञ् शुभान् ॥ १

पूजयामास शिरसा मनसा तैश्च पूजितः ।
[1]दिदृक्षुर्जपपरस्सर्वं श्वेताम्बरधरं हरिम् ॥ २

---

1. ब—दिदृक्षवो जपपराश् श्वेताम्बरधरं हरिम् ।

भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुर्महामुनिः ।
स्तोत्रं जगौ समाश्वास्य निर्गुणाय[1] गुणात्मने ॥ ३

नारदः—

ओं नमस्ते देवदेवेश निष्क्रिय निर्गुण लोकसाक्षिन् क्षेत्रज्ञ-अनन्तपुरुष त्रिगुणप्रधान [2]अमृताख्य अमृत [3]व्योमन् सनातन सदसद्व्यक्ताव्यक्त त्रिधामपूर्व आदिदेव वसुप्रद प्रजापते वाक्पते वनस्पते [4]दिवस्पते पृथिवीपते दिक्पते दीक्षापते वयस्पते पूर्वनिवास ब्रह्मपते पुरोहित ब्रह्मरुद्रकायिक महाराजिक चातुर्महाराजिक भास्वर भास्वरसत्तम महाभास्वरधाम महाधाम तुषित [5]महातुषित संज्ञासंज्ञ व्रतदानपरिवृत्तावशवर्तिन् अपरिनिर्मित वशवर्तिन् [6]यज्ञ महायज्ञ असंयज्ञ यज्ञसम्भव यज्ञयोने यज्ञगर्भ यज्ञसूदन यज्ञसाधन यज्ञसाङ्ख्ययोग अमृतेशय हिरण्येशय देवेशय त्रिदशेशय पृष्ठेशय पद्मेशय विश्वेश्वर हिरण्यगर्भस्त्वं [7]जगत्प्रकृतिस्त्वाग्निरास्यं बडबामुखोऽग्निस्त्वमाहुतिः सारथिस्त्वं वषट्कारस्त्वमोंकारस्त्वं मनस्त्वं चन्द्रमास्त्वं चक्षुराद्यस्त्वं

---

1. ब—महात्मने
2. (अमृताख्येतिपदं न बकोशे)
3. अ—व्योम
4. ब—रमापते [इति पाठान्तरम्]
5. क-ब—तुषित ("महत्" पदं न)
6. अ—परिनिर्मितवशवर्तिन् [अधिकः पाठः]
7. ब—गयस्त्वं [अधिकः पाठः]

सूर्यस्त्वं दिशाङ्गजस्त्वं दिग्भानो विदिग्भानो हयशिरः प्रथमत्रिसौपर्णरयण पञ्चाग्ने त्रिणाचिकेत षडङ्गविधान प्राग्जोतिष्क [1]ज्येष्ठसामग मचर अथर्वशिर पञ्चमहाकल्प फेनपाचार्य वालखिल्य वैखानस विखानसाचार्य अभग्नयोग अभग्नपरिसंख्यान युगादे युगमध्य युगल युगनिधनाखण्डल प्राचीनगर्भ कौशिक पुरुहूत [2]पुरुष्टुत विश्वहुत विश्वस्तुत विश्वरूप विश्वस्मृत अनन्तगतेऽनन्तभोग अनन्तदान अनन्तमाय अनन्त अनादिमध्या[3]ऽव्यक्तनिधन व्रतावास समुद्राधिवास तपोवास यशोवास विद्यावास लक्ष्म्यावास [4]कान्त्यावास श्रीनिवास श्रीवास सर्वावास वासुदेव सर्वच्छन्दोगत हरिहय हरिजीव हरिमेध महायज्ञ [5]भागभव रतिप्रद दमनीय [6]यम नियम महानियम कृच्छ्रातिकृच्छ्र सर्वकृच्छ्र नियमनिवृत्तिधर्मप्रवचनगौरववृत्ते देवक्रिय सर्वगत सर्वदर्शिन् अग्राह्याचलमहाविभूते माहात्म्यशरीर पवित्र महापवित्र हिरण्मय ब्रह्म[7]व्रताकर्तृ अविज्ञेय पृश्निगर्भ ब्रह्माग्र्य प्रजासर्गप्रजानिधनकर महामायाधर चित्रशिखण्डिन्

---

1. घ—सामजङ्गमचर
2. घ—पुरुष्टुत विश्वहुत ; इति पदद्वयं न
3. क—अऽव्यक्तमध्य [ इत्यधिकः पाठः ]
4. क—कीर्तिवास ; घ—कीर्त्यावास [ अधिकः पाठः ]
5. क-घ—महाभाग
6. (यम नियमेति पदद्वयं घकोशे न)
7. घ—व्रतकृत्य

वरप्रद पुरोडाश पुरोडाशभाग चिरगताध्वन् छिन्नतृष्ण छिन्नसंशय सर्वभूतानुवृत्तब्रह्मरूप ब्राह्मणप्रिय विश्वमूर्ते महामूर्ते बान्धव भक्तवत्सल ब्रह्मण्यदेवेशदेव भक्त्येह त्वां दिदृक्षुरेकान्तदर्शनायेत्यों नमः ॥ ४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥
[ अस्मिन्नध्याये ३ श्लोकाः १ वाक्यम् ]

---

## ॥ षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति नारदाय श्वेतद्वीपस्थहर्युक्तस्वकृतसृष्टिप्रकारानुवादः ॥

---

भीष्मः—

एवं स्तुतस्स भगवान् गुह्यैस्तथ्यैश्च नामभिः ।
भगवान् विश्वसृक् सिंहस् सर्वमूर्तिमयः प्रभुः ॥ १

तं मुनिं दर्शयामास नारदं विश्वरूपधृक् ।
किञ्चिच्चन्द्रविशेषात्मा किञ्चिच्चन्द्रविशेषवान् ॥ २

किञ्चित्कृशानुवर्णश्च [1]किञ्चिद्धिष्ण्याकृतिप्रभः ।

---

1. क—किञ्चिद्धिष्ण्या (किंचित्कृष्णा)

शुकवर्णस्त्रिवर्णश्च किञ्चित् स्फटिकसन्निभः ॥ ३
नीलाञ्जनचयप्रख्यो जातरूपनिभः क्वचित् ।
प्रवालाङ्कुरवर्णश्च श्वेतवर्णः क्वचिद्बभौ ॥ ४
क्वचित् सुवर्णवर्णाभो वैडूर्यसदृशच्छविः ।
नीलवैडूर्यसदृश इन्द्रनीलनिभः क्वचित् ॥ ५
मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित् ।
एतान् वर्णान् बहुविधान् रूपैर्बिभ्रत् सनातनः ॥ ६
सहस्रनयनश्श्रीमाञ् छतशीर्षस्सहस्रपात् ।
सहस्रोदरबाहुश्च अव्यक्त इव च क्वचित् ॥ ७
ओङ्कारमुद्गिरन् वक्त्रात् सावित्रीं च तदन्वयाम् ।
शेषेभ्यश्चैव वक्त्रेभ्यश् चतुर्वेदोद्गतं वसु ॥ ८
आरण्यकं जगौ देवो हरिर्नारायणो वशी ॥ ८॥
वेदिं कमण्डलुं दर्भान् मणिरूपानथो ध्रुवान् ।
अजिनं दण्डकाष्ठं च ज्वलितं च हुताशनम् ॥ ९॥
धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा ॥ १०
तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः ।
आहूतः प्रयतो भूत्वा ववन्दे परमेश्वरम् ॥ ११
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ॥ ११॥

श्रीभगवान्—

एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ॥ १२॥

न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्येकान्तिकश्रेष्ठात् त्वं चैवैकान्तिको मतः ॥ १३॥

ममैतास्तनवश्श्रेष्ठा जाता धर्मभृतो द्विज ।
तास्त्वं भजस्व सततं साधयस्व यथागतम् ॥ १४॥

वरं वृणीष्व विप्रेन्द्र मत्तस्त्वं यदिहेच्छसि ।
प्रसन्नो हि तवात्मानं विश्वमूर्तिमिहाव्ययम् ॥ १५॥

नारदः—

अद्य मे तपसो देव यमस्य नियमस्य च ।
सद्यः फलमवाप्तं वै दृष्टोऽसि भगवान् मया ॥ १६॥

वर एष ममात्यन्तं दृष्टस्त्वं यत् सनातनः ।
भगवन् विश्वदृक् सिंहस् सर्वमूर्तिर्महान् प्रभुः ॥ १७॥

भीष्मः—

एवं सन्दर्शयित्वा तु नारदं परमेष्ठिजम् ।
उवाच वचनं भूयो गच्छ नारद मा चिरम् ॥ १८॥

इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः ।
एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति ॥ १९॥

सिद्धाश्चैते महाभागा नराश्चैकान्तिनोऽभवन् ।
तमोरजोभ्यां निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् ॥ २०॥

न दृश्यश्चक्षुषा योऽसौ न स्पृश्यस्स्पर्शनेन च ।
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ॥ २१॥

सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै ।
यश्च सर्वगतस्साक्षी लोकस्यात्मेति कथ्यते ॥ २२॥

भूतग्रामशरीरेषु नश्यत्सु न विनश्यति ।
अजो नित्यश्शाश्वतश्च निर्गुणो निष्कलस्तथा ॥ २३॥

द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातोऽयं पञ्चविंशकः ।
पुरुषो निष्क्रियश्चैव [1]ज्ञानदृश्यश्च कथ्यते ॥ २४॥

यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ।
स वासुदेवो विज्ञेयः परमात्मा सनातनः ॥ २५॥

पश्य देवस्य माहात्म्यं महिमानं च नारद ।
शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन ॥ २६॥

सत्त्वं रजस्तमश्चेति गुणानेतान् प्रचक्षते ।
एते सर्वशरीरेषु तिष्ठन्ति विचरन्ति च ॥ २७॥

एतान् गुणांस्तु क्षेत्रज्ञो भुङ्क्ते तैर्न स भुज्यते ।
निर्गुणो गुणभृच्चैव गुणस्रष्टा गुणाधिकः ॥ २८॥

---
1. अ-ख—इतः दश पादा न सन्ति

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥ २९॥

खे वायुः प्रलयं याति मनस्याकाश एव च ।
मनो हि परमं भूतं तदव्यक्ते प्रलीयते ॥ ३०॥

अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये सम्प्रलीयते ।
नास्ति तस्मात् परं भूतं पुरुषाद्वै सनातनात् ॥ ३१॥

नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते मदेकं पुरुषं वासुदेवं सनातनम् ॥ ३२॥

सर्वभूतात्मभूतो हि वासुदेवो महाबलः ॥ ३३

पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
ते समेत्य महात्मानश् शरीरमिति संज्ञिताः ॥ ३४

तदाविशत्यन्तरात्मा ह्यदृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन् प्रभुः ॥ ३५

स जीवः परिसंख्यातश् शेषस्सङ्कर्षणः प्रभुः ।
तस्मात् सनत्कुमारत्वं लभते यस्स्वकर्मणा ॥ ३६

यस्मिंश्च सर्वभूतानि प्रलयं यान्ति सङ्क्षये ।
स मनस्सर्वभूतानां प्रद्युम्नः परिपठ्यते ॥ ३७

तस्मात् प्रसूतो यः कर्ता कार्यं कारणमेव च ।

सोऽनिरुद्धो य ईशानो व्यक्तिस्सात्वतकर्मसु ॥ ३८

यस्मात् सर्वं सम्भवति जगत् स्थावरजङ्गमम् ॥ ३८॥

यो वासुदेवो भगवान् क्षेत्रज्ञो निर्गुणात्मकः ।
श्रेयस्स एव राजेन्द्र जीवस्सङ्कर्षणः प्रभुः ॥ ३९॥

सङ्कर्षणाच्च प्रद्युम्नो मनोभूतस्स उच्यते ।
प्रद्युम्नाद्योऽनिरुद्धस्तु सोऽहङ्कारो महेश्वरः ॥ ४०॥

मत्तस्सर्वं सम्भवति जगत् स्थावरजङ्गमम् ।
अक्षरं च क्षरं चैव सच्चासच्चैव नारद ॥ ४१॥

मां प्रविश्य भवन्तीह भक्ता मुक्तास्तु ये मम ।
अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ॥ ४२॥

निर्गुणो निष्कलश्चैव निष्पन्दो निष्परिग्रहः ।
एतत् त्वया न विज्ञेयं रूपं वा नैव दृश्यते ॥ ४३॥

[1]इच्छन्मूर्तिरपश्योऽयम् ईशोऽयं जगतो गुरुः ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ॥ ४४॥

सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ।
मयैतत् कथितं सम्यक् तव मूर्तिचतुष्टयम् ॥ ४५॥

सिद्धा ह्येते महाभागा नरा ह्येकान्तिनोऽभवन् ।
तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ॥ ४६॥

---

1. घ—इच्छन्मुहूर्तारभ्योऽयमीशो

अहं कर्ता च कार्यं च कारणं चापि नारद ।
मत्तस्सर्वं सम्भवति जगत् स्थावरजङ्गमम् ॥ ४७॥

न दृश्यश्चक्षुषा योऽसौ न स्पृश्यस्स्पर्शनेन च ।
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ॥ ४८॥

सत्त्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै ।
स हि सर्वगतस्साक्षात् लोकस्यात्मेति कथ्यते ॥ ४९॥

अहं हि जीवसंज्ञो वै मयि जीवस्समाहितः ।
मैवं ते बुद्धिर्भवतु दृष्टो जीवो मयेति ह ॥ ५०॥

अहं सर्वत्रगो ब्रह्मन् भूतग्रामान्तरात्मकः ।
भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम्[1] ॥ ५१॥

---

1. अ-क-ख-घ—पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।
ते समेत्य महात्मानश् शरीरमिति संज्ञिताः ॥
तदाविशत्यन्तरात्मा ह्यदृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन् प्रभुः ॥
शुभाशुभैः कर्मभिश्च न स लिप्यति नारद ।
न विना जातुसङ्घातं शरीरं भवति क्वचित् ॥
न च जीवं विना ब्रह्मन् धातवश्चेष्टयन्त्युत ।
पृथग्भूताश्च ते नित्यं क्षेत्रज्ञः पृथगेव च ॥
सत्त्वं रजस्तमश्चैव न गुणास्तस्य भोजकाः ।
एते पञ्चसु भूतेषु शरीरस्थेषु कल्पिताः ॥
एताञ्जीवगुणान् भुङ्क्ते न स्वैभिर्भुज्यते तु सः ।
पश्य जीवस्य माहात्म्यं य एवं गुणभोजकः ॥

हिरण्यगर्भो लोकादिश्चतुर्वक्त्रोऽनिरुक्तगः ।
ब्रह्मासने गतो देवो मम बह्वर्थचिन्तकः ॥ ५२॥

पश्यैकादश मे रुद्रान् दक्षिणं पार्श्वमाश्रितान् ।
द्वादशैवमथादित्यान् वामं पक्षमथाश्रितान् ॥ ५३॥

अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ।
नासत्यं चैव दस्रं च भिषजौ पश्य पृष्ठतः ॥ ५४॥

सर्वान् प्रजापतीन् पश्य पश्य सप्त ऋषीनपि ।
देवान् यज्ञान् पशूंश्चैव पश्य स्रुक्च महौषधीः ॥ ५५॥

---

पूर्वतोऽनुवृत्तम्—

ईषल्लघुरिवात्यन्तो न गुणास्तस्य भोजकाः ।
जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ॥
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ।
खे वायुः प्रलयं याति कालेऽप्याकाशमेव तु ॥
कालो हि परमं भूतं मनस्येष प्रलीयते ।
मनो हि परमं भूतं तदव्यक्ते प्रलीयते ॥
अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये सम्प्रलीयते ।
नास्ति तस्मात् परतरं पुरुषाद्धि सनातनात् ॥
मामजानीहि ब्रह्मर्षे पुरुषं सर्वगं प्रभुम् ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ॥
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ।
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ॥
ऋते मामेकमीशानं पुरुषं लोकजीवनम् ॥

[अधिकः पाठः]

तपांसि नियमांश्चैव यमानपि पृथग्विधान् ।
तथाऽष्टगुणमैश्वर्यम् एकस्थं पश्य मूर्तिमत् ॥ ५६॥
श्रियं लक्ष्मीं च कीर्तिं च पृथिवीं च ककुद्मिनीम् ।
वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीम् ॥ ५७॥
ध्रुवं च ज्योतिषां श्रेष्ठं पश्य नारद खेचरम् ।
अम्भोधरान् समुद्रांश्च सरांसि सरितस्तथा ॥ ५८॥
मूर्तिमन्तः पितृगणांश् चतुरः पश्य सत्तम ।
त्रींश्चैवेमान् गुणान् पश्य मत्स्थान् ज्ञप्तिविवर्जितान् ॥ ५९॥
देवकार्यादपि मुने पितृकार्यं विशिष्यते ।
देवानां च पितृणां च पिता ह्येकोऽहमादितः ॥ ६०॥
अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे ।
पिबामि सुहुतं हव्यं कव्यं च श्रद्धयाऽन्वितम् ॥ ६१॥
मया सृष्टः पुरा ब्रह्मा येनाहमयजं स्वयम् ।
ततस्तस्मै वरान् प्रीतो ददावहमनुत्तमान् ॥ ६२॥
मत्पुत्रत्वं च कल्पादौ लोकस्रष्टारमेव च ।
अहङ्कारकृतानां च नामपर्यायवाचकम् ॥ ६३॥
त्वया कृतां च मर्यादां नातिक्रामति कश्चन ॥ ६४
त्वं चैव वरदो ब्रह्मन् वरेप्सूनां भविष्यसि ।
सुरासुरगणानां च महर्षीणां तथैव च ॥ ६५

पितॄणां च महाभाग सततं संशितव्रत ।
विविधानां च भूतानां त्वमुपास्यो भविष्यसि ॥ ६६
प्रादुर्भावगतश्चाहं सुरकार्येषु नित्यदा ।
अनुशास्यस्त्वया ब्रह्मन् सुनियोज्यस्सुतो यथा ॥ ६७
एतांश्चान्यांश्च रुचिरान् ब्रह्मणेऽमिततेजसे ।
अहं दत्त्वा वरान् प्रीतो निवृत्तिपरमोऽभवम् ॥ ६८
निर्वाणं सर्वधर्माणां निवृत्तिः परमा सुत ।
तस्मान्निवृत्तिमापन्नश् चरेत् सर्वत्र निर्वृतः ॥ ६९
विद्यासहायवन्तं माम् अनादिस्थं सनातनम् ।
कपिलं प्राहुराचार्यास् साङ्ख्यनिश्चयनिश्चयाः ॥ ७०
हिरण्यगर्भो भगवान् श्रावयन् सदसि स्तुतः ।
सोऽहं योगगतिर्ब्रह्मन् योगशास्त्रे च शब्दितः ॥ ७१
एषोऽहं व्यक्तिमागम्य तिष्ठामि दिवि शाश्वतः ।
ततो युगसहस्रान्ते संहरिष्यामि वै जगत् ॥ ७२
कृत्वाऽऽत्मस्थानि भूतानि जङ्गमान्यचराणि च ।
एकाकी विद्यया सार्धं विहरिष्ये द्विजोत्तम ॥ ७३
अतो भूयो जगत् सर्वं करिष्यामीति विद्यया ।
आत्ममूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ॥ ७४
स हि सङ्कर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ।

प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ॥ ७५

अनिरुद्धात् तथा ब्रह्मा तत्रादिकमलोद्भवः ।

ब्रह्मणस्सर्वभूतानि चराणि स्थावराणि च ॥ ७६

यथा सूर्यस्य गमनाद् उदयास्तमयावपि ।

नष्टौ पुनर्बलात् काल आनयत्यमितद्युतिः ॥ ७७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
[ अस्मिन्नध्याये ७७ श्लोकाः ]

---

## ॥ सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥

श्वेतद्वीपस्थेन हरिणा नारदं प्रति स्वदशावतारचरित्रकथनम् ॥

---

भीष्मः—

नारदस्त्वथ पप्रच्छ भगवन्तं जनार्दनम् ।

केषु केषु च भावेषु त्वं द्रष्टव्यो महाप्रभो ॥ १

श्रीभगवान्—

शृणु नारद तत्त्वेन प्रादुर्भावान् महामुने ।

मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः ॥ २

रामो रामश्च रामश्च कृष्णः कल्की च ते दश ॥ २॥

पूर्वं मीनो भविष्यामि स्थापयिष्याम्यहं प्रजाः ।
लोकान् वेदान् धरिष्यामि मज्जमानान् महार्णवे ॥ ३॥
द्वितीयं कूर्मरूपं मे हेमकूटनिभं सुत ।
मन्दरं धारयिष्यामि अमृतार्थे द्विजोत्तम ॥ ४॥
मग्नां महार्णवे घोरे भाराक्रान्तामिमां पुनः ।
ततो बलादहं पृथ्वीं सर्वभूतहिताय वै ॥ ५॥
सत्त्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम् ।
धारयिष्यामि वसुधां वाराहं रूपमास्थितः ॥ ६॥
सुरकार्येण वै तेन यज्ञघ्नो दितिनन्दनः ।
विरोचनस्य बलवान् बलिः पुत्रो महासुरः ॥ ७॥
[1]अवध्यस्सर्वलोकानां सदेवासुररक्षसाम् ।
भविष्यति स शक्रं च स्वराज्याच्चालयिष्यति ॥ ८॥
त्रैलोक्येऽपहृते तेन विमुखे तु शचीपतौ ।
अदित्यां वामनः पुत्रस् सम्भविष्यामि काश्यपात् ॥ ९॥
जटी गत्वा यज्ञसदस् स्तूयमानो द्विजोत्तम ।
यज्ञस्तवं करिष्यामि श्रुत्वा प्रीतो भवेद्बलिः ॥ १०॥
किमिच्छसि वटो ब्रूहीत्युक्तो याचे महद्वरम् ।
दीयतां त्रिपदीमात्रम् इति याचे महासुरम् ॥ ११॥

1. घ—नास्तीदमर्धम्

स दद्यान्मयि सम्प्रीतः प्रतिषिद्धश्च मन्त्रिभिः ।
यावज्जलं हस्तगतं त्रिभिर्विक्रमणैर्वृतम् ॥ १२॥

ततो राज्यं प्रदास्यामि शक्रायामिततेजसे ।
देवतास्स्थापयिष्यामि स्वेषु स्थानेषु नारद ॥ १३॥

बलिं चैव करिष्यामि पातालतलवासिनम् ॥ १४

ततस्त्रेतायुगे प्राप्ते द्वाविंशद्युगपर्यये ।
भविष्यामि ऋषिस्तत्र जमदग्निसुतो बली ॥ १५

बाहुवीर्ययुतो रामो वीरो भृगुकुलोद्वहः ।
क्षत्रं चोत्सादयिष्यामि प्रवृद्धबलवाहनम् ॥ १६

सन्धौ तु समनुप्राप्ते त्रेतायां द्वापरस्य च ।
रामो दाशरथिः पूर्वं भविष्यामि जगत्पतिः ॥ १७

त्रितोपघाताद्वैरूप्यम् एकतोऽथ द्वितस्तथा ।
प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी ॥ १८

तयोर्ये त्ववनौ जाता भविष्यन्ति वनौकसः ।
महाबला महावीर्याश् शक्रतुल्यपराक्रमाः ॥ १९
ते सहाया भविष्यन्ति सुरकार्ये मम द्विज ॥ १९॥

ततो रक्षःपतिं घोरं पुलस्त्यकुलपांसनम् ।
हनिष्ये रावणं सङ्ख्ये सगणं लोककण्टकम् ॥ २०॥

विभीषणाय दास्यामि राज्यं तस्य यथाक्रमम् ॥ २१

कलिद्वापरयोस्सन्धावष्टाविंशे चतुर्युगे ।
प्रादुर्भावं करिष्यामि भूयो वृष्णिकुलोद्वहः ॥ २२

मधुरायां कंसहेतोर् वासुदेवेति नामतः ।
तृतीयो राम इत्येव वसुदेवसुतो बली ॥ २३

तत्राहं दानवान् हत्वा बहून् वै दीप्तकण्टकान् ।
कुशस्थलीं करिष्यामि हत्वा वै दानवोत्तमान् ॥ २४
कृकलासं नृगं चैव मोचयिष्ये ह वै पुनः ॥ २४॥

तत्र पौत्रनिमित्तेन गत्वा वै शोणितं पुरम् ।
बाणस्य च पुरं गत्वा करिष्ये कदनं महत् ॥ २५॥

शङ्करं समहासेनं बाणप्रियहिते रतम् ।
पराजेष्याम्यथात्युग्रौ देवौ लोकनमस्कृतौ ॥ २६॥

ततस्सुतं बलेर्जित्वा बाणं बाहुसहस्रकम् ।
विनाशयिष्यामि ततस् सर्वान् सौभनिवासिनः ॥ २७॥

कंसं केशिं तथा कालम् अरिष्टं च महासुरम् ।
[1]चाणूरं च महावीर्यं मुष्टिकं च महाबलम् ॥ २८॥
प्रलम्बं धेनुकं चैव अरिष्टं वृषरूपिणम् ।

---

1. अ-क-ख—वारुणं

कालीयं च वशे कृत्वा यमुनाया महाह्रदे ॥ २९॥

गोकुले तु ततः पश्चाद् गवार्थे तु महागिरिम् ।
सप्तरात्रं धरिष्यामि वर्षमाणे तु वासवे ॥ ३०॥

अपक्रान्ते ततो वर्षे गिरिमूर्धन्यवस्थितः ।
इन्द्रेण सह संवादं करिष्यामि तदा द्विज ॥ ३१॥

यः कालयवनः ख्यातो यतस्तेजोऽभिसंवृतः ।
भविष्यति वधस्तस्य मत्त एव द्विजोत्तम ॥ ३२॥

जरासन्धश्च बलवान् सर्वराजविरोधकः ।
भविष्यत्यसुरस्स्फीतो भूमिपालो गिरिव्रजे ॥ ३३॥
मम बुद्धिपरिस्पन्दाद् वधस्तस्य भविष्यति ॥ ३४
दुर्योधनानुरागेण युधिष्ठिरगुणेन च ।
समागतेषु बलिषु पृथिव्यां सर्वराजसु ॥ ३५
वासविस्सुसहायो वै मम श्वेतो भविष्यति ॥ ३५॥
एवं लोका वदिष्यन्ति नरनारायणावृषी ।
उद्यतौ दहतः क्षत्रं लोककार्यार्थमीश्वरौ ॥ ३६॥
शस्त्रैर्निपतितास्सर्वे नृपा यान्ति यमक्षयम् ॥ ३७

कृत्वा भारावतरणं वसुधाया यथेप्सितम् ।
राज्यं प्रशास्ति हि पुनः कुन्तीपुत्रो युधिष्ठिरः ॥ ३८

सर्वसात्त्वतमुख्यानां द्वारकायाश्च सत्तम ।
करिष्ये प्रलयं घोरम् आत्मज्ञातिवधाश्रयम् ॥ ३९

कर्मा[1]ण्यमेयरूपाणि चतुर्मूर्तिधरो ह्यहम् ।
कृत्वा लोकान् गमिष्यामि स्वानेव ब्रह्मसत्कृतान् ॥ ४०

ततः कलियुगस्यादौ भूत्वा राजतरुं श्रितः ।
भाषया मागधेनैव धर्मराजगृहे वसन् ॥ ४१

काषायवस्त्रसंवीतो मुण्डितश्शुक्लदन्तवान् ।
शुद्धोदनसुतो बुद्धो मोहयिष्यामि मानवान् ॥ ४२

शूद्राश्श्राद्धेषु भुञ्यन्ते मयि बुद्धत्वमागते ।
भविष्यन्ति नरास्सर्वे मुण्डाः काषायसंवृताः ॥ ४३

अनध्याया भविष्यन्ति विप्राश्चाग्निविवर्जिताः ।
अग्निहोत्रा विनश्यन्ति गुरुपूजाऽवसीदति ॥ ४४

न शृण्वन्ति पितुः पुत्रा न स्नुषा नैव [2]भ्रातरः ।
न मित्रा न कलत्रा वा वर्तन्ते ह्यधरोत्तरम् ॥ ४५

हाहाभूतं जगत् सर्वं श्रुतिस्मृतिविवर्जितम् ।
भविष्यति कलौ नग्नो ह्यशुद्धो वर्णसङ्करः ॥ ४६

तेषां सकाशाद्धर्मज्ञा देवब्रह्मविदो नराः ।

1. ख—ण्यनेक　　2. ख—मातरः

भविष्यन्ति ह्यशुद्धाश्च न्यायच्छलविभाषिणः ॥ ४७

ये नग्नधर्मश्रोतारस् ते समाः पापनिश्चयैः ।
तस्मादेता न सम्भाष्या न स्प्रष्टव्या हितार्थिभिः ॥ ४८

उपवासत्रयं कुर्यात् तत्संसर्गविशुद्धये ॥ ४८॥

ततः कलियुगस्यान्ते [1]महात्मा ब्राह्मणो हरिः ।
कल्किर्विष्णुयशःपुत्रो याज्ञवल्क्यः पुरोहितः ॥ ४९॥

संहता ब्राह्मणास्सर्वे तैरहं सहितः पुनः ।
म्लेच्छानुत्सादयिष्यामि पाषण्डांश्चैव सर्वशः ॥ ५०॥

पाषण्डिषट्कान् हत्वा वै तत्र तैः प्रलये ततः ।
अहं पश्चाद्भविष्यामि यज्ञेषु निरतस्सदा ॥ ५१॥

हंसो हयशिराश्चैव प्रादुर्भावो द्विजोत्तम ।
यदा चैव श्रुतिर्नष्टा तदा प्रत्याहृता मया ॥ ५२॥

सवेदास्सश्रुतीकाश्च कृताः पूर्वं कृते युगे ।
अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् ॥ ५३॥

अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः ।
लोककार्याणि कृत्वा च पुनस्स्वां प्रकृतिं गताः ॥ ५४॥

---

1. घ—ब्राह्मणो हरिपिङ्गलः

[1]न ह्येतद्ब्रह्मणा प्राप्तम् ईदृशं मम दर्शनम् ।
यत् त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ॥ ५५॥
एतत् ते सर्वमाख्यातं ब्रह्मन् भक्तिमतो मया ।
पुराणं च भविष्यं च सरहस्यं च सत्तम ॥ ५६॥

भीष्मः—

एवं स भगवान् देवो विश्वमूर्तिधरोऽव्ययः ।
एतावदुक्त्वा वचनं तत्रैवान्तरधीयत ॥ ५७॥
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम् ।
नरनारायणौ द्रष्टुं प्राद्रवद्बदराश्रमम् ॥ ५८॥
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥ ५९॥
नारायणमुखोद्गीतं नारदोऽश्रावयत् पुनः ॥ ६०
ब्रह्मणस्सदने तात यथादृष्टं यथाश्रुतम् ।
श्रुत्वा ब्रह्ममुखा[2]द्रुद्रस् स देव्यै कथयत् पुनः ॥ ६१

1. अ-क-ख-घ—नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते तमेकमीशानं वासुदेवं सनातनम् ॥
मनो हि परमं भूतं तदव्यक्ते प्रलीयते ।
अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये सम्प्रलीयते ॥
पुरुषस्सर्वमेवेदम् अक्षयश्चाव्ययश्च ह ॥ [अधिकः पाठः]

2. घ—स्तेतु देवेभ्योऽकथयन्पुनः

युधिष्ठिरः—

एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः ।
किं ब्रह्मा न विजानीते यतश्शुश्राव नारदात् ॥ ६२

पितामहस्तु भगवांस् तस्मादेवादनन्तरम् ।
कथं स न विजानीयात् प्रभावममितौजसः ॥ ६३

भीष्मः—

महाकल्पसहस्राणि महाकल्पशतानि च ।
समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ॥ ६४

सर्वस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः ।
जानाति देवप्रवरं भूयस्सर्वाधिकं नृप ॥ ६५

ये त्वन्ये ब्रह्मसदने सिद्धसङ्घास्समाहिताः ।
तेभ्यस्स श्रावयामास पुराणं वेदसम्मितम् ॥ ६६

तेषां सकाशात् सूर्यश्च श्रुत्वा वै भावितात्मनाम् ।
[1]आत्मानुगान् स्थितान् राजन् श्रावयामास तत्त्वतः[2] ॥ ६७

अष्टाशीतिसहस्राणि मुनीनां भावितात्मनाम् ॥ ६७॥
सूर्यस्य तपतो लोकान् निर्मिता ये पुरस्सराः ।

1. घ—अर्धचतुष्टयं नास्ति

2. अ-क-ख—अष्टाशीतिसहस्राणि मुनीनां भावितात्मनाम् ।
आत्मानुगान् स्थितान् राजन् श्रावयामास तत्त्वतः ॥
[अर्धद्वयं द्विरुक्तम्]

तेषामकथयत् सूर्यस् सर्वेषां भावितात्मनाम् ॥　　६८॥

सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः ।
मेरौ समागता देवाश् श्राविताश्चै तदुत्तमम् ॥　　६९॥

देवानां तु सकाशाद्वै ततश्श्रुत्वाऽसितो द्विजः ।
श्रावयामास राजेन्द्र पितॄन् वै मुनिसत्तमः ॥　　७०॥

एवं परम्पराख्यातम् इदं शन्तनुमाश्रितम् ।
मम चापि पिता तात कथयामास शन्तनुः ॥　　७१॥

ततो मयैतच्छ्रुत्वा च कीर्तितं तव भारत ॥　　७२

असुरैर्मुनिभिश्चापि पुराणं यैरिदं श्रुतम् ।
सर्वे ते परमात्मानं पूजयन्ति पुनः पुनः ॥　　७३

आख्यातमिदमार्षेयं पारम्पर्यागतं नृपु ।
नावासुदेवभक्ताय त्वयाऽऽख्येयं कथञ्चन ॥　　७४

आख्यानमुत्तमं चेदं श्रावयेद्यस्सदा नृप ।
तदैव मनुजो भक्तश् शुचिर्भूत्वा समाहितः ॥　　७५

प्राप्नुयादचिराद्राजन् विष्णुलोकं सनातनम् ॥　　७५॥

मत्तोऽन्यानि च ते राजन् उपाख्यानशतानि च ।
यानि श्रुतानि धर्माणि तेषां सारोऽयमुद्धृतः ॥　　७६॥

सुरासुरैर्यथा राजन् निर्मथ्यामृतमुत्तमम् ।

एवमेतत् पुरा विप्रैः कथामयमिहोद्धृतम् ॥ ७७॥
यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः ।
एकान्तभावोपगत एकान्ते सुसमाहितः ॥ ७८॥
प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः ।
स सहस्रार्चिषं देवं प्रविशेन्नात्र संशयः ॥ ७९॥
मुच्येतासौ तथा रोगाच्छ्रुत्वेमामादितः कथाम् ।
जिज्ञासुर्लभते भक्तिं भक्तो मुक्तगतिं लभेत् ॥ ८०॥
सुरैर्वा मुनिभिश्चैव पुराणं यैरिदं श्रुतम् ।
ते सर्वे परमात्मानं पूजयन्ति पुनः पुनः ॥ ८१॥
त्वया हि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः ।
स हि माता पिता चैव कृत्स्नस्य जगतोऽभवत् ॥ ८२॥
ब्रह्मण्यदेवो भगवान् प्रीयतां ते सनातनः ।
युधिष्ठिर महाबाहो महाबाहुर्जनार्दनः ॥ ८३॥
एतत्ते सर्वमाख्यातं नारदोक्तं मयेरितम् ।
पारम्पर्यागतं ह्येतत् पित्रा मे कथितं पुरा ॥ ८४॥

वैशम्पायनः—

श्रुत्वैतदाख्यानवरं धर्मराड् जनमेजय ।
भ्रातरश्चास्य ते सर्वे नारायणपरा भवन् ॥ ८५॥

जितं हि भवता चैव पुरुषेणेति भारत ।
नित्यं जप्यपरा भूत्वा सारस्वतमुदीरयन् ॥ ८६॥

यो ह्यस्माकं नरश्रेष्ठः कृष्णद्वैपायनः प्रभुः ।
स जगौ परमं जप्यं नारायणमुदीरयन् ॥ ८७॥

गत्वाऽन्तरिक्षात् सततं क्षीरोदममृतालयम् ।
पूजयित्वाऽथ देवेशं पुनरायात् स्वमाश्रमम् ॥ ८८॥

सूतः—

एतत्ते सर्वमाख्यातं वैशम्पायनकीर्तितम् ।
जनमेजयेन तच्छ्रुत्वा कृतं सम्यग्यथाविधि ॥ ८९॥

यूयं हि तप्ततपसस् सर्वे सुचरितव्रताः ।
सर्वे वेदविदो मुख्या नैमिशारण्यवासिनः ॥ ९०॥

शौनकस्य महासत्रं प्राप्तास्सर्वे द्विजोत्तमाः ।
यजध्वं सुहुतैर्यज्ञैर् आत्मानं परमेश्वरम् ॥ ९१॥

**इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७ ॥**

**॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥**

**[अस्मिन्नध्याये ९१॥ श्लोकाः ]**

## ॥ अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥



श्रीहरेर्यज्ञेष्वग्रभागभाक्त्वप्रकारं पृष्टेन सूतेन तत्कथनाय शौनकादीन् प्रति ब्रह्मादीनां श्वेतद्वीपगमनादिप्रतिपादकव्यासवैशम्पायनादिसंवादानुवादः ॥

---

शौनकः—

कथं स भगवान् देवो यज्ञेष्वग्रहरः प्रभुः ।
यज्ञधारी च सततं वेदवेदाङ्गकृत् तथा ॥ १

निवृत्तिं चास्थितो धर्मं मोक्षं भागवतः प्रभुः ।
प्रवृत्तिधर्मान् विदधे स एव भगवान् प्रभुः ॥ २

कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः ।
कथं निवृत्तिधर्मेषु कृताऽभ्यावृत्तिबुद्धयः ॥ ३

एतं नस्संशयं छिन्धि सौते गुह्यं सनातनम् ।
त्वया नारायणाच्छ्रुत्वा [1]त्राता वै धर्मसंहिताः ॥ ४

सूतः—

जनमेजयेन यत् पृष्टश्शिष्यो व्यासस्य धीमतः ।
तत्तेऽहं कीर्तयिष्यामि पौराणं शौनकोत्तरम् ॥ ५

श्रुत्वा माहात्म्यमेतस्य देहिनां परमात्मनः ।

---

1. घ—प्राप्ता

जनमेजयो महाप्राज्ञो वैशम्पायनमब्रवीत् ॥ ६

जनमेजयः—

इमे सब्रह्मका लोकास् ससुरासुरमानवाः ।
क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः ॥ ७
मोक्षश्चोक्तस्त्वया ब्रह्मन् निर्वाणं परमं सुखम् ॥ ७॥
ये तु मुक्ता भवन्तीह पुण्यपापविवर्जिताः ।
ते सहस्रार्चिषं देवं प्रविशन्तीह शुश्रुम ॥ ८॥
अहो हि दुरनुष्ठेयो मोक्षधर्मस्सनातनः ।
यं हित्वा देवतास्सर्वा हव्यकव्यभुजोऽभवन् ॥ ९॥
किञ्च ब्रह्मा च रुद्रश्च शक्रश्च बलभित् प्रभुः ।
सूर्यस्ताराधिपो वायुर् अग्निर्वरुण एव च ॥ १०॥
आकाशं जगती चैव ये च शेषा दिवौकसः ।
प्रलयं न विजानन्ति आत्मनः परिनिर्मितम् ॥ ११॥
यतस्तन्नास्थिता धर्मं ध्रुवमक्षरमव्ययम् ।
स्मृत्वा कालपरीणामं प्रवृत्तिं ते समास्थिताः ॥ १२॥
एष कालपरीणामो महान् दोषः क्रियावताम् ॥ १३
एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम् ।
छिन्धीतिहासकथनात् परं कौतूहलं हि मे ॥ १४
कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज ।

किमर्थं चाध्वरे ब्रह्मन् यजन्तेऽपि दिवौकसः ॥ १५

ये भागं प्रतिगृह्णन्ति यज्ञेषु द्विजसत्तम ।
ते यजन्तो महायज्ञैः कस्य भागं ददाति वै ॥ १६

वैशम्पायनः—

अहो गूढतमः प्रश्नस् त्वया पृष्टो नराधिप ।
नातप्ततपसा ह्येष नावेदविदुषा तथा ॥ १७

नापुराणविदा चापि शक्यो व्याहर्तुमञ्जसा ॥ १७॥

हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः ।
कृष्णद्वैपायनो व्यासो वेदव्यासो महामुनिः ॥ १८॥

सुमन्तुर्जैमिनिश्चैव पैलवश्च दृढव्रतः ।
अहं चतुर्थश्शिष्यो वै पञ्चमश्च शुकस्स्मृतः ॥ १९॥

एतान् समागतान् सर्वान् पञ्च शिष्यान् दमान्वितान् ।
शौचाचारसमायुक्तान् जितक्रोधाञ्जितेन्द्रियान् ॥ २०॥

वेदानध्यापयामास महाभारतपञ्चमान् ।
मेरौ गिरिवरे रम्ये सिद्ध[1]चारणसेविते ॥ २१॥

तेषामभ्यस्यतां वेदान् कदाचित् संशयोऽभवत् ।
एष वै यस्त्वया पृष्टस् तेन तेषां प्रकीर्तितः ॥ २२॥

ततश्श्रुतो मया चापि तवाख्येयो हि भारत ॥ २३

1. घ—गन्धर्व

शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः ।
पराशरसुतश्श्रीमान् व्यासो वाक्यमुवाच ह ॥ २४

व्यासः—

मया हि सुतपस्तप्तं तपः परमदारुणम् ।
[1]तथा भूतभविष्यच्च जानीयामिति सत्तमाः ॥ २५
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च ।
नारायणप्रसादेन क्षीरोदस्यानुकूलतः ॥ २६
त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ॥ २६॥
तच्छृणुध्वं यथाज्ञानं वक्ष्ये संशयमुत्तमम् ।
यथावृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा ॥ २७॥
परमात्मेति यं प्राहुस् साङ्ख्ययोगविदो जनाः ।
महापुरुषसंज्ञां स लभते स्वेन कर्मणा ॥ २८॥
तस्मात् प्रसूतमव्यक्तं प्रधानं तं विदुर्बुधाः ॥ २९
अव्यक्ते व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ।
अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ॥ ३०
योऽसौ व्यक्तत्वमापन्नो निर्ममे हि पितामहम् ।
योऽहङ्कार इति प्रोक्तस् सर्वतेजोमयो हि सः ॥ ३१
पृथिवी वायुराकाशम् आपो ज्योतिश्च पञ्चमम् ।

---

1. ब—भूतं भवद्भविष्यच्च

अहङ्कारात् प्रसूतानि पञ्च भूतानि भागतः ॥ ३२

महाभूतानि सृष्ट्वा च तद्गुणान् निर्ममे पुनः ।
एतेभ्यश्चैव निष्पन्नान् अष्टौ मूर्तिमतश्शृणु ॥ ३३

मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महात्मा वै मनुस्स्वायम्भुवस्तथा ॥ ३४

ज्ञेयाः प्रकृतयोऽष्टौ च यासु लोकाः प्रतिष्ठिताः ॥ ३४॥

वेदान् वेदाङ्गसंयुक्तान् यज्ञयज्ञाङ्गसंयुतान् ।
निर्ममे लोकसृष्ट्यर्थं ब्रह्मा लोकपितामहः ॥ ३५॥

अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत् ।
रुद्रो रोषात्मको जातो [1]दशान्यानसृजत् स्वयम् ॥ ३६॥

एकादशैते रुद्रास्तु विकाराः पुरुषास्स्मृताः ॥ ३७

ते रुद्राः प्राकृताश्चैव सर्वे चैव सुरर्षयः ।
उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः ॥ ३८

रुद्रादयः—

वयं सृष्टास्तु भगवंस् त्वया वै प्रभविष्णुना ।
येन यस्मिन्नधीकारे वेदितव्यः पितामह ॥ ३९

योऽसौ त्वया हि निर्दिष्ट अधिकारोऽर्थचिन्तकः ।

---

1. घ—ऐशान्यान्

परिपाल्यः कथं तेन साहङ्कारेण कर्तृणा ॥ ४०

प्रदिशस्व बलं तत्र योऽधिकारार्थचिन्तकः ॥ ४०॥

व्यासः—

एवमुक्तो महादेवो देवस्तानिदमब्रवीत् ॥ ४१

ब्रह्मा—

साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः ।
ममाप्येषा समुत्पन्ना [1]चिन्ता या भवतामिह ॥ ४२

लोकतन्त्रस्य कृत्स्नस्य कथं कार्यः परिग्रहः ।
कथं बलक्षयो न स्याद् युष्माकं स्वात्मनिश्चये ॥ ४३

इतस्सर्वे हि गच्छामश् शरणं लोकसाक्षिणम् ।
महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम् ॥ ४४

व्यासः—

ततस्ते ब्रह्मणा सार्धम् ऋषयो विबुधास्तथा ।
क्षीरोदस्योत्तरं कूलं जग्मुर्लोकहितार्थिनः ॥ ४५

ते तपस्समुपातिष्ठन् ब्रह्मोक्तं वेदकल्पितम् ।
स महानियमो नाम तपश्चर्या सुदारुणा ॥ ४६

ऊर्ध्वदृष्टीबाहवश्च एकाग्रमनसोऽभवन् ।
एकपादस्थितास्सम्यक् प्रादुर्भूतास्समाहिताः ॥ ४७

दिव्यवर्षसहस्रान्ते तपस्तप्त्वा [2]सुदुष्करम् ।

1. च—इतश्चत्वारः पादा न सन्ति 2. च—सुदारुणम्

शुश्रुवुर्मधुरां वाचं वेदवेदाङ्गभूषिताम् ॥ ४८

वागुवाच—

भो भोस्सब्रह्मका देवा ऋषयश्च तपोधनाः ।
स्वागतेनाद्य वस्सर्वाञ् श्रावये वाक्यमुत्तमम् ॥ ४९

विज्ञातं वो मया कार्यं तव लोकहितं महत् ।
प्रवृत्तियुक्तं वक्तव्यं युष्मत्प्राणोपबृंहणम् ॥ ५०

सुतप्तं वस्तपो देवा ममाराधनकाम्यया ।
भोक्ष्यथास्य महासत्त्वास् तपसः फलमुत्तमम् ॥ ५१

एष ब्रह्मा लोकगुरुस् सर्वलोकपितामहः ।
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ॥ ५२

सर्वे भागान् कल्पयध्वं यज्ञेषु मम नित्यशः ।
तत्र श्रेयो विधास्यामि यथाऽधीकारमीश्वराः ॥ ५३

व्यासः—

श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः ।
ततस्ते विबुधास्सर्वे ब्रह्मा ते च महर्षयः ॥ ५४

वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ॥ ५४॥

तस्मिन् यज्ञे तदा ब्रह्मा स्वयं भागमकल्पयत् ।
[1]देवा देवर्षयश्चैव स्वयं भागानकल्पयन् ॥ ५५॥

---

1. अ-ख—नास्तीदमर्धम्

ते कार्तयुगधर्माणो भागाः परमसंस्कृताः ।
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् ॥ ५६॥
बृहन्तं [1]देवमीशानं परमं वरदं प्रभुम् ॥ ५७
ततोऽथ वरदो देवस् तान् सर्वानमरान् स्थितान् ।
अशरीरो बभाषेदं वाक्यं खस्थो महेश्वरः ॥ ५८

श्रीभगवान्—

येन यः कल्पितो भागस् स तथा समुपागतः ।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ॥ ५९
एतद्वै लक्षणं देवा मत्प्रसादसमुद्भवम् ॥ ५९॥
यूयं यज्ञैरिज्यमानास् समाप्तवरदक्षिणैः ।
युगे युगे भविष्यध्वं प्रवृत्तिफलभोगिनः ॥ ६०॥
यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः ।
कल्पयिष्यन्ति वो भागांस् ते नरा देवकल्पितान् ॥ ६१॥
यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ ।
स तथा यज्ञभागो वै वेदसूत्रे मया कृतः ॥ ६२॥
यूयं लोकान् भावयध्वं यज्ञभागैश्च योजिताः ।
सर्वार्थचिन्तका लोके मयाऽधीकारनिर्मिताः ॥ ६३॥
याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः ।

---

[1] घ—सर्वदेवेशं

ताभिराप्यायितबला लोकान् वै धारयिष्यथ ॥ ६४॥

यूयं हि भाविता लोके सर्वयज्ञेषु मानवैः ।
मां ततो भावयिष्यध्वम् एषा वो भावना मम ॥ ६५॥

इत्यर्थं भावना देवा यज्ञाश्चौषधिभिस्सह ।
एभिस्सम्यक् प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ ॥ ६६॥

निर्माणमद्य युष्माकं प्रवृत्तिगुणकल्पितम् ।
मया कृतं सुरश्रेष्ठा यावत्कल्पक्षयादिह ॥ ६७॥

चिन्तयध्वं लोकहितं यथाधीकारमीश्वराः ॥ ६८

मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मनसा निर्मिता हि वै ॥ ६९

एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्ये च कल्पिताः ॥ ७०

अयं क्रियावतां बन्धुर् व्यक्तीभूतस्सनातनः ।
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥ ७१

सनातनश्शिलाकश्च सनकश्च सनन्दनः ।
सनत्कुमारः कपिलस् सप्तमश्च सनातनः ॥ ७२

सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणस्सुताः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः ॥ ७३

एते योगविदो मुख्यास् साङ्ख्यधर्मविदस्तथा ।

आचार्या मोक्षशास्त्रे च मोक्षधर्मप्रवर्तकाः ॥ ७४

यतोऽहं प्रसृतः पूर्वम् अव्यक्तात् त्रिगुणात्मकात् ।
तस्मात् परतरो यस्तु प्रकृतिं सोऽश्नुतेऽवशः ॥ ७५

एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः ।
एष माता पिता चैव युष्माकं च पितामहः ॥ ७६
मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः ॥ ७६॥

अस्य चैवानुजो रुद्रो ललाटाद्यस्समुत्थितः ।
ब्रह्मानुशिष्टो भविता सर्वसत्त्ववरप्रदः ॥ ७७॥

गच्छध्वं स्वानधीकारांश् चिन्तयध्वं यथाविधि ।
प्रवर्तन्तां क्रियास्सर्वास् सर्वलोकेषु मा चिरम् ॥ ७८॥

प्रदृश्यन्तां च कर्माणि प्राणिनां गतयस्तथा ।
परिनिर्मितकालानि आयूंषि च सुरोत्तमाः ॥ ७९॥

इदं कृतयुगं नाम कालश्रेष्ठं प्रवर्तते ।
अहिंस्या यत्र पशवो युगेऽस्मिन्नैतदन्यथा ॥ ८०॥

चतुष्पात् सकलो धर्मो भविष्यत्यत्र वै सुराः ।
ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति ॥ ८१॥

प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे ॥ ८२

यत्र पादश्चतुर्थो वै धर्मस्य न भविष्यति ।
ततो वै द्वापरं नाम मिश्रः कालो भविष्यति ॥ ८३

द्विपादहीनो धर्मश्च युगे तस्मिन् भविष्यति ॥ ८३॥
तत्र वध्यन्ति पशवो यूपेष्वत्र निबध्यते ॥ ८४
ततस्तिष्येऽथ सम्प्राप्ते युगे कलिपुरस्कृते ।
एकपादस्थितो धर्मो यत्र कुत्र भविष्यति ॥ ८५

देवाः—

एकपादस्थिते धर्मे यत्र क्वचन गामिनि ।
कथं वस्तव्यमस्माभिर् भगवंस्तद्वदस्व नः ॥ ८६

श्रीभगवान्—

गुरवो यत्र पूज्यन्ते साधुवृत्तास्समन्विताः ।
वस्तव्यं तत्र युष्माभिर् यत्र धर्मो न हीयते ॥ ८७
यत्र वेदाश्च यज्ञाश्च तपस्सत्यं दमस्तथा ।
अहिंसाधर्मसंयुक्ताः प्रचरेयुस्सुरोत्तमाः ॥ ८८
स वै देशो हि वस्तव्यो मा वोऽधर्मः पदा स्पृशेत् ॥ ८८॥

व्यासः—

तेऽनुशिष्टा भगवता देवास्सर्षिगणास्तथा ।
नमस्कृत्वा भगवते जग्मुर्देशान् यथेप्सितान् ॥ ८९॥
गतेषु त्रिदिवौकस्सु ब्रह्मैकः पर्यवस्थितः ।
दिदृक्षुर्भगवन्तं तम् अनिरुद्धतनौ स्थितम् ॥ ९०॥
तं देवो दर्शयामास कृत्वा हयशिरो महत् ।

साङ्गानवयवान् वेदान् कमण्डलुगुणीकृतम् ॥ ९१॥
ततोऽश्वशिरसं दृष्ट्वा तं देवममितौजसम् ।
लोककर्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया ॥ ९२॥
मूर्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः ।
स परिष्वज्य देवेन वचनं श्रावितस्तदा ॥ ९३॥

श्रीभगवान्—

लोककार्यगतीस्सर्वास् त्वं चरेह यथाविधि ।
पिता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः ॥ ९४॥
त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा ।
यदा च सुरकार्यं ते त्वविपह्यं भविष्यति ॥ ९५॥
प्रादुर्भावं करिष्यामि तदात्मज्ञानदेशिकः ॥ ९६

व्यासः—

एवमुक्त्वा हयशिरास् तत्रैवान्तरधीयत ।
तेनानुशिष्टो ब्रह्माऽपि स्वं लोकमचिराद्गतः ॥ ९७
एवमेष महाभाग पद्मनाभस्सनातनः ।
यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा ॥ ९८
निवृत्तिं चास्थितो धर्मं गतिरक्षयधर्मिणाम् ।
प्रवृत्तिधर्मान् विदधे कृत्वा लोकस्य चित्रताम् ॥ ९९

स आदिस्स मध्यस्स चान्तः प्रजानां
स धाता स धेयं स कर्ता प्रजानाम् ।
स कार्यं युगान्ते सुसंक्षिप्य लोकान्
युगादौ प्रबुद्धो जगच्चोत्ससर्ज ॥ १००

तस्मै नमध्वं देवाय निर्गुणाय गुणात्मने ।
अजाय विश्वरूपाय धाम्ने सर्वदिवौकसाम् ॥ १०१

महाभूताधिपतये रुद्राणां पतये तथा ।
आदित्यपतये चापि वसूनां पतये तथा ॥ १०२

अश्विनोः पतये तुभ्यं मरुतां पतये तथा ।
देवयज्ञाधिपतये वेदाङ्गपतयेऽपि च ॥ १०३

सतामुपासिने नित्यं हरये मुञ्जकेशिने ।
शान्ताय सर्वभूतानां मोक्षधर्मानुभाषिणे ॥ १०४

तपसां तेजसां चैव पतये यशसोऽपि च ।
प्राणस्य पतये नित्यं सरितां पतये तथा ॥ १०५

कपर्दिने वराहाय एकशृङ्गाय धीमते ।
विवस्वतेऽश्वशिरसे चतुर्मूर्तिधृते सदा ॥ १०६

सूक्ष्माय ज्ञानदृश्याय अक्षराय क्षराय च ॥ १०६॥

एष देवस्सञ्चरति सर्वत्र गतिरव्ययः ॥ १०७

एवमेतत् पुरा दृष्टं मया वै ज्ञानचक्षुषा ।

कथितं तच्च वस्सर्वं मया पृष्टेन तत्त्वतः ॥ १०८

क्रियतां तद्वचश्शिष्यास् सेव्यतां हरिरीश्वरः ।
गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि ॥ १०९

वैशम्पायनः—

वेदव्यासेन गुरुणा एवमुक्तास्ततो वयम् ।
सर्वे शिष्याश्शुकश्चास्य सुतः परमधर्मवित् ॥ ११०

स चास्माकमुपाध्यायस् सहास्माभिर्विशां पते ।
चतुर्वेदोद्गताभिस्तम् ऋग्भिस्समभितुष्टुवे ॥ १११

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
एवं मेऽकथयद्राजन् पुरा द्वैपायनो गुरुः ॥ ११२

यश्चैनं शृणुयान्नित्यं यश्चैनं परिकीर्तयेत् ।
नमो भगवते कृत्वा समाहितमना नरः ॥ ११३

भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ।
आतुरो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ॥ ११४

कामकामी लभेत् कामं दीर्घं चायुरवाप्नुयात् ।
ब्राह्मणस्सर्ववेदी स्यात् क्षत्रियो विजयी भवेत् ॥ ११५

वैश्यो विपुललाभस्स्याच् छूद्रस्सुखमवाप्नुयात् ।
अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिम् ॥ ११६

लग्नगर्भा विमुच्येत गर्भिणी जनयेत् सुतम् ।

वन्ध्या प्रसवमाप्नोति पुत्रपौत्रसमृद्धिमत् ॥ ११७

क्षेमेण गच्छेदध्वानम् इदं यः पठतेऽध्वनि ।
यो यं कामं कामयते स तमाप्नोति यद्ध्रुवम् ॥ ११८

इदं महर्षेर्वचनं विपश्चितो
महात्मनः पुरुषवरस्य कीर्तनम् ।
समागमं चर्षिदिवौकसामिमं
निशम्य भक्तो लभते सुखं महत् ॥ ११९

इति श्रीमहाभारते शतसहस्रिकायां वैयासिक्यां
शान्तिपर्वणि अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
[ अस्मिन्नध्याये ११९ श्लोकाः ]

---

## ॥ एकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥

वैशम्पायनेन जनमेजयं प्रति अर्जुनाय स्वमाहात्म्यख्यापनपूर्वकं श्रीकृष्णकृतनारायणादिस्वनामनिर्वचनानुवादः ॥

जनमेजयः—

अस्तौषीद्वैदिकैर्व्यासस् सशिष्यो मधुसूदनम् ।
नामभिर्विविधैरेषां निरुक्तं भगवन् मम ॥ १

वक्तुमर्हसि शुश्रूषोः प्रजापतिपतेर्हरेः ।
श्रुत्वा भवेयं यत् पूतश् शरच्चन्द्र इवामलः ॥ २

वैशम्पायनः—

शृणु राजन् यथाचष्ट फल्गुनस्य हरिः प्रभुः ।
प्रसन्नात्माऽऽत्मनो नाम्नां निरुक्तं गुणकर्मजम् ॥ ३

नामभिः कीर्तितैरस्य केशवस्य महात्मनः ।
पृष्टवान् केशवं राजन् [1]फल्गुनः परवीरहा ॥ ४

अर्जुनः—

भगवन् भूतभव्येश सर्वभूतसृगव्यय ।
लोकनाथ जगन्नाथ लोकानामभयप्रद ॥ ५

यानि नामानि ते देव कीर्तितानि महर्षिभिः ।
वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः ॥ ६

1. क-च—अर्जुनः

तेषां निरुक्तं त्वत्तोऽहं श्रोतुमिच्छामि केशव ।
न ह्यन्यो वर्तयेन्नाम्नां निरुक्तं त्वदृते प्रभो ॥ ७

श्रीभगवान्—

ऋग्वेदेऽथ यजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदि तथैव ज्योतिषेऽर्जुन ॥ ८

साङ्ख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।
[1]बहूनि मम नामानि कीर्तितानि महर्षिभिः ॥ ९

गौणानि तत्र नामानि कर्मजानि च कानिचित् ।
निरुक्तं कर्मजानां च शृणुष्व नियतोऽनघ ॥ १०
कथ्यमानं मया तात त्वं हि मे संस्मृतः पुरा ॥ १०॥

नमोऽतियशसे तस्मै देवानां परमात्मने ।
[2]नारायणाय विश्वाय निर्गुणाय गुणात्मने ॥ ११॥

यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसम्भवः ।
सोऽसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च ॥ १२॥

अष्टादशगुणं यत्तत् सत्त्वं सत्त्ववतां वर ॥ १३

प्रकृतिस्सा परा मह्यं रोदसी लोकधारिणी ।
ऋता सत्यपरा जय्या लोकानामात्मसंज्ञिता ॥ १४

यस्मात् सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।

1. घ—अभ्यानीमानि 2. घ—नास्तीदमर्धम्

तपो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् ॥ १५

अनिरुद्ध इति प्रोक्तो लोकानां प्रभुरव्ययः ।
ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ॥ १६

प्रसादात् प्रादुरभवत् पद्मं पद्मनिभेक्षण ॥ १६॥

तत्र ब्रह्मा समभवत् तस्यैवं च प्रसादजः ।
अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा ॥ १७॥

क्रोधाविष्टस्य सञ्जज्ञे रुद्रस्संहारकारकः ॥ १८

एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ १९

निमित्तमात्रं तावत्र सर्वभूतवरप्रदौ ।
कपर्दी जटिलो मुण्डी श्मशानगृहवासकः ॥ २०

उग्रस्तपःपरो रुद्रो योगी त्रिपुरदारणः ।
दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ॥ २१

नारायणात्मको ज्ञेयः पाण्डवेय युगे युगे ॥ २१॥

तस्मिन् हि पूज्यमाने वै भूतेशे तु महेश्वरे ।
सम्पूजितो भवेत् पार्थ देवो नारायणः प्रभुः ॥ २२॥

अहमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन ।
तस्मादात्मानमेवाग्रे रुद्रं सम्पूजयाम्यहम् ॥ २३॥

यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् ।

आत्मानं चार्चयेन्नित्यं न कश्चिदिति मे मनः ॥ २४॥
मया प्रमाणं हि कृतं लोकस्समनुवर्तते ॥ २५

प्रमाणानि हि पूज्यानि ततस्सम्पूजयाम्यहम् ।
यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु ॥ २६

रुद्रो नारायणो भूत्वा सत्त्वमेतद् द्विधा कृतम् ।
लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ॥ २७

न हि मे केन चिद्देयो वरः पाण्डवनन्दन ।
इति सञ्चिन्त्य मनसा वराहं विश्वमीश्वरम् ॥ २८

पुत्रार्थमाराधितवान् आत्मनाऽऽत्मानमात्मनः ॥ २८॥

न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय तु ।
ऋते आत्मानमेवेति ततो रुद्रं नमाम्यहम् ॥ २९॥

सब्रह्मकास्सरुद्राश्च सेन्द्रा देवास्सहर्षिभिः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥ ३०॥

भविष्यतां वर्ततां च भूतानां चैव भारत ।
सर्वेषामग्रणीर्विष्णुस् सेव्यः पूज्यश्च नित्यशः ॥ ३१॥

नमस्व भव्यदं विष्णुं तथा शरणदं नमः ।
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नमः ॥ ३२॥

चतुर्विधा मम जना भक्ता एव हि ते श्रुताः ।
तेषामेकान्तिनश्श्रेष्ठा ये चैवानन्यदेवताः ॥ ३३॥

अहमेव गतिस्तेषां निराशीःकर्मकारिणाम् ॥ ३४

ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ।
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक् ॥ ३५

ब्रह्माणं शितिकण्ठं च याश्चान्या देवतास्स्मृताः ।
प्रतिबुद्धा न सेवन्ते यस्मात् परिमितं फलम् ॥ ३६

भक्तं प्रति विशेषस्तु एष पार्थानुकीर्तितः ॥ ३६॥

त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ ।
भारावतरणार्थं हि प्रविष्टौ मानुषीं तनुम् ॥ ३७॥

जानाम्यध्यात्मयोगांश्च योऽहं यस्माच्च भारत ॥ ३८

निवृत्तिलक्षणो धर्मस् तथाऽऽभ्युदयिकोऽपि च ।
नराणामयनं ख्यातो ह्यहमेकस्सनातनः ॥ ३९

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं मम ताः पूर्वं ततो नारायणोऽस्म्यहम् ॥ ४०

[1]वासयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहम् ॥ ४१

गतिश्च सर्वभूतानां प्रजानां चापि भारत ।
व्याप्ते मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ॥ ४२

अधिभूतनिविष्टश्च तद्विश्वं चास्मि भारत ।

---

1. ब—रासयामि

[1]कर्मणा च ह्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥ ४३
दमात् सिद्धिं परीप्सन्तो मां जनाः कामयन्ति हि ।
दिवं चामुं च मध्यं च तस्माद्दामोदरोऽस्म्यहम् ॥ ४४
पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं तथा ।
ममैतानि सदा गर्भः पृश्निगर्भस्ततोऽस्म्यहम् ॥ ४५
ऋषयः प्राहुरेवं मां त्रितं कूपाभिपातनैः ।
पृश्निगर्भ त्रितं पाहीत्येकतद्वितवागिदम् ॥ ४६
ततस्स ब्रह्मणः पुत्र आद्यस्त्वृषिवरस्तथा ।
उत्ततारोदपानाद्वै पृश्निगर्भानुकीर्तनात् ॥ ४७
सूर्यस्य तपतो लोकान् अग्नेश्चचन्द्रस्य चाप्युत ।
अंशवो यत् प्रकाशन्ते ममैते केशसंज्ञिताः ॥ ४८
सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः ॥ ४८॥
स्वपत्न्यामाहितो गर्भ उचथ्येन महात्मना ।
रहिते तामृषिर्याचे कदाचिद्देवताज्ञया ॥ ४९॥
बृहस्पतिरथाविन्दत् तां पत्नीं तस्य धीमतः ॥ ५०
ततो वै तमृषिश्रेष्ठं मैथुनोपगतं तथा ।
उवाच गर्भः कौन्तेय पञ्चभूतगुणात्मकः ॥ ५१

गर्भः—

पूर्वागतोऽहं वरद नार्हसे मां प्रबाधितुम् ॥ ५१॥

1. घ—विक्रमाच्च ह्यहं

एतद्बृहस्पतिश्श्रुत्वा चुक्रोध च शशाप च ॥ ५२

बृहस्पतिः—

मैथुनोपगतो यस्मात् त्वयाऽहं विनिवारितः ।

तस्मादन्धो भव त्वं हि मच्छापान्नात्र संशयः ॥ ५३

श्रीभगवान्—

स शापादृषिमुख्यस्य दीर्घं तम उपेयिवान् ।

स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा ॥ ५४

वेदानवाप्य चतुरस् साङ्गोपाङ्गान् सनातनान् ।

प्रयोजयामास तदा नाम गुह्यमिदं मम ॥ ५५

आनुपूर्व्येण विधिना केशवेति पुनः पुनः ।

स चक्षुष्मान् समभवत् स मुनिः पूर्ववत् पुनः ॥ ५६

एवं हि वरदं नाम केशवेति ममार्जुन ।

देवानामथ सर्वेषाम् ऋषीणां च महात्मनाम् ॥ ५७

अग्निस्सोमेन संयुक्त एकयोनिर्मुखाकृतिः ।

अग्नीषोममयं तस्माज् जगत् सर्वं चराचरम् ॥ ५८

आह पुराणे भवत्येतदेकयोन्यावग्नीषोमौ देवाश्चाग्निमुखा इति ॥ ५९ ॥ एकयोनित्वाच्च परस्परं हर्षयन्तौ लोकान् धारयत इति ॥ ६० ॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३२९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
[ अस्मिन्नध्याये ५८ श्लोकाः २ वाक्ये ]

## ॥ त्रिंशदधिकत्रिशततमोऽध्यायः ॥

श्रीकृष्णेनार्जुनं प्रति सृष्टिप्रकारकथनम् ॥ १ ॥ तथा ब्राह्मणमहिमानुवर्णनम् ॥ २ ॥

अर्जुनः—

अग्नीषोमौ कथं पूर्वम् एकयोनी प्रकीर्तितौ ।
एतं मे संशयं धीर त्वं छिन्धि मधुसूदन ॥ १

श्रीभगवान्—

अहं ते कथयिष्यामि पुराणं पाण्डुनन्दन ।
आत्मतेजोद्भवं पार्थ शृणुष्वैकमना मम ॥ २

सम्प्रक्षालने कालेऽतिक्रान्ते चतुर्युगसहस्रान्ते अव्यक्ते सर्वभूतप्रलये सर्वभूतस्थावरजङ्गमे ज्योतिर्धरणिवायुरहिते अन्धे तमसि जलैकार्णवे लोके ममायमित्यभिहिते भूतसंज्ञिकेऽद्वितीये प्रतिष्ठिते नैव रात्र्यां न दिवसे न सति न व्यक्ते नाव्यक्ते व्यवस्थिते एतस्यामवस्थायां नारायणगुणाश्रयादजरामरादतीन्द्रियादग्राह्यादसम्भवतस्सत्यादहिंसाल्ललामाद्विविधवृत्तिविशेषादवैरादक्षरादक्षयादचतुर्मूर्तितस्सर्वव्यापिनस्सर्वकर्तुश्शाश्वतात्तमसः पुरुषः प्रादुर्भूतो हरिरित्यव्ययः ॥ ३

निदर्शनं ह्यपि भवति ॥ ४

[1]नासीदहो न रात्रिरासीन्न सदासीत्तम एव पुरस्ताद्-
भवद्विश्वरूपम् ॥ ५ ॥ सा विश्वरूपस्य रजनीति ॥ ६ ॥ एव-
मर्थोऽस्यानुभाष्यते ॥ ७

[2]तस्येदानीं तमस्सम्भवस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे
स पुरुषः प्रजाः सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ ससर्ज ॥८॥
ततो भूतसर्गे प्रसृष्टे प्रजाः कर्मवशाद्ब्रह्मक्षत्रमुपातिष्ठन् ॥९॥
यः सोमस्तद्ब्रह्म ॥१०॥ यद्ब्रह्म तद्ब्राह्मणः ॥ ११ ॥ योऽग्नि-
स्तत्क्षत्रं ॥ १२ ॥ क्षत्राद्ब्रह्म बलवत्तरम् ॥ १३ ॥ कस्मादिति
॥१४॥ [3]लोके प्रत्यक्षगुणमेतत् ॥१५॥ यथा ब्राह्मणेभ्यः परं
भूतं नोत्पन्नं पूर्वं ॥ १६ ॥ दीप्यमानेऽग्नौ जुहोति इति कृत्वा
ब्रवीमि ॥१७॥ भूतसर्गः कृतो ब्रह्मणा ॥ १८ ॥ भूतानि च
प्रतिष्ठाप्य त्रैलोक्यं धार्यत इति मन्त्रवादोऽभिहितो भवति
१९

त्वमग्ने यज्ञानां होता विश्वेषां हितो देवेभिर्मानुषे जनेति
२०

---

1. घ—५, ६, ७ वाक्यानि न सन्ति

2. घ—तस्येदानीमिति पदद्वयं न घकोशे

3. घ—लोके सा विश्वरूपस्य जननीति । एवमर्थोऽस्यानुभाषते । तमस्सम्भवस्य ब्रह्मयोनौ ब्रह्मणः प्रादुर्भावे स प्रजाः सिसृक्षमाणः प्रत्यक्षगुणमेतद । यथा—ब्राह्मणेभ्यः अयं द्विरुक्तोऽधिको घ-कोशे

निदर्शनं चात्र भवति विश्वेषामग्ने यज्ञानां त्वं होतेति ॥२१

हितो देवैर्मनुजेन इति ॥ २२

अग्निर्हि यज्ञानां होता कर्ता स चाग्निर्ब्रह्म ॥ २३

न ह्यृते मन्त्रधनमस्ति ॥ २४ ॥ न विना पुरुषं तत्
सम्भवति ॥ २५ ॥ मन्त्राणां पूजा विद्यते देवमानुषाणामेक-
स्सहोच्यतेति ॥२६॥ नियुक्ता एव मानुषाः ॥२७॥ अहो-
रात्रादिविकरान्ते चात्र ब्राह्मणस्य याजनं विधीयते ॥२८॥
न क्षत्रियवैश्ययोः ॥ २९ ॥ अस्माद्ब्राह्मणा अग्निर्भूत्वा यज्ञा-
द्देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्तीति शतपथे हि ॥३०॥
ब्राह्मणे भवति ॥ ३१

अग्नौ [1]समिद्धे स जुहोति यो विद्वान् ब्राह्मणमुखेनाहुती-
र्जुहोति ॥ ३२

एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति ॥ ३३
अग्निर्विष्णुस्सर्वभूतान्यनुप्रविश्य प्राणान् धारयति ॥ ३४

अपि चात्र सनत्कुमारगीताश्श्लोका भवन्ति ॥ ३५

विश्वं ब्रह्माऽसृजत् पूर्वं सर्वादिर्निरवस्करः ।
ब्रह्मघोषैर्दिवं गच्छन्त्यमरा ब्रह्मयोनयः ॥ ३६

---

1. क-घ—स जुहोति समिद्धो अग्ने यो विद्वान् ब्राह्मणमुखे दाना-
नाहुतीर्जुहोति । [पाठान्तरम्]

ब्राह्मणानां मतिर्वाक्यं कर्मश्रद्धातपांसि च ।
धारयन्ति महीं द्यां च [1]शैक्यो वागमृतं तथा ॥ ३७
नास्ति सत्यात् परो धर्मो नास्ति मातृसमो गुरुः ।
ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतले ॥ ३८

नैषामुक्षा वर्धते नोत वाहो
न गर्गरो मथ्यति सम्प्रदाने ।
अपध्वस्ता दस्युभूता भवन्ति
येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः ॥ ३९

वेदपुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः सर्वात्मानस्सर्व-
कर्तारस् सर्वभावनाश्च ब्राह्मणाः ॥ ४०

वाक्संयमकाले हि तस्य देवस्य ब्राह्मणाः प्रथमं प्रादुर्भूताः
॥४१॥ ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूताः ॥ ४२

इत्थं च सुरासुरविशिष्टा ब्राह्मणाः ॥ ४३ ॥ यदा मया
ब्रह्मभूतेन पुरा स्वयमेव चोत्पादितास्सुरास्सुरादयो भूतविशेषा-
स्स्थापिता निगृहीताश्च ॥४४॥ तेषां प्रभावः श्रूयताम् ॥४५॥
अहल्याधर्षणनिमित्तं तर्हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः
॥ ४६ ॥ गौतमनिमित्तं चेन्द्रो मुष्कवियोगं मेषवृषणत्वं
चावाप ॥ ४७

---

1. क—शैत्याचार्यमृतं यथा (शैत्यो वागमृतं यथा)
ख—शैत्यं चामृतं यथा

अश्विनोर्ग्रहप्रतिषेधायोद्यतस्य पुरन्दरस्य च्यवनेन स्तम्भितो बाहुः ॥ ४८

क्रतुवधप्राप्तमन्युना च दक्षेण हि तपसाऽऽत्मानं संयोज्य त्रिनेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता ॥ ४९

त्रिपुरवधार्थं दीक्षामभ्युपगतस्य रुद्रस्य उशनसा स्वजटा-
शिरस उत्कृत्याग्नौ प्रयुक्ताः ॥५०॥ ततः प्रादुर्भूता भुजङ्गमाः
॥ ५१ ॥ तैरस्य भुजङ्गैः पीड्यमानः कण्ठो नीलतामुपगतः
॥५२॥ पूर्वं च मन्वन्तरे स्वायम्भुवे नारायणहस्तबन्धग्रहणा-
न्नीलकण्ठत्वमुपागतः ॥ ५३

अमृतोत्पादनान्ते पुरश्चरणतां विपस्योपगतश्च ॥ ५४ ॥
अङ्गिरसो बृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलापः
॥५५॥ बृहस्पतिरपश्चुक्रोध यस्मान्ममोपस्पृशतः कलुषीभूता
न च प्रसादमुपगतास्तस्मादद्यप्रभृति झषमकरमत्स्यकच्छपशत-
मण्डूकसङ्कीर्णाः कलुषीभवतेति ॥ ५६ ॥ ततः प्रभृत्यापो
यादोभिस्सङ्कीर्णास्संवृत्ताः ॥ ५७

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसु-
राणां ॥५८॥ स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरे-
भ्यः ॥ ५९

अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त हे स्वसरयं ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां

पुरोहितः प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमस्माकं देवा वर्धन्ते वयं क्षीयामस्तदेनं त्वं वारयितुमर्हसि तस्माद्वयं जयेमेति ॥६०

विश्वरूपं नन्दनवनं गतं मातोवाच पुत्र किं परपक्षवर्धनस्त्वं मातुलपक्षं नाशयसि नार्हस्येवं कर्तुमिति ॥६१॥ स हि विश्वरूपो मातुर्वचनमनतिक्रमणीयमिति मत्वा सम्पूज्य हिरण्यकशिपुमगात् ॥　६२

हैरण्यगर्भाच्च वसिष्ठाद्धिरण्यकशिपुश्शापं प्राप्तवान् यस्मात्त्वयाऽऽवृतोऽन्यो होता तस्मादसमाप्तयज्ञस्त्वमपूर्वात् सत्त्वजाताद्वधं प्राप्स्यसीति ॥६३॥ तस्माच्छापदानाद्धिरण्यकशिपुः प्राप्तवान् वधम् ॥　६४

विश्वरूपो मातृपक्षवर्धनोऽत्यर्थं तपस्वी ह्यभवत् ॥ ६५ ॥ तस्य व्रतभङ्गार्थमिन्द्रो बत [1]भव्याश्श्रीमत्योऽप्सरसो युयोज ॥ ६६ ॥ ताश्च दृष्ट्वा मनः क्षुभितं तस्याभवत् ॥६७॥ तासु चाप्सरस्सु नचिरादेव सक्तोऽभवत् ॥६८॥ सक्तं चैनं ज्ञात्वा अप्सरस ऊचुर्गच्छामहे वयं यथागतमिति ॥　६९

तास्त्वाष्ट्र उवाच । क्व गमिष्यथास्यतां तावन्मया सह श्रेयो भविष्यतीति ॥ ७० ॥ तास्तमब्रुवन् वयं देवस्त्रियोऽप्सरस इन्द्रं वरदं पुरा प्रभविष्णुं वृणीमह इति ॥　७१

---

1. घकोशे "भव्या" इतिपदं नास्ति

अथ ता विश्वरूपोऽब्रवीदथ वै सेन्द्रा न भविष्यन्तीति ॥७२॥ ततो मन्त्राञ्जजाप तैर्मन्त्रैः प्रावर्धत त्रिशिराः ॥७३॥ एकेनास्येन सर्वलोकेषु द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं पपौ [1]एकेनापः एकेन सुराम् ॥ ७४ ॥ अथेन्द्रस्तं वर्धमानं सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे सह देवैः ॥ ७५ ॥ ते देवास्सेन्द्रा ब्रह्माणमभिजग्मुः ॥ ७६ ॥ ऊचुश्च विश्वरूपेण सर्वयज्ञेषु सुहुतस्सोमः पीयते वयमभागास्संवृत्ता अरिपक्षो वर्धते वयं क्षीयामस्तदर्हसे नो विधातुं श्रेयो यदनन्तरमिति ॥ ७७

तान् ब्रह्मोवाच य एष ऋषिस्तप्यते दधीचस्स याच्यतां यथा कलेवरं जह्यात् तस्यास्थीनि सन्ति अस्थिभिर्वज्रं क्रियतामिति ॥ ७८

ततो देवास्तत्रागच्छन्त यत्र [2]दधीचो भगवानृषिस्तपस्तेपे ॥ ७९ ॥ सेन्द्रा देवास्तमभिगम्योचुर्भगवंस्तव सर्वं कुशलं मनश्चेति ॥ ८०

तान् दधीच उवाच स्वागतं भवद्भिः उच्यतां किं क्रियतां यद्वक्ष्यथ तत् करिष्यामि इति ॥ ८१

---

1. अ—इतः 'सोमं पीयते' इत्येतत्पर्यन्तं नास्ति

2. क-ख—ऋचीको

ते तमब्रुवञ् शरीरपरित्यागं लोकहितार्थं अस्माकं चेति
भगवन् कर्तुमर्हसीति ॥ ८२

एवमुक्तो दधीचस्तानब्रवीत् । सहस्रं वर्षाणामैन्द्रं पदं
व्याप्यते मया यदि जह्याम् ॥८३॥ तथेत्युक्त्वेन्द्रः स्थानं दत्त्वा
तपस्यभवत् ॥८४॥ इन्द्रो दधीचोऽभवत् ॥८५॥ तावत्पूर्णे
देवास्सेन्द्राः आगमकालोऽयं देहविन्यासार्ह इति ॥८६॥ अथ
दधीचस्तावदविमनाः सुखदुःखसमो महायोगाद् आत्मनि
परमात्मानं समाधाय शरीरपरित्यागं चकार ॥ ८७

तस्मिन् परमात्मन्यवसिते तान्यस्थीनि विधाता सङ्गृह्य
वज्रमकरोत् ॥ ८८ ॥ तेन वज्रेणाभेद्येनाप्रधृष्येण ब्रह्मास्थि-
सम्भूतेन विष्णुप्रविष्टेनेन्द्रो विश्वरूपं जघान ॥८९॥ शिरसा
चास्य च्छेदनं चकार ॥ ९० ॥ तस्मादनन्तरं विश्वरूपगात्र-
मथनसम्भवं त्वाष्ट्रोत्पादितमरिं वृत्रमिन्द्रो जघान ॥ ९१

तस्य द्विधाभूतायां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं परि-
त्यज्य ह्यसम्भवाच्च शीततोयां मानससरोगतां नलिनीं प्रतिपेदे
॥९२॥ तत्र चैश्वर्ययोगादणुमात्रो भूत्वा विसग्रन्थिं प्रविवेश ॥
९३

अथ तस्मिन् ब्रह्मवध्याकृते प्रनष्टे त्रैलोक्यनाथे जगदीश्वरे
इन्द्रे जगदनीश्वरं बभूव ॥ ९४ ॥ देवान् रजस्तमश्चाविवेश

॥९५॥ मन्त्रा न प्रावर्तन्त महर्षीणां ॥९६॥ रक्षांसि प्रादु-
रभवन् ॥९७॥ ब्रह्म चोत्सादनं जगाम ॥९८॥ अनिन्द्रेशा
अबला लोकाः सुप्रधर्षा बभूवुः ॥ ९९

अथ देवाश्च ऋषयश्चायुषः पुत्रं नहुषं नाम देवानां राज्येऽ
भिषिचुः ॥ १०० ॥ नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे
ज्वलद्भिस्सर्वभूततेजोहरैस्त्रिविष्टपं पालयामास ॥ १०१

अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च हृष्टाश्च बभूवुः ॥
१०२

[1]अथोवाच नहुषः सर्वं मां शक्रोपभोग्यमुपस्थितमृते शची-
मिति ॥१०३॥ स एवमुक्त्वा शचीसमीपमगच्छत् ॥१०४॥
बृहस्पतिगृहेवासिनीमुवाच चैनां सुभगेऽहमिन्द्रो देवानां मां
भजस्वेति ॥१०५॥ तं शची प्रत्युवाच प्रकृत्या त्वं धर्मवत्सलः
सोमवंशोद्भवश्च नार्हसि परपत्नीधर्षणं कर्तुमिति ॥ १०६

अथोवाच नहुष ऐन्द्रं पदमध्यास्यते मयाऽहमिन्द्रस्य रत्नहरो
नात्राधर्मः कश्चित् त्वमिन्द्रोपभुक्तेति ॥१०७॥ सा चैनमुवाच
अस्ति मम किञ्चिद्व्रतं पर्यवसितं तस्यावभृथे त्वामुपगम्य वदामि
कैश्चिदेवाहोभिरिति ॥ १०८ ॥ स शच्यैवमभिहितो नहुषो
जगाम ॥ १०९

1. अ—वाक्यचतुष्टयं नास्ति

अथ शची दुःखशोकार्ता भर्तृदर्शनलालसा नहुषभयपरीता बृहस्पतिमुपागच्छत् ॥११०॥ स च तामागतां दृष्ट्वा ध्यानं प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाच अनेनैव व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमावाहय सा तव इन्द्रं दर्शयिष्यतीति ॥ १११ ॥ सा महानियमस्थिता देवीमुपश्रुतिं वरदां मन्त्रैराह्वयत् ॥११२॥ सोपश्रुतिः आगात् ॥११३॥ उवाच चैनामियमस्मीति त्वयाऽऽहूतोपस्थिता किं ते करवाणीति ॥११४॥ तां मूर्ध्ना प्रणम्यैवमुवाच शची—भगवत्यर्हसि मे भर्तारं दर्शयितुं त्वं सत्या मता सतां चेति ॥११५॥ सैनां मानसं सरोऽनयत् ॥ ११६ ॥ तत्रेन्द्रं बिसग्रन्थिगतमदर्शयत् ११७

अनामयः पत्नीं शचीं कृशां चेन्द्रो दृष्ट्वा चिन्तयांबभूव—अहो मम दुःखमिदमद्योपगतं नष्टं हि मामियमद्यान्विष्य पद्भ्यामागता दुःखार्तेति ॥ ११८ ॥ तामिन्द्र उवाच कथं वाऽऽगता इति ॥११९॥ सा तमुवाच नहुषो मां दुष्टस्तर्जयति कालश्चास्य मया कृत इति ॥ १२० ॥ तामिन्द्र उवाच गच्छ नहुषस्त्वया वाच्योऽपूर्वेण ऋषियुक्तेन वाहनेन त्वमधिगतो मामुद्वहस्वेति ॥१२१॥ इन्द्रस्य हि वाहनानि मनसः प्रियाण्यधिरूढानि मया अन्येन नोपयातुमर्हसीति ॥ १२२ ॥ सैवमुक्ता

दृष्ट्वा जगाम ॥ १२३ ॥ इन्द्रोऽपि बिसग्रन्थिमेवाविवेश भूयः
१२४

अथेन्द्राणीं दृष्ट्वाऽभ्यागतामुवाच नहुषो यो मे त्वया कालः परिकल्पितः स सम्पूर्ण इति ॥१२५॥ तं शच्यब्रवीच्छक्रेण यथोक्तं दुष्करामिति ॥१२६॥ अथ महर्षियुक्तं वाहनमधिरूढः शचीसमीपमगच्छत् ॥
१२७

अथ मैत्रावरुणिः कुम्भयोनिरगस्त्यो महर्षिः शिबिकां वहन् महर्षीन् धिक्क्रियमाणांस्तानविशेषेण पश्यत ॥१२८॥ स्वयं प्रश्नान् पृच्छता गृहीतः पद्भ्यां च समस्पृश्यत ॥१२९॥ मुनिस्तमब्रवीदकार्यवृत्त पतस्व अजगरो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति ॥ १३० ॥ स तु नहुषो वाक्यसमकालमेव तस्माद्यानादवापतत् ॥
१३१

अथानिन्द्रं पुनस्त्रैलोक्यम् ॥ १३२ ॥ ततो देवा ऋषयश्च भगवन्तं विष्णुं भोगीन्द्रशयनं अभिजग्मुः ॥१३३॥ ऊचुश्चैनं भगवन्तमिन्द्रं ब्रह्मवध्याभिभूतं त्रातुमर्हसीति ॥१३४॥ ततस्स वरदस्तानब्रवीदश्वमेधं महायज्ञं वैष्णवं शक्रोऽभियजतु ततस्स्व-स्थानं प्राप्स्यतीति ॥१३५॥ ततो देवा ऋषयश्चेन्द्रं नापश्यन् यदा तदा शचीमूचुर्गच्छ सुभगे इन्द्रमानयस्वेति ॥ १३६ ॥ सा गत्वा तमिन्द्रमर्चयत् ॥ १३७ ॥ इन्द्रश्च तस्मात् सरस-

स्सत्वरमुत्थाय बृहस्पतिमभिजगाम ॥१३८॥ बृहस्पतिश्चाश्व-
मेधं महाक्रतुं शक्रायाहरत् ॥ १३९ ॥ तत्र सारङ्गं मेध्यमश्व-
मुत्सृज्य पावनमेवं कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिस्स्थानं प्राप-
यामास ॥ १४०

ततस्स देवराजो देवैर्ऋषिभिश्च स्तूयमानस्त्रिविष्टपस्थो
निष्कल्मषो बभूव ॥१४१॥ ब्रह्महत्यां चतुर्षु स्थानेषु व्यभजत्
वनितावनस्पतिजलावनिषु ॥१४२॥ वनितासु रजः । वृक्षेषु
निर्यासः । वारिषु फेनाः पृथिव्यामूषराः अस्पृश्याः ॥१४३॥
तस्माद्धविरलवणं पच्यते ॥१४४॥ [1]एवमिन्द्रो ब्रह्मतेजःप्रभा-
वोपबृंहितश्शत्रुवधं च कृत्वा स्थानं प्रापितः ॥ १४५

नहुषस्य शापमोक्षनिमित्तं देवैर्ऋषिभिश्च याच्यमानोऽगस्त्यः
प्राह । १४६

यावत् स स्वकुले श्रीमान् धर्मराजो युधिष्ठिरः ।
कथयित्वा स्वकान् प्रश्नान् भीमं तं च विमोक्ष्यते ॥ १४७

आकाशगङ्गागतश्च पुरा भारद्वाजो महर्षिरुपास्पृशत्
॥ १४८ ॥ त्रीन् क्रमता विष्णुनासादितः ॥ १४९ ॥
सः भारद्वाजेन स्वतलेन पाणिनोरसि ताडितः सलक्षणोरस्कस्सं-
वृत्तः ॥ १५०

1. घ—"एवमिन्द्रो ब्रह्मतेज" इत्यारभ्य १४५-१५७, दक्षस्य या वै
दुहितरः" इत्यन्तं नास्ति

भृगुणा महर्षिणा शप्तोऽग्निस्सर्वभक्षत्वमुपपादितः ॥ १५१

अदितिर्वै देवानामन्नमपचदेतद्भुक्त्वा देवा असुरान् हनिष्यन्तीति ॥ १५२ ॥ तत्र बुधो व्रतचर्यासमाप्तावागच्छत्
॥ १५३ ॥ अदितिं चायाचद्भिक्षां देहीति ॥ १५४ ॥ सा तत्र देवैः पूर्वमेवैतत् प्राश्यं नान्येनेत्यदितिर्भिक्षां नादात् ॥ १५५ ॥
अथ भिक्षाप्रत्याख्यानरुषितेन बुधेन ब्रह्मभूतेन विवस्वतो द्वितीये जन्मन्यण्डसंज्ञितस्य अण्डं मारितम् ॥ १५६ ॥
आदित्यस्तेन मार्ताण्डो विवस्वानभवत् ॥ १५७

दक्षस्य या वै दुहितरष्षष्टिरासंस्तासां काश्यपाय त्रयोदश प्रादाद्दश धर्माय दश मनवे सप्तविंशतिमिन्दवे ॥ १५८ ॥
नक्षत्राख्यां गतासु सोमो रोहिण्यामभ्यधिकं प्रीतिमानभूत्
॥ १५९ ॥ ततस्ताश्शिष्टाः पत्न्य ईर्ष्यावत्यः पितृसमीपं गत्वेममर्थं शशंसुः भगवंस्तासु तुल्यजन्मप्रभावासु सोमो रोहिणीमधिकं भजतीति ॥ १६० ॥ सोऽब्रवीद्यक्ष्मैनमावेक्ष्यत इति
॥ १६१ ॥ दक्षशापाच्च सोमं राजानं यक्ष्माऽऽविवेश ॥ १६२
स यक्ष्मणाऽऽविष्टो दक्षमगात् दक्षश्चैनमब्रवीन्न समं वर्तयसीति
॥ १६३ ॥ तत्रर्षयस्सोममब्रुवन् क्षीयसे यक्ष्मणा पश्चिमायां दिशि समुद्रे हिरण्यसरस्तीर्थं तत्र गत्वा आत्मानमभिषेचयस्वेति ॥ १६४ ॥ अथागच्छत् सोमस्तत्र ॥ १६५ ॥ हिरण्यसर-

स्तीर्थं गत्वा चात्मनः स्नपनमकरोत् ॥१६६॥ स्नात्वा चात्मानं पाप्मनो मोक्षयामास ॥ १६७ ॥ तत्रावभासितस्तीर्थे यदा सोमस्तदाप्रभृति तीर्थं तत्प्रभासमिति नाम्ना ख्यातं बभूव ॥ १६८

तच्छापादद्यापि क्षीयते सोमोऽमावास्यान्तरस्थः ॥१६९॥ पौर्णमासान्तरेऽक्षीयमाणो विष्ठितो मेघलेखाप्रतिच्छन्नं वपुर्दर्शयति ॥ १७० ॥ मेघसदृशं वर्णमगमत् ॥ १७१ ॥ तदस्य शशलक्षणं विमलमभवत् ॥ १७२

स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरदिग्विभागे तपस्तेपे ॥१७३ ततस्तस्य तपस्तप्यतः सर्वगन्धवहश्शुचिर्वायुर्वायमानश्शरीरमस्पृशत् ॥ १७४ ॥ स तपसा तापितवपुः कृशो वायुना वीज्यमानो हृदये परितोषमुपागमत् ॥१७५॥ तत्र तस्यानिलजनितकृतपरितोषस्य सद्यो वनस्पतयः पुष्पशोभां निदर्शितवन्तः ॥१७६॥ तदैव स शशापैनान् न सर्वकालं पुष्पफलवन्तो भविष्यथेति ॥ १७७

अथ नारायणो लोकहितार्थं बडबामुखो नाम ऋषिः पुरा बभूव ॥१७८॥ तस्य मेरौ तप्यतस्समुद्र आहूतो नागतः ॥१७९॥ तेनामर्षितेनात्मगात्रोष्मणा समुद्रस्स्तिमितजलः कृतः ॥१८०॥ स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो जनितः ॥ १८१

उक्तश्चाप्यपेयो भविष्यसि ॥१८२॥ एतदेवाद्यापि बडबा-
मुखसंज्ञितेन अग्निना पीयमानं भविष्यति इति ॥ १८३ ॥
तदेतदद्यापि बडबामुखसंज्ञितेनानुवर्तिना तोयं सामुद्रं पीयते॥
१८४

पुरा दक्षकोपादुमा हिमवतो गिरेर्दुहिता बभूव ॥१८५॥
गिरेर्दुहितरमुमां प्राक् कन्यां रुद्रश्चकमे ॥१८६॥ भृगुरपि च
महर्षिर्हिमवन्तमागत्याब्रवीत् कन्यामुमां मे दातुमर्हसीति ॥
१८७॥ तमब्रवीद्धिमवानभिलषितो मे वरो रुद्र इति ॥१८८
तमब्रवीद्भृगुः यस्मात्त्वया कन्या न दत्ता वरणकृतभावः प्रत्या-
ख्यातः तस्मात्त्वं न रत्नानां भाजनं भविष्यसीति ॥ १८९ ॥

अद्यप्रभृत्येतदवस्थितमृषिवचनम् ॥ १९० ॥ तदेवंविधं
माहात्म्यं ब्राह्मणानाम् ॥ १९१

एवं क्षत्रमपि शाश्वतीमव्ययां च पृथिवीं पत्नीमभिगम्य
बुभुजे ॥ १९२

तदेतद्ब्रह्मक्षत्रमग्नीषोमीयम् ॥१९३॥ तेन जगद्धार्यते ॥ १९४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३० ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
[ अस्मिन्नध्याये ७ श्लोकाः १८७ वाक्यानि ]

---

## ॥ एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥

श्रीकृष्णेनार्जुनं प्रति हृषीकेशादिस्वनामनिर्वचनम् ॥

श्रीभगवान्—

नाम्नां निरुक्तं वक्ष्यामि शृणुष्वैकाग्रमानसः ॥ ॥
सूर्याचन्द्रमसौ शश्वन्मत्केशैरंशुसंज्ञितैः ।
बोधयन् स्वापयंश्चैव जगदुत्तिष्ठते पृथक् ॥ १॥
बोधनात् स्वापनाच्चैव जगतो हर्षणं भवेत् ।
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ॥ २॥
हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥ ३
इलोपहूतं यागेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितश्श्रेष्ठश् तस्माद्धरिरहं स्मृतः ॥ ४
धामसारो हि लोकानाम् ऋतं चैवावधारितम् ।
ऋतधामा ततो विप्रैस् सद्यश्चाहं प्रकीर्तितः ॥ ५
नष्टां च धरणीं पूर्वम् अविन्दं वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥ ६
शिपिविष्टेति चास्योक्त्या हीनरोमा शिपिर्भवेत् ।
तेनाविष्टं हि यत् कर्म शिपिविष्ट इति स्मृतः ॥ ७

यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद् गुह्यनामधरो ह्यहम् ॥ ८

स्तुत्वा मां शिपिविष्टेति यास्को ह्यृषिरुदारधीः ।
मत्प्रसादादथो नष्टं निरुक्तमभिजग्मिवान् ॥ ९

न हि जातो न जायेयं न जनिष्ये कदाचन ।
क्षेत्रज्ञस्सर्वभूतानां तस्मादहमजस्स्मृतः ॥ १०

नोक्तपूर्वं मया क्षुद्रम् अश्लीलं वा कथञ्चन ।
जाता ब्रह्मस्वरूपा मे सत्या देवी सरस्वती ॥ ११

सच्चासच्चैव कौन्तेय मया वेशितमात्मनि ।
पौष्करे ब्रह्मसदने सत्यं मामृषयो विदुः ॥ १२

सत्त्वान्न च्युतपूर्वोऽहं सत्त्वं वै वृद्धिमत् कृतम् ।
जन्म हित्वाऽभवत् सत्त्वं पूर्वकं मे नरोत्तम ॥ १३

निराशीःकर्मयुक्तं च सात्त्वतं चाप्यकल्पयम् ।
सात्त्वतज्ञानदृष्टोऽहं सात्त्वतस्सात्त्वते पथे ॥ १४

कृषामि मेदिनीं पार्थ भूत्वा कृष्णायसो हलः ।
कृष्णो वर्णश्च मे यस्मात् तस्मात् कृष्णोऽहमर्जुन ॥ १५

मया संश्लेषिता भूमिर् व्योम्ना तच्चापि वायुना ।
वायुश्च तेजसा सार्धं वैकुण्ठं तत्त्वतो मम ॥ १६

निर्वाणं परमं विद्धि धर्मोऽसौ पर उच्यते ।
सत्यादच्युतपूर्वोऽहम् अच्युतस्तेन कर्मणा ॥ १७
पृथिवीनभसी चोभे विश्रुते विश्वलौकिके ।
तयोस्संन्धारणार्थाय प्रागधः खं स्वमञ्जसा ॥ १८
निरुक्तवेदविदुषो ह्येते शब्दार्थचिन्तकाः ।
ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्मृतः ॥ १९
[1]अधो न क्षीयते यस्माद् वदन्त्यन्ये ह्यधोक्षजम् ॥ १९॥
शब्द एवं पदैरेष व्याहृतः परमर्षिभिः ।
नान्योऽप्यधोक्षजो लोके ऋते नारायणं प्रभुम् ॥ २०॥
घृतं ममार्चिषो लोके जनानां प्राणधारणम् ।
घृतार्चिरहमव्यग्रैर् वेदज्ञैः परिकीर्तितः ॥ २१॥
त्रयो हि धातवः ख्याताः कर्मजा इति मे स्मृताः ।
पित्तं वायुश्च श्लेष्मा च एष सङ्घात उच्यते ॥ २२॥
एतैश्च धार्यते जन्तुर् एतैः क्षीणैश्च क्षीयते ।
आयुर्वेदविदस्तस्मात् त्रिधातुं मां प्रचक्षते ॥ २३॥
वृषो हि भगवान् धर्मः ख्यातो लोकेषु भारत ।
एवं वेदविदाख्यातं विदुर्मां वृषमुत्तमम् ॥ २४॥
कपिर्वराहश्श्रेष्ठश्च धर्मश्च वृष उच्यते ।

---

1. अ-क—नास्तीदमर्धम्

तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापतिः ॥ २५॥

न चादिर्न मध्यं न चान्तं कदाचित्
व्यजानन् द्विजा मे सुरास्सासुराश्च ।
अनादिर्ह्यमध्यस्तथा चाप्यनन्तः
प्रगीतोऽहमीशो विभुर्लोकसाक्षी ॥ २६॥

शुचीनि श्रवणीयानि शृणोमीह धनञ्जय ।
न च पापं तु गृह्णामि ततोऽहं वै शुचिश्रवाः ॥ २७॥

एकशृङ्गः पुरा भूत्वा वराहो नन्दिवर्धनः ।
इमामुपावहं भूमिम् एकशृङ्गस्ततो ह्यहम् ॥ २८॥

तथैवाहं त्रिककुदो वाराहं रूपमास्थितः ।
त्रिककुत्त्वेन विख्यातस् शरीरस्य प्रमापणात् ॥ २९॥

विरिञ्च इति यः प्रोक्तः कपिलज्ञानचिन्तकैः ।
स प्रजापतिरेवाहं रोचनात् सर्वलोककृत् ॥ ३०॥

विद्यासहायवन्तं माम् आदित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्यास् साङ्ख्या निश्चितनिश्चयाः ॥ ३१॥

हिरण्यगर्भो द्युतिमान् एष यश्छन्दसि स्तुतः ।
योगैस्सम्पूज्यते नित्यं स एवाहं विभुस्स्मृतः ॥ ३२॥

एकविंशतिशाखं च ऋग्वेदं मां प्रचक्षते ।
सहस्रशाखं यत् साम साम वेदविदो जनाः ॥ ३३॥

षट्पञ्चाशत् तथाष्टौ च सप्तत्रिंशत् तथैव च ।
यस्मिञ् शाखा यजुर्वेदे सोऽहमाध्वर्यवे स्मृतः ॥ ३४॥

पञ्चकल्पमथर्वाणं कृत्याभिः परिजृम्भणम् ।
कल्पयन्ति हि मां विप्रा अथर्वाणविदस्तथा ॥ ३५॥

शाखाभेदाश्च ये केचिद् विद्याश्शाखासु गीतयः ।
स्वरवर्णसमुच्चारास् सर्वांस्तान् विद्धि मत्कृतान् ॥ ३६॥

यत्तद्धयशिरः पार्थ समुदेति वरप्रदम् ।
सोऽहमेवोत्तरे भागे पदक्रमविभागवित् ॥ ३७॥

रामादेशितमार्गेण मत्प्रसादान्महात्मना ।
पाञ्चालेन क्रमः प्राप्तस् तस्माद्भूतस्सनातनात् ॥ ३८॥

बाहूल्यगोत्रस्स बभौ प्रथमः क्रमपारगः ॥ ३९

नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमम् ।
क्रमं प्रणीय शिक्षां च प्रणयित्वा स बाहुलम् ॥ ४०

पुण्डरीको[1]ऽथ राजा च ब्रह्मदत्तः प्रतापवान् ।
जनूमरणजं दुःखं स्मृत्वा स्मृत्वा पुनः पुनः ॥ ४१

सप्तजातिषु मुख्यत्वं योगिनां स्वपदं गतः ।
पुराऽहमात्मजःपार्थ [2]पठितः कारणान्तरे ॥ ४२

---

1. घ—बृहद्भानुः　　2. घ—प्रसूतः

धर्मस्य कुरुशार्दूल ततोऽहं धर्मजस्स्मृतः ॥ ४२॥

नरनारायणौ पूर्वं तपस्तेपतुरुत्तमम् ।
धर्मयानं समारूढौ पर्वते गन्धमादने ॥ ४३॥

तत्कालसमयं चैव दक्षयज्ञो बभूव ह ।
न चैवाकल्पयद्भागं दक्षो रुद्रस्य भारत ॥ ४४॥

ततस्स देवीवचनाद् दक्षयज्ञमुपाद्रवत् ।
ससर्ज भूतं क्रोधेन प्रज्वलन्तं मुहुर्मुहुः ॥ ४५॥

तच्छूलं भस्मसात् कृत्वा दक्षयज्ञं सविस्तरम् ।
आवयोस्सहसाऽगच्छद् बदर्याश्रममन्तिकात् ॥ ४६॥
वेगेन महता पार्थ पतन्नारायणोरसि ॥ ४७

ततस्ते तेजसाऽऽविष्टाः केशा नारायणस्य च ।
बभूवुर्मुञ्जवर्णास्तु ततोऽहं मुञ्जकेशवान् ॥ ४८

तच्च शूलं विनिर्धूतं हुङ्कारेण महात्मना ।
जगाम शङ्करकरं नारायणसमाहतम् ॥ ४९

अथ रुद्र उपाधावत् तावृषी तपसाऽन्वितौ ॥ ४९॥

तत एनं समुद्धूतं कण्ठे जग्राह पाणिना ।
नारायणस्स विश्वात्मा ततो मे शितिकण्ठता ॥ ५०॥

अथ रुद्रविघातार्थम् इषीकां जगृहे ततः ।

मन्त्रैश्च संयुयोजाशु सोऽभवत् परशुर्महान् ॥ ५१॥

क्षिपंश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा ।
ततोऽहं खण्डपरशुस् स्मृतः परशुखण्डनात् ॥ ५२॥

नामानि चैव गुह्यानि निरुक्तानि च भारत ।
ऋषिभिः कथितानीह यानि सङ्कीर्तितानि वै ॥ ५३॥

एवं बहुविधै रूपैश् चरामीह वसुन्धराम् ।
स्वर्लोकं ब्रह्मलोकं च भूलोकं च सनातनम् ॥ ५४॥

मया त्वं रक्षितो युद्धे महान्तं प्राप्तवाञ् जयम् ॥ ५५

यस्तु ते सोऽग्रतो याति युद्धे सम्प्रत्युपस्थितः ।
तं रुद्रं विद्धि कौन्तेय देवदेवं पिनाकिनम् ॥ ५६

कालस्स एवाभिहितः क्रोधजेति मया तव ।
निहतांस्तेन वै पूर्वं हतवानसि वै रिपून् ॥ ५७

अमेयात्मप्रभावस्त्वं देवदेवमुमापतिम् ।
भजस्व नित्यं प्रयतो विश्वेशं परमव्ययम् ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥
[अस्मिन्नध्याये ५८ श्लोकाः]

---

## ॥ द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥



श्वेतद्वीपाद्बदर्याश्रममुपागतस्य नारदस्य श्रीनारायणेन संवादः ॥

शौनकः—

सौते सुमहदाख्यानं भवता परिकीर्तितम् ।
यच्छ्रुत्वेमे मुनिगणाः परं विस्मयमागताः ॥ १

सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं सौम्य नारायणकथा यथा ॥ २

विशुद्धचित्तास्संवृत्ताश् श्रुत्वेमामादितः कथाम् ।
नारायणाश्रयां पुण्यां सर्वपापप्रमोचनीम् ॥ ३

दुर्दर्शो भगवान् देवस् सर्वलोकनमस्कृतः ।
देवैस्सब्रह्मकैः कृत्स्नैर् अन्यैश्च स महर्षिभिः ॥ ४

दृष्टवान् नारदो यत्र देवं नारायणं हरिम् ।
नूनमेतद्ध्यनुमतं तस्य देवस्य सूतज ॥ ५

यद्दृष्टवाञ्जगन्नाथम् अनिरुद्धतनौ स्थितम् ।
यत् प्राद्रवत् पुनर्भूयो नारदो देवसत्तमौ ॥ ६

नरनारायणौ द्रष्टुं कारणं तद्ब्रवीहि मे ।
समागमे तस्य चाभ्यां यद्वृत्तं तच्च कथ्यताम् ॥ ७

सूतः—

तस्मिन् यज्ञे वर्तमाने राज्ञः पारिक्षितस्य वै ।
कर्मान्तरेषु विधिवद् वर्तमानेषु शौनक ॥ ८

कृष्णद्वैपायनं व्यासम् ऋषिं वेदनिधिं प्रभुम् ।
परिपप्रच्छ राजेन्द्रः पितामहपितामहम् ॥ ९

जनमेजयः—

श्वेतद्वीपान्निवृत्तेन नारदेन सुरर्षिणा ।
ध्यायता भगवद्वाक्यं चेष्टितं किमतः परम् ॥ १०

बदर्याश्रममागम्य समागम्य च तावृषी ।
कियन्तं कालमवसत् काः कथाः पृष्टवांश्च सः ॥ ११

इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमथ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ॥ १२

नवनीतं यथा दध्नो चन्दनं मलयाद्यथा ।
आरण्यकं च वेदेभ्य ओषधीभ्योऽमृतं यथा ॥ १३

समुद्धृतमिदं ब्रह्मन् कथामृतमनुत्तमम् ॥ १३॥

तपोनिधे त्वयं भोक्ता नारायणसमाश्रयः ।
अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम ॥ १४॥

स ईशो भगवान् देवस् सर्वभूतवरप्रदः ।
यमाविशन्ति कल्पान्ते सर्वे ब्रह्मादयस्सुराः ॥ १५॥

ऋषयश्च सगन्धर्वा यच्च किञ्चिच्चराचरम् ।

न ततोऽस्ति परं मन्ये पावनं दिवि चेह च ॥ १६॥
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं प्रोक्तं नारायणकथा यथा ॥ १७॥
सर्वथा पाविताःस्मेह श्रुत्वेमामादितः कथाम् ।
हरेर्विश्वेश्वरस्येह सर्वपापप्रणाशनीम् ॥ १८॥
न चित्रं कृतवांस्तात यदार्यो मे धनञ्जयः ।
वासुदेवसहायोऽयं प्राप्तवानाहवे जयम् ॥ १९॥
न चास्य किञ्चिदप्राप्यं मन्ये लोकेष्वपि त्रिषु ।
त्रैलोक्यनाथो विष्णुस्तु यस्य साह्यात् सखाऽभवत् ॥ २०॥
धन्याश्च सर्व एवासन् ब्रह्मंस्ते मम पूर्वकाः ।
हितकृच्च सखा चैव एष आसीज्जनार्दनः ॥ २१॥
तपसाऽप्येष दुर्दर्शो भगवाँल्लोकपूजितः ।
यं दृष्टवन्तस्ते साक्षाच् छ्रीवत्साङ्कविभूषणम् ॥ २२॥
तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः ।
न चाल्पतेजसमृषिं त्वं चैवावैषि नारदम् ॥ २३॥
दृष्टवान् यो हरिं देवं नारायणमजं विभुम् ।
श्वेतद्वीपं समासाद्य येन दृष्टस्स्वयं हरिः ॥ २४॥
देवप्रसादानुमतं व्यक्तं तत्तस्य दर्शनम् ।
यं दृष्टवांस्तदा देवम् अनिरुद्धतनौ स्थितम् ॥ २५॥

बदरीमाश्रमं यत्र नारदः प्राद्रवत् तदा ।
नरनारायणौ द्रष्टुं किं नु तत् कारणं मुने ॥ २६॥

[1]श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः ।
बदरीमाश्रमं प्राप्य समागम्य च तावृषी ॥ २७॥

कियन्तं कालमवसत् काः कथाः पृष्टवांश्च सः ।
श्वेतद्वीपादुपावृत्ते तस्मिन् वा सुमहात्मनि ॥ २८॥

किमब्रूतां महात्मानौ नरनारायणावृषी ।
तदेतन्मे यथातत्त्वं सर्वं व्याख्यातुमर्हसि ॥ २९॥

सूतः—

तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशम्पायनमन्तिके ॥ ३०॥

व्यासः—

तदेतत् सर्वमाचक्ष्व यन्मत्तश्श्रुतवानसि ॥ ३१

सूतः—

गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततस्सर्वम् इतिहासं पुरातनम् ॥ ३२

वैशम्पायनः—

नमस्तस्मै भगवते व्यासायामिततेजसे ।
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥ ३३

---

1. घ—अर्धचतुष्टयं नास्ति

नारदेन पुरा या मे गुरवे विनिवेदिता ।
ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः ॥ ३४

प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययम् ।
निवृत्तो नारदो राजंस् तरसा मेरुमागमत् ॥ ३५
हृदयेनोद्वहन् [1]हारं यद्दत्तं परमात्मना ॥ ३५॥

पश्चात्तस्याभवद्राजन्नात्मनस्साध्वसं महत् ।
यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः ॥ ३६॥

ततो मेरोः प्रचक्राम पर्वतं गन्धमादनम् ।
निपपात स खात् तूर्णं विशालां बदरीमनु ॥ ३७॥

ततस्स ददृशे देवौ पुराणावृषिसत्तमौ ।
तपश्चरन्तौ सुमहद् आत्मनिष्ठौ महाव्रतौ ॥ ३८॥

तेजसाऽभ्यधिकौ सूर्यात् सर्वलोकविलोचनात् ।
श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ ॥ ३९॥

जानुपादभुजान्तौ तु पादयोश्चक्रलक्षणौ ।
व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ ॥ ४०॥

षष्टिदन्तावष्टदंष्ट्रौ मेघौघसदृशस्वनौ ।
स्वास्यौ पृथुललाटौ तु सुहनू च सुनासिकौ ॥ ४१॥

अर्कपत्रेण सदृशी शिरसी देवयोस्तयोः ॥

---

1. अ-क-ख—भारं

एवं लक्षणसम्पन्नौ महापुरुषलक्षणौ ।
स दृष्ट्वा नारदो हृष्टस् ताभ्यां च प्रतिपूजितः ॥ ४२॥

स्वागतेन तु भाष्यैव पृष्टश्चानामयं तदा ।
बभूवान्तर्गतमतिर् निरीक्ष्य पुरुषोत्तमौ ॥ ४३॥

समागतौ हि तत्रैतौ सर्वभूतनमस्कृतौ ।
श्वेतद्वीपे मया दृष्टौ तादृशावृषिसत्तमौ ॥ ४४॥

इति सञ्चिन्त्य मनसा कृत्वा चापि प्रदक्षिणम् ।
उपोपविविशे तत्र पीठे कुशमये शिवे ॥ ४५॥

ततस्तौ तपसां वासौ यशसां तेजसामपि ।
ऋषी शमदमोपेतौ कृत्वा पौर्वाह्णिकं विधिम् ॥ ४६॥

पश्चान्नारदमव्यग्रं पाद्यार्घ्याभ्यां समर्चितम् ।
विविशाते पीठिकायां कृतातिथ्याह्निकौ नृप ॥ ४७॥

तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत ।
आज्याहुतिमहाज्वालैर् यज्ञवाट इवाग्निभिः ॥ ४८॥

अथ नारायणस्तत्र नारदं वाक्यमब्रवीत् ।
सुखोपविष्टं विधिना कृतातिथ्यं सुखस्थितम् ॥ ४९॥

श्रीभगवान्—

अपीदानीं भगवता परमात्मा सनातनः ।
श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा ॥ ५०॥

नारदः—

दृष्टस्तेऽद्यैव पुरुषश् श्रीमान् विश्वधरोऽव्ययः ।
सर्वे हि लोकास्तत्रस्थास् तथा देवास्सुरर्षिभिः ॥ ५१॥

अद्यापि चैनं पश्यामि युवां पश्यन् सनातनौ ॥ ५२

यैर्लक्षणैरुपेतस्स हरिरव्यक्तरूपधृक् ।
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम् ॥ ५३

दृष्टौ मया युवां तत्र तस्य देवस्य पार्श्वतः ।
इहैव चागतोऽस्म्यद्य विसृष्टः परमात्मना ॥ ५४

को नु तस्य महेशस्य तेजसा तपसा श्रिया ।
सदृशस्त्रिषु लोकेषु ऋते धर्मात्मजौ युवाम् ॥ ५५

तेन मे कथितं पूर्वं यो मे क्षेत्रज्ञसंज्ञकः ।
प्रादुर्भावाश्च कथिता यस्मिन् यस्मिन् भवे यथा ॥ ५६

तत्र ये पुरुषाश्श्वेताः पञ्चेन्द्रियविवर्जिताः ।
प्रतिबुद्धाश्च ये सर्वे भक्ताश्च पुरुषोत्तमम् ॥ ५७

येऽर्चयन्ति सदा देवं तैस्सार्धं रमते च सः ।
प्रियभक्तो हि भगवान् परमात्मा द्विजप्रियः ॥ ५८

विश्वभुक् सर्वगो देवो बान्धवो भक्तवत्सलः ॥ ५८॥

तपसा योज्य चात्मानं श्वेतद्वीपात् परं हि यत् ।
तेज इत्यभिविख्यातं स्वयं भासाऽवभासितम् ॥ ५९॥

शान्तिस्थस्त्रिषु लोकेषु शुद्धानां भावितात्मनाम् ।
एकया शुभया बुद्ध्या नैष्ठिकं व्रतमास्थितः ॥ ६०॥

न तत्र सूर्यस्तपति न सोमोऽभिविराजते ।
न वाति वायुर्देवेशस् तपश्चरति यत्र ह ॥ ६१॥

वेदीमष्टतलोत्सेधां भूमावास्ते स विश्वभुक् ।
एकपादस्थितो देव ऊर्ध्वबाहुरुदङ्मुखः ॥ ६२॥

साङ्गानावर्तयन् वेदांस् तपस्तेपेऽतिदारुणम् ।
यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् ॥ ६३॥

शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ।
नागास्सुपर्णा गन्धर्वास् सिद्धा राजर्षयश्च ये ॥ ६४॥

हव्यं कव्यं च तस्मिंस्तु विधिपूर्वं प्रयुञ्जते ।
कृत्स्नं तु तस्य देवस्य चरणावुप[1]तिष्ठति ॥ ६५॥

याः क्रियास्सम्प्रयुक्तास्स्युर् एकान्तगतबुद्धिभिः ।
तास्सर्वाश्शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥ ६६॥

न चास्त्यस्य प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यते त्रिषु लोकेषु ततोऽस्म्येकान्तितां गतः ॥ ६७॥

इह चैवागतोऽस्म्यद्य विसृष्टः परमात्मना ।

---

1. अ-ख—तिष्ठत

एवं मे भगवान् देवस् स्वयमाख्यातवान् हरिः ॥ ६८॥
आसिष्ये तत्परो भूत्वा युवाभ्यामिह नित्यशः ॥ ६९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥
[ अस्मिन्नध्याये ६९ श्लोकाः ]

---

## ॥ त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥

नरनारायणाभ्यां नारदाय श्रीभगवन्महिमानुवर्णनम् ॥ १ ॥ बदर्याश्रमे नारदेन चिरतरं तपश्चर्या ॥ २ ॥

---

नरनारायणौ—

धन्योऽस्यनुगृहीतोऽसि यत्ते दृष्टस्स्वयम्प्रभुः ।
न हि तं दृष्टवान् कश्चित् पद्मयोनिरपि स्वयम् ॥ १

अव्यक्तयोनिर्भगवान् दुर्दर्शः पुरुषोत्तमः ।
नारदैतद्धि ते सत्यं वचनं समुदाहृतम् ॥ २

नास्य भक्तात् प्रियतरो लोके कश्चन विद्यते ।
ततस्स्वयं दर्शितवांस् तदात्मानं द्विजोत्तम ॥ ३

तपोभिस्तदवाप्तव्यं स्थानं हि परमात्मनः ।
न तस्य प्राप्नुयात् कश्चिद् ऋते ह्यावां द्विजोत्तम ॥ ४

या हि सूर्यसहस्रस्य समस्तस्य भवेद्द्युतिः ।
स्थानस्य साऽभवत्तस्य स्वयं तेन विराजता ॥ ५

तस्मादुत्तिष्ठते विप्र गुणो गन्धो भुवः पतेः ।
क्षमा क्षमावतां श्रेष्ठ येन भूमिस्स्म उच्यते ॥ ६

तस्मादुत्तिष्ठते देवात् सर्वभूतहिते रतात् ।
[1]आपो येन स्म संयुक्ताश् शीतत्वं प्राप्नुवन्ति च ॥ ७

तस्मादेव समुद्भूतं तेजो रूपगुणात्मकम् ।
येन स्म युज्यते सूर्यस् तेन लोके विराजते ॥ ८

तस्माद्देवात् समुद्भूतस् स्पर्शः पुरुषसत्तमात् ।
येन स्म युज्यते वायुस् ततो लोकान् विवात्यसौ ॥ ९

तस्मादुत्तिष्ठते शब्दस् सर्वलोकेश्वरात् प्रभोः ।
आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् ॥ १०

तस्माच्चोत्तिष्ठते देवात् सर्वभूतगतं मनः ।
चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ॥ ११

षड्भूतोत्पादकं नाम तत् स्थानं देवसंज्ञितम् ।
विद्यासहायो यत्रास्ते भगवान् हव्यकव्यभुक् ॥ १२

ये तु निष्कल्मषा लोके पुण्यपापविवर्जिताः ।
तेषां च क्षेममध्वानं गच्छतां द्विजसत्तम ॥ १३

---

1. घ—नास्तीदमर्धम

सर्वलोकतमोहन्ता आदित्यो द्वारमुच्यते ॥ १३॥
ज्वालामाली महातेजा येनेदं धार्यते जगत् ॥ १४

आदित्यदग्धगात्राश्च अदृश्याः केनचित् क्वचित् ।
परमाण्वात्मभूतास्ते तं देवं प्रविशन्त्युत ॥ १५

तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः ।
मनोभूतास्ततो भूयः प्रद्युम्नं प्रविशन्त्युत ॥ १६

प्रद्युम्नाच्चापि निर्मुक्ता जीवास्सङ्कर्षणं ततः ।
विशन्ति विप्रप्रवरास् साङ्ख्ययोगाश्च तैस्सह ॥ १७

ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ॥ १८
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥ १८॥

समाहितमनस्काश्च नियतास्संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ १९॥

आवामपि च धर्मस्य गृहे जातौ द्विजोत्तम ।
रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ ॥ २०॥

ये तु तस्यैव देवस्य प्रादुर्भावास्सुरप्रियाः ।
भविष्यन्ति त्रिलोकस्थास् तेषां स्वस्तीत्यथो द्विज ॥ २१॥

विधिना स्वेन युक्ताभ्यां तथा पूजां द्विजोत्तम ।

आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यक् तदुत्तमम् ॥ २२॥

स्वार्थेन विधिना युक्तस् सर्वकृच्छ्रव्रते स्थितः ।
आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन ॥ २३॥

समागतो भगवता सञ्जल्पं कृतवांस्तथा ।
सर्वं हि ते संविदितं त्रैलोक्ये सचराचरे ॥ २४॥

यद्भविष्यति भूतं वा वर्तते वा शुभाशुभम् ॥ २५

वैशम्पायनः—

एतच्छ्रुत्वा तयोर्वाक्यं तपस्युग्रे व्यवस्थितः ।
नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ॥ २६

जजाप विधिवन्मन्त्रान् नारायणपरान् बहून् ॥ २६॥

दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ।
अवसत् स महातेजा नारदो भगवानृषिः ॥ २७॥

तावेवाभ्यर्चयन् देवौ नरनारायणावृषी ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥

नारदं प्रति नरनारायणाभ्यां पित्र्ये कर्मणि विशेषनिरूपणम् ॥

वैशम्पायनः—

कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः ।
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् ॥ १
ततस्तं वचनं प्राह ज्येष्ठो धर्मात्मजः प्रभुः ॥ १॥

नारायणः—

क इज्यते द्विजवर दैवे पित्र्ये च कल्पिते ।
त्वया मतिमतां श्रेष्ठ तन्मे शंस यथातथम् ॥ २॥
क्रियते क्रियते कर्म फलं चाऽस्य किमिष्यते ॥ ३

नारदः—

त्वयैव कथितं पूर्वं दैवं कर्तव्यमित्यपि ।
दैवतश्च परो ज्ञेयः परमात्मा सनातनः ॥ ४
ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम् ।
तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ॥ ५
ममैव पितरं प्रीतः परमेष्ठी त्वजीजनत् ।
अहं सङ्कल्पजस्तस्य पुत्रः प्रथमकल्पितः ॥ ६
यजाम्यहमतस्साधो नारायणविधौ कृते ॥ ६॥

एवं स एव भगवान् पिता माता पितामहः ।
इत्येते पितृयज्ञेषु याज्यो नित्यं जगत्पतिः ॥ ७॥

श्रुतिश्च परमा देव पुत्रान् हि पितरोऽयजन् ॥ ८

वेदश्रुतिः प्रनष्टा च पुनरध्यापिता सुतैः ।
ततस्ते मन्त्रदाः पुत्राः पितॄणामपि वैदिकम् ॥ ९

नूनं सुरैस्तद्विदितं युवयोर्भावितात्मनोः ।
पुत्राश्च पितरश्चैव परस्परमपूजयन् ॥ १०

त्रीन् पिण्डान् न्यस्य वै पृथ्व्यां पूर्वं दत्त्वा कुशान्तिके ।
कथं तु पिण्डसंज्ञां ते लेभिरे पितरः पुनः ॥ ११

नरनारायणौ—

इमां तु धरणीं पूर्वं नष्टां सागरमेखलाम् ।
गोविन्द उज्जहाराशु वाराहं रूपमास्थितः ॥ १२

स्थापयित्वा तु धरणीं स्वस्थाने पुरुषोत्तमः ।
जलकर्दमलिप्ताङ्गो लोककार्यार्थमुद्यतः ॥ १३

प्राप्ते चाह्निककाले स मध्यन्दिनगते रवौ ।
दंष्ट्राविलग्नान् मृत्पिण्डान् विधूय सहसा प्रभुः ॥ १४

स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद ।
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि ॥ १५

सङ्कल्पयित्वा त्रीन् पिण्डान् स्वेनैव विधिना प्रभुः ।

आत्मगात्रेषु सम्भूतैस् स्नेहगर्भैस्तिलैरपि ॥ १६

प्रोक्ष्यापस्सर्वदेवेशः प्राङ्मुखः कृतवान् स्वयम् ।
मर्यादास्थापनार्थं च ततो वचनमुक्तवान् ॥ १७

वृषाकपिः—

अहं हि पितरस्स्रष्टुम् उद्यतो लोककृत् स्वयम् ॥ १७॥

तस्य चिन्तयतस्त्वद्य पितृकार्यविधिं प्रति ।
दंष्ट्राभ्यां प्रविनिर्धूता मृत्पिण्डा दक्षिणां दिशम् ॥ १८॥

आश्रिता धरणीं पिण्डास् तस्मात् पितर एव ते ॥ १९

त्रयो मूर्तिविहीनास्तु पिण्डमूर्तिधरास्त्विमे ।
भवन्तु पितरो लोके मया सृष्टास्सनातनाः ॥ २०

पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस् त्रिषु पिण्डेषु संस्थितः ॥ २१

तस्मान्मत्तोऽधिकः कश्चित् को वाऽप्यर्च्यो महान् भवेत्॥ २१॥

अहमेव पिता लोके अहमेव पितामहः ।
पितामहपिता चैव अहमेवात्र कारणम् ॥ २२॥

नरनारायणौ—

इत्येवमुक्त्वा वचनं देवदेवो वृषाकपिः ।
बराहघूर्णिते विप्र दत्त्वा पिण्डान् सविस्तरम् । २३॥

आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥ २४

एतदर्थं शुभमते पितरः पिण्डसंज्ञिताः ।
लभन्ते सततं पूजां वृषाकपिवचो यथा ॥ २५

ये यजन्ति पितॄन् भक्त्या [1]गुरूंश्चैवातिथींस्तथा ।
गाश्चैव द्विजमुख्यांश्च पितरं मातरं तथा ॥ २६

कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते ॥ २६॥
अन्तर्गतस्स भगवान् सर्वसत्त्वशरीरगः ।

समस्सर्वेषु भूतेषु ईश्वरस्सुखदुःखयोः ॥ २७॥
महान् महात्मा सर्वात्मा नारायण इति श्रुतः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
[ अस्मिन्नध्याये २८ श्लोकाः ]

---

1. ब—गुरुदेवातिथींस्तदा

## ॥ पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥



नरनारायणानुज्ञानेन नारदेन स्वाश्रमं प्रति गमनम् ॥ १ ॥ वैशम्पायनेन जनमेजयं प्रति श्रीव्यासमाहात्म्यकथनम् ॥ २ ॥ सूतेन श्रीनारायणगुणवर्णनपूर्वकं शौनकादिभ्यस्तदनुग्रहाशंसनम् ॥ ३ ॥



वैशम्पायनः—

श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम् ।
अत्यन्तं भक्तिमान् देवे एकान्तित्वमुपेयिवान् ॥ १

उषित्वा वर्षसाहस्रं नरनारायणाश्रमे ।
श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम् ॥ २
जगाम हिमवत्कुक्षावाश्रमं स्वं सुरार्चितम् ॥ २॥

तावद्विख्यातयशसौ नरनारायणावृषी ।
तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमम् ॥ ३॥

त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः ।
पावितात्माऽद्य संवृत्तश् श्रुत्वेमामादितः कथाम् ॥ ४॥

नैव तस्यापरो लोको नायं पार्थिवसत्तम ।
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ॥ ५॥

मज्जन्ति पितरस्तस्य नरके शाश्वतीस्समाः ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ ६॥

कथं नाम भवेद्द्वेष्य आत्मा लोकेषु कस्यचित् ।
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति श्रुतः ॥ ७॥

य एष गुरुरस्माकम् ऋषिर्गन्धवतीसुतः ।
तेनैतत् कथितं तात माहात्म्यं परमात्मनः ॥ ८॥
अस्माच्छ्रुतं मया चेदं कथितं तव चानघ ॥ ९

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ॥ १०
धर्मान् नानाविधांश्चैव को ब्रूयात् तमृते प्रभुम् ॥ १०॥
वर्ततां ते महायज्ञो यथा सङ्कल्पितस्त्वया ।
सङ्कल्पिताश्वमेधस्त्वं श्रुतधर्मश्च तत्त्वतः ॥ ११॥

सूतः—

एतत् तु महदाख्यानं श्रुत्वा पारीक्षितो नृपः ।
ततो यज्ञसमाप्त्यर्थं क्रियास्ताश्च समारभत् ॥ १२॥

नारायणीयमाख्यानम् एतत्ते कथितं मया ।
पृष्टेन शौनकाद्यैश्च नैमिशारण्यवासिभिः ॥ १३॥

नारदेन पुरा यद्वै गुरवे तु निवेदितम् ।
ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः ॥ १४॥

परमर्षिभुवनजनपतिः
स्फुरणीयश्रुतिनियमपरः ।

द्विजगणसहितस्तव भवतु
गतिर्हरिरमरहितः ॥ १५॥
तपसां निधिस्स महतां निधिर्
महतो यशसश्च भाजनं मधुकैटभहा ।
एकान्तिनां शरणदोऽभयदोऽस्तु वस्
स मखभागहरस्त्रिगुणातिगः ॥ १६॥
चतुष्पथमूर्तिधरः
पूर्तेष्टयोश्च फलभागहरः ।
विदधातु नित्यमजितोऽतिबलो
गतिरात्मवतां सुकृतिनामृषीणाम् ॥ १७॥
तं लोकसाक्षिणमजं पुरुषं
रविवर्णमीश्वरं गतिं बहुशः ।
प्रणमध्वमेकमतयो यतस्
सलिलोद्भवोऽपि तमृषिं प्रणतः ॥ १८॥
स हि लोकयोनिरमृतस्य पदं
सूक्ष्मं पुराणमचलं परमं मतः ॥ १९.
साङ्ख्ययोगिभिरुदाहृतं तद्
बुद्ध्या यतात्मभिरजन इति ॥ १९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
[ अस्मिन्नध्याये १९॥ श्लोकाः ]

## ॥ षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥

श्रीनारायणेन स्वनाभिपद्मे ब्रह्मणः सर्जनम् ॥ १ ॥ ततो मधुकैटभयोरुत्पादनम् ॥ २ ॥ ताभ्यां ब्रह्मणो वेदापहरणम् ॥ ३ ॥ हयशिरोरूपिणा हरिणा ब्रह्मणे पुनर्वेदप्रत्यर्पणपूर्वकं मधुकैटभसंहरणम् ॥ ४ ॥ वैशम्पायनेन जनमेजयाय श्रीनारायणमहिमानुवर्णनम् ॥ ५ ॥

---

शौनकः—

श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः ।
जन्म धर्मगृहे चैव नरनारायणात्मकम् ॥ १

महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी ।
प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ॥ २

स यथा नश्श्रुतस्तात कथ्यमानस्त्वयाऽनघ ।
हव्यकव्यजुषो विष्णोर् उदक्पूर्वमहोदधेः ॥ ३

यत्तु तत् कथितं पूर्वं त्वया हयशिरो महत् ।
तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ ४

किं तदुत्पादितं सर्वं हरिणा लोकधारिणा ।
दृष्ट्वा च विबुधश्रेष्ठं सम्प्रीतममितौजसम् ॥ ५

तमश्वशिरसं पूर्वं ब्रह्मा किमकरोन्मुने ।
एतन्निस्संशयं सूत पुराणं ब्रह्मसम्भवम् ॥ ६

कथयस्वोत्तममते पुराणं ब्रह्मसंज्ञितम् ।
पाविताःस्म त्वया सूत पुण्याः कथयता कथाः ॥ ७

सूतः—

कथयिष्यामि ते सर्वं पुराणं वेदसम्मितम् ।
जगौ यद्भगवान् व्यासो यज्ञे पारीक्षितस्य वै ॥ ८

श्रुत्वाऽश्वशिरसो मूर्तिं देवस्य हरिमेधसः ।
उत्पन्नसंशयो राजा पप्रच्छ जनमेजयः ॥ ९

जनमेजयः—

यत्तद्दर्शितवान् ब्रह्मा देवं हयशिरोधरम् ।
किमर्थं तत् समभवत् पुनर्देवोपकल्पितम् ॥ १०

वैशम्पायनः—

यत् किञ्चिदिह लोके वै देहबन्धं विशां पते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ११

ईश्वरो हि जगत्स्रष्टा विभुर्नारायणो विराट् ।
भूतान्तरात्मा वरदस् सगुणो व्यक्तरूपधृक् ॥ १२

भूतप्रलयमव्यक्तं शृण्विमं तु नृपोत्तम ॥ १२॥

धरण्यामथ लीनायाम् अप्सु चैकार्णवे पुरा ।
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले ॥ १३॥

वायौ चाकाशसंलीने आकाशे च मनोगते ।

मनसि व्यक्तसंलीने व्यक्ते चाव्यक्ततां गते ॥　　१४॥
अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ।
तम एवाभवत् सर्वं न प्रज्ञायत किञ्चन ॥　　१५॥
तमसो ब्रह्म सम्भूतम् अमूलममृतात्मकम् ।
तद्विश्वमृतसंज्ञानं पौरुषीं तनुमास्थितम् ॥　　१६॥
सोऽनिरुद्ध इति ख्यातस् तत् प्रधानं प्रचक्षते ।
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम ॥　　१७॥
विद्यासहायवान् देवो विष्वक्सेनो हरिः प्रभुः ।
अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः ॥　　१८॥
जगतश्चिन्तयन् सृष्टिं चित्रां बहुगुणोद्भवाम् ॥　　१९
तस्य चिन्तयतस्सृष्टिं येनात्मा सगुणस्स्मृतः ।
अहङ्कारस्ततो जातो ब्रह्मा इव चतुर्मुखः ॥　　२०
हिरण्यगर्भो द्युतिमान् सर्वलोकपितामहः ॥　　२०॥
पद्मोऽनिरुद्धात् सम्भूतस् तदा पद्मनिभेक्षणः ।
सहस्रपत्रो द्युतिमान् उपविष्टस्सनातनः ॥　　२१॥
[1]ददृशेऽद्भुतसङ्काशो लोकानां पालकः प्रभुः ।
सत्त्वस्थः परमेष्ठी स ततो भूतगणान् सृजत् ॥　　२२॥
पूर्वमेव च पद्मस्य पत्रे सूर्यांशुसप्रभे ।

---

1. घ—अर्धद्वयं नास्ति

नारायणात्ततो बिन्दू अपामास्तां गुणोत्तरौ ॥ २३॥

तपोऽतप्यत् स भगवान् अनादिनिधनोऽच्युतः ।
एकस्तत्राभवद्बिन्दुर् मध्वाभो रुचिरप्रभः ॥ २४॥

स नामतो मधुर्जातस् तदा नारायणाज्ञया ।
[1]कीटाभस्त्वपरो बिन्दुः कैटभो राजसस्तु सः ॥ २५॥

तावाद्यावसुरश्रेष्ठौ तमोराजगुणान्वितौ ।
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ ॥ २६॥

ददृशातेऽरविन्दस्थं ब्रह्माणममितौजसम् ।
सृजन्तं प्रथमं वेदांश् चतुरश्चारुविग्रहान् ॥ २७॥

ततो विग्रहवन्तस्तौ वेदान् दृष्ट्वाऽसुरोत्तमौ ।
सहसा जगृहतू राजन् ब्रह्मणः पश्यतस्तदा ॥ २८॥

अथ तौ दानवौ वेदान् सङ्गृह्याथ सनातनान् ।
रसां विविशतुस्तूर्णम् उदक्पूर्वे महोदधौ ॥ २९॥

ततो हृतेषु वेदेषु ब्रह्मा कश्मलमागमत् ।
ततो वचनमीशानं प्राह वेदैर्विनाकृतः ॥ ३०॥

ब्रह्मा—

वेदा मे परमं चक्षुर् वेदा मे परमं बलम् ।
वेदा मे परमं ज्ञानं वेदा मे ब्रह्म चोत्तमम् ॥ ३१॥

---

1. अ-क-ख—कल्पितस्त्वपरो

इमे वेदा हृतास्सर्वे दानवाभ्यां बलादिति ।
अन्धकारा इमे लोका जाता वेदैर्विनाकृताः ॥ ३२॥
वेदानृते हि किं कुर्यां लोकान् वै स्रष्टुमुद्यतः ।
अहो बत महद्दुःखं वेदनाशनजं मम ॥ ३३॥
प्राप्तं दुनोति हृदयं तीव्रं शोकादरन्धयत् ।
को हि शोकार्णवे मग्नं आगत्याऽद्य समुद्धरेत् ॥ ३४॥
वेदांस्तानानयेन्नष्टान् कस्य चाहं प्रियो भवेत् ॥ ३५

वैशम्पायनः—

इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ।
हरिस्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ॥ ३६
ततो जगौ परं जप्यं साञ्जलिप्रग्रहः प्रभुः ॥ ३६॥

ब्रह्मा—

ॐनमस्ते ब्रह्महृदय नमस्ते मम पूर्वज ।
लोकाद्य भुवनश्रेष्ठ साङ्ख्ययोगनिधे विभो ॥ ३७॥
व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थित ।
विश्वभूतज भूतानाम् अन्तरात्मन्नयोनिज ॥ ३८॥
अहं प्रसादजस्तुभ्यं लोकधाम स्वयंप्रभो ॥ ३९
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं वै द्वितीयं मे जन्मेहासीत् पुरातनम् ॥ ४०

त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ।
त्वत्तश्श्रवणजं चापि चतुर्थं जन्म मे विभो ॥ ४१

नासत्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चापि मे जन्म त्वत्तष्षष्ठं विनिर्मितम् ॥ ४२

इदं च सप्तमं जन्म पद्मजन्मामितप्रभ ।
सर्गे सर्गे ह्यहं पुत्रस् तव त्रिगुणवर्जित ॥ ४३

[1]प्रथितः पुण्डरीकाक्षः प्रधानगुणकल्पितः ।
त्वमीश्वरस्स्वभावश्च भूतानां त्वं प्रभावनः ॥ ४४

त्वया विनिर्मितोऽहं वै चक्षुषा चापि योजितः ।
ते मे वेदा हृताश्चक्षुर् अन्धो जातोऽस्मि जागृहि ॥ ४५

प्रदेहि चक्षुषी ह्येते प्रियोऽहं ते प्रियोऽसि मे ॥ ४५॥

वैशम्पायनः—

एवं स्तुतस्स भगवान् पुरुषस्सर्वतोमुखः ।
जहौ निद्रामथ तदा वेदकार्यार्थमुद्यतः ॥ ४६॥

ऐश्वर्येण स योगेन द्वितीयां तनुमास्थितः ॥ ४७

स्वमानितेन कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरश्शुभ्रं वेदानामालयं प्रभुः ॥ ४८

तस्य मूर्धा समभवद् द्यौस्सनक्षत्रतारका ।

1. घ—इत आरभ्य आशान्तिपर्वसमाप्ति पत्राणां त्रुटितत्वाद् ग्रन्थाः न सन्ति

केशाश्चास्याभवन् दीर्घा रवेरंशुसमाः प्रभोः ॥ ४९

कर्णावाकाशपाताले ललाटं भूतधारिणी ।
गङ्गा सरस्वती पुण्ये भ्रुवावास्तां महाद्युतेः ॥ ५०

चक्षुषी सोमसूर्यौ तु नासा सन्ध्या परा स्मृता ।
अभवच्चास्यमोङ्कारो विद्युज्जिह्वा च निर्मिता ॥ ५१

दन्ताश्च पितरो राजन् सोमपा इति विश्रुताः । ५१॥
भूलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ।
ग्रीवा चास्याभवद्राजन् कालरात्रिर्गुणोत्तरा ॥ ५२॥

एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम् ।
अन्तर्दधे स विश्वेशो विवेश च रसां प्रभुः ॥ ५३॥

रसां पुनः प्रविष्टश्च योगं परममास्थितः ।
शैक्षं परं समास्थाय ओमिति प्रासृजत् स्वरम् ॥ ५४॥

सस्वरस्सानुनादश्च सर्वतस्स्निग्ध एव च ।
बभूवान्तर्हितगतिस् सर्वभूतगुणोदितः ॥ ५५॥

ततस्तावसुरौ कृत्वा वेदान् समयबन्धनान् ।
रसातले विनिक्षिप्य यतश्शब्दस्ततो द्रुतौ ॥ ५६॥

एतस्मिन्नन्तरे राजन् देवो हयशिरोधरः ।
जग्राह वेदानखिलान् रसातलगतान् हरिः ॥ ५७॥

प्रादाच्च ब्रह्मणो भूयस् ततस्स्वां प्रकृतिं गतः ॥ ५८

स्थापयित्वा हयशिरा उदक्पूर्वे महोदधौ ।
वेदानामालयश्चापि बभूवाश्वशिरास्ततः ॥ ५९

अथ तं यदपश्यन्तौ दानवौ मधुकैटभौ ।
पुनराजग्मतुस्तत्र वेगितौ पश्यतां च तौ ॥ ६०

यत्र वेदा विनिक्षिप्तास् तत् स्थानं शून्यमेव च ॥ ६०॥

तत उत्तममास्थाय वेगं बलवतां वरौ ।
पुनरुत्तस्थतुश्शीघ्रं रसानामालयात् तदा ॥ ६१॥

ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ।
श्वेतं चन्द्रविशुद्धाभम् अनिरुद्धतनौ स्थितम् ॥ ६२॥

द्वावप्यमितविक्रान्तौ निद्रायोगमुपागतम् ॥ ६३

आत्मप्रमाणरचिते अपामुपरि कल्पिते ।
शयने नागभोगाढ्ये ज्वालामालासमाकुले ॥ ६४

निष्केवलेन सत्त्वेन सम्पन्नं रुचिरप्रभम् ।
तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ॥ ६५

ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ॥ ६५॥

मधुकैटभौ—

अयं स पुरुषश्श्वेतश् शेते निद्रामुपागतः ।
अनेन नूनं वेदानां कृतमाहरणं रसात् ॥ ६६॥

कस्यैष को नु खल्वेषः किञ्च स्वपिति भोगवान् ॥ ६७

वैशम्पायनः—

इत्युच्चरितवाक्यौ तौ बोधयामासतुर्हरिम् ॥ ६७॥

युद्धार्थिनौ हि विज्ञाय विबुद्धः पुरुषोत्तमः ।
निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनो दधे ॥ ६८॥

अथ युद्धं समभवत् तयोर्नारायणस्य च ॥ ६९

रजस्तमोविष्टतनू तावुभौ मधुकैटभौ ।
ब्रह्मणोऽपचितिं कुर्वञ् जघान मधुसूदनः ॥ ७०

ततस्तयोर्वधेनाशु वेदानां हरणेन च ।
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ॥ ७१

ततः परिवृतो ब्रह्मा अहानिर्वेदसत्कृतः ।
निर्ममे स तदा लोकान् कृत्स्नान् स्थावरजङ्गमान् ॥ ७२

दत्त्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम् ।
तत्रैवान्तर्दधे देवो यत एवागतो हरिः ॥ ७३

तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् ।
पुनः प्रवृत्तो धर्मार्थं तामेव विदधे तनुम् ॥ ७४

एवमेष महाभागो बभूवाश्वशिरा हरिः ॥ ७४॥

पौराणमेतदाख्यानं रूपं वरदमैश्वरम् ।
यो ह्येतद्ब्राह्मणान् नित्यं शृणुयाच्छ्रावयेत वा ॥ ७५॥

न तस्याध्ययनं नाशम् उपगच्छेत् कदाचन ॥ ७६
आराध्य तपसोग्रेण देवं हयशिरोधरम् ।
पाञ्चालेन क्रमः प्राप्तो रामेण पथि दर्शिते ॥ ७७
एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।
पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि ॥ ७८
यां यामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।
तां तां कुर्याद्विकुर्वाणस् स्वयमात्मानमात्मना ॥ ७९
एष वेदनिधिश्श्रीमान् एष वै तपसां निधिः ।
एष योगश्च साङ्ख्यं च ब्रह्म चाग्र्यं हरिर्विभुः ॥ ८०
नारायणपरा वेदा यज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ ८१
नारायणपरं सत्यं व्रतं नारायणाश्रयम् ।
नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ॥ ८२
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ।
नारायणात्मको गन्धो भूमेश्श्रेष्ठतमस्स्मृतः ॥ ८३
अपां चैव गुणो राजन् रसो नारायणात्मकः ।
ज्योतिषश्च गुणो रूपं स्मृतं नारायणात्मकम् ॥ ८४
नारायणात्मकश्चापि शब्द आकाशसम्भवः ।
मनश्चापि ततो भूतम् अव्यक्तगुणलक्षणम् ॥ ८५

नारायणपरः कालो ज्योतिषामयनं च तत् ।
नारायणपरा कीर्तिश् श्रीश्च लक्ष्मीश्च देवताः ॥ ८६
नारायणपरं साङ्ख्यं योगो नारायणात्मकः ॥ ८६॥
कारणं पुरुषो ह्येषां प्रधानं चापि कारणम् ।
स्वभावश्चापि कर्माणि दैवं येषां च कारणम् ॥ ८७॥
पञ्चकारणसंख्यातो निष्ठस्सर्वत्र वै हरिः ॥ ८८
तत्त्वं जिज्ञासमानानां हेतुभिस्सर्वतोमुखैः ।
तत्त्वमेको महायोगी हरिर्नारायणः प्रभुः ॥ ८९
ब्रह्मादिसर्वलोकानाम् ऋषीणां च महात्ममनाम् ।
साङ्ख्यानां योगिनां चैव यतीनां भावितात्मनाम् ॥ ९०
मनीषितानि जानाति केशवो न तु तस्य ते ॥ ९०॥
ये केचित् सर्वलोकेषु दैवं पित्र्यं च कुर्वते ।
दानानि च प्रयच्छन्ति तप्यन्ति च तपो महत् ॥ ९१॥
सर्वेषामाश्रयो विष्णुर् ऐश्वर्यं सर्गमास्थितः ।
सर्वभूतकृतावासो वासुदेवेति चोच्यते ॥ ९२॥

एषो हि नित्यः परमो महर्षिर्
महाविभूतिर्गुणवान् निर्गुणाख्यः ।
गुणैश्च संयोगमुपैति शीघ्रं
कालो यथर्तावृतुसम्प्रयुक्तः ॥ ९३॥

नैवास्य विन्दन्ति गतिं महात्मनो
न चागतिं कश्चिदिहानुपश्यति ।
ज्ञानात्मकाख्यं यमिनो महर्षयः
पश्यन्ति नित्यं पुरुषं पुराणम् ॥ ९४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥
[अस्मिन्नध्याये ९४॥ श्लोकाः]

---

## ॥ सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥



वैशम्पायनेन जनमेजयाय एकान्तिधर्मनिरूपणपूर्वकं लोके तत्प्रचारप्रकारप्रतिपादनम् ॥

---

जनमेजयः—

अहो ह्येकान्तिनस्सर्वान् प्रीणाति भगवान् हरिः ।
विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् ॥ १

ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।
तेषां त्वया हि निर्दिष्टा पारम्पर्यात् परा गतिः ॥ २

चतुर्थ्यां चापि ते गत्यां गच्छन्ति पुरुषोत्तमम् ।
एकान्तिनस्तु पुरुषा गच्छन्ति परमां गतिम् ॥ ३

नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रियः ।
अल्पा हि गतयस्तिस्रो यद्गच्छत्यव्ययं हरिम् ॥ ४

साङ्गोपनिषदान् वेदान् ये विप्रास्सम्यगास्थिताः ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥ ५

तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ।
केनैव धर्मः कथितो देवेन ऋषिणाऽपि वा ॥ ६

एकान्तिनां च का चर्या कदा चोत्पादिता विभो ।
एतन्मे संशयं छिन्धि परं कौतूहलं हि मे ॥ ७

वैशम्पायनः—

समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के वै गीता भगवता स्वयम् ॥ ८

आगतिश्च गतिश्चैव पूर्वं ते कथिता मया ।
गहनो ह्येष वै धर्मो दुर्विज्ञेयोऽकृतात्मभिः ॥ ९

सम्मितस्सामवेदेन पुरेवादिकृते युगे ।
धार्यते स्वयमीशेन राजन् नारायणेन ह ॥ १०

इममर्थं महाराज पृष्टः पार्थेन नारदः ।
ऋषिमध्ये तमाचष्ट शृण्वतोः कृष्णभीष्मयोः ॥ ११

गुरुणा च ममाऽप्येष कथितो नृपसत्तम ।
यथा तु कथितस्तत्र नारदेन तथा शृणु ॥ १२

यदाऽऽसीन्मानसं जन्म नारायणमुखोद्गतम् ।
ब्रह्मणः पृथिवीपाल तदा नारायणस्स्वयम् ॥ १३

तेन धर्मेण कृतवान् दैवं पित्र्यं च भारत ।
फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे ॥ १४

वैखानसाः फेनपेभ्यो तं धर्मं प्रतिपेदिरे ।
वैखानसेभ्यस्सोमस्तं ततस्सोऽन्तर्दधे पुनः ॥ १५

यदाऽऽसीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप ।
यदा पितामहेनैष सोमाद्धर्मः प्रतिष्ठितः ॥ १६

नारायणात्मकं धर्मं रुद्राय प्रददौ च सः ।
ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप ॥ १७

वालखिल्यानृषीन् सर्वान् धर्ममेनमपाठयत् ।
अन्तर्दधे ततो भूयस् तस्य देवस्य मायया ॥ १८

तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत् ।
तत्रैष धर्मस्सम्भूतस् स्वयं नारायणान्नृप ॥ १९

सुपर्णो नाम तमृषिः प्राप्तवान् पुरुषोत्तमात् ।
तपसैव सुतप्तेन दमेन नियमेन च ॥ २०

त्रिः परिक्रान्तवानेनं सुपर्णो धर्ममुत्तमम् ।
यस्मात्तस्माद्व्रतं ह्येतत् त्रिसौपर्णमिति स्मृतम् ॥ २१

ऋग्वेदपाठे पठितं व्रतमेतद्धि दुश्चरम् ।
सुपर्णाद्वाप्यधिगतो धर्म एष सनातनः ॥ २२

वायुना द्विपदां श्रेष्ठ प्रथितो जगदायुषा ।
वायोस्सकाशात् प्राप्तश्च ऋषिभिर्विघसाशिभिः ॥ २३

तेभ्यो महोदधिश्चैनं प्राप्तवान् धर्ममुत्तमम् ।
अन्तर्दधे ततो भूयो नारायणसमाहृतः ॥ २४

यदा भूयश्श्रवणजं जन्म चासीन्महात्मनः ।
ब्रह्मणः पुरुषव्याघ्र तत्तु कीर्तयतश्शृणु ॥ २५

जगत् स्रष्टुमना देवो हरिर्नारायणस्स्वयम् ।
चिन्तयामास पुरुषं जगत्सर्गकरं प्रभुम् ॥ २६

तथा चिन्तयतस्तस्य कर्णाभ्यां पुरुषस्स्मृतः ।
प्रजासर्गकरो ब्रह्म तमुवाच जगत्पतिः ॥ २७

श्रीभगवान्—

सृज प्रजाः पुत्र सर्वा मुखतः पादतस्तथा ।
तेन सर्वं कृतयुगं स्थापयस्व यथाविधि ॥ २८

वैशम्पायनः—

ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे ।
धर्मं चाग्र्यं स जग्राह सरहस्यं ससङ्ग्रहम् ॥ २९

आरण्यकेन सहितं नारायणमुखोद्गतम् ।

उपदिश्य ततो धर्मान् ब्रह्मणेऽमिततेजसे ॥ ३०
तं कार्तयुगधर्माणं निराशीःकर्मसंज्ञितम् ।
जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितम् ॥ ३१
ततोऽथ वरदो देवो ब्रह्मा लोकपितामहः ।
असृजत् स तदा देवान् कृत्स्नान् स्थावरजङ्गमान् ॥ ३२
ततः प्रावर्तत तदा आदौ कृतयुगं शुभम् ।
ततोऽथ सात्त्वतो धर्मो व्याप्य लोकानवस्थितः ॥ ३३
तेनैवाथ स धर्मेण ब्रह्मा लोकविसर्गकृत् ।
पूजयामास देवेशं हरिं नारायणं प्रभुम् ॥ ३४
धर्मप्रतिष्ठाहेतोश्च मनुं स्वारोचिषं ततः ।
अध्यापयामास तदा लोकानां हितकाम्यया ॥ ३५
ततस्स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप ।
अध्यापयत् पुराऽव्यग्रस् स च लोकपतिर्विभो ॥ ३६
ततश्शङ्खपदश्चापि पुत्रमात्मजमौरसम् ।
दिशापालं सुधन्वानम् अध्यापयत भारत ॥ ३७
ततश्चान्तर्गते भूयः प्राप्ते त्रेतायुगे पुनः ।
नासत्ये जन्मनि पुरा ब्रह्मणः पार्थिवोत्तम ॥ ३८
धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः ।
उज्जगादारविन्दाक्षो ब्रह्मणः पश्यतस्तदा ॥ ३९

सनत्कुमारो भगवांस् ततः प्राधीतवान् नृप ॥ ३९॥
सनत्कुमारादपि वा वीरणो वै प्रजापतिः ।
कृतादौ कुरुशार्दूल धर्ममेतमधीतवान् ॥ ४०॥
वीरणश्चाप्यधीत्यैनं रौच्याय मनवे तदा ।
रौच्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे ॥ ४१॥
कुक्षीनाम्ने तं प्रददौ विमलाय च धर्मिणे ।
ततस्त्वन्तर्दधे भूयो नारायणमुखोद्गतः ॥ ४२॥
अण्डजे जन्मनि ततो ब्रह्मणो हरिमेधसः ।
एष धर्मस्समुद्भूतो नारायणमुखेऽधुना ॥ ४३॥
गृहीतो ब्रह्मणा राजन् प्रयुक्तश्च यथाविधि ।
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप । ४४॥
बर्हिषद्भ्यश्च सङ्क्रान्तं सामवेदान्तगं द्विजम् ।
ज्येष्ठनाम्नाऽभिविख्यातं ज्येष्ठसामव्रतो हरिः ॥ ४५॥
ज्येष्ठश्चाप्यनुसङ्क्रान्तो राजानमविकम्पनम् ।
अन्तर्दधे ततो राजन्नेष धर्मः प्रभो हरेः ॥ ४६॥
यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितस् स्वयं नारायणेन ह ॥ ४७॥
पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥ ४८॥

ततो ज्येष्ठे स दौहित्रे प्रादाद्दक्षो नृपोत्तम ।
आदित्ये सवितुश्श्रेष्ठे विवस्वाञ्जगृहे ततः ॥ ४९॥
त्रेतायुगादौ च ततो विवस्वान् मनवे ददौ ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ५०॥
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ॥ ५१॥
यतीनां चापि यो धर्मस् स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥ ५२॥
नारदेन तु सम्प्राप्तस् सरहस्यस्ससङ्ग्रहः ।
एष धर्मो जगन्नाथात् साक्षान्नारायणान्नृप ॥ ५३॥
एवमेष महान् धर्म आद्यो राजन् सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्त्वतैर्धार्यते सदा ॥ ५४॥
धर्मज्ञानेन चानेन सुप्रयुक्तेन कर्मणा ।
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥ ५५॥
एकव्यूहविभागो वा कचिद्द्विव्यूहसंज्ञितः ।
त्रिव्यूहश्चापि संख्यातश् चतुर्व्यूहश्च दृश्यते ॥ ५६॥
हरिरेव च क्षेत्रज्ञो निर्ममो निष्कलस्तथा ।
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः ॥ ५७॥
अतश्च प्रथितो राजन् पञ्चेन्द्रियसमीरणः ।

एष लोकनिधिश्श्रीमान् एष लोकविसर्गकृत् ॥ ५८॥

अकर्ता चैव कर्ता च कार्यं कारणमेव च ।

यथेच्छति तथा राजन् क्रीडते हरिरव्ययः ॥ ५९॥

एवं स परमं ब्रह्म श्वेतचन्द्रसमोऽच्युतः ॥ ६०

यत्र चैकान्तिनो यान्ति नारायणपरायणाः ।

तदेव केवलं स्थानं मुक्तानां परमं भवेत् ॥ ६१

एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम ।

मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥ ६२

एवं स भगवान् व्यासो गुरुर्मम विशां पते ।

कथयामास धर्मज्ञो धर्मराजे द्विजोत्तमः ॥ ६३

ऋषीणां सन्निधौ राजञ् शृण्वतोः कृष्णभीष्मयोः ।

तस्याप्यकथयत् पूर्वं नारदस्सुमहातपाः ॥ ६४

जनमेजयः—

एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम् ।

न कुर्वन्ति कथं विप्रा आद्यं नानाव्रतेऽश्रिताः ॥ ६५

एकान्तिनो हि पुरुषा बहवो दुर्लभा नृप ।

यद्येकान्तिभिराकीर्णं जगत् स्यात् कुरुनन्दन ॥ ६६

अहिंसकैरात्मवद्भिस् सर्वभूतहिते रतैः ।

भवेत् कृतयुगप्राप्तिर् ईदृशैः कर्मवर्जितैः ॥ ६७

वैशम्पायनः—

तिस्रः प्रकृतयो राजन् देहबन्धेषु निर्मिताः ।
सात्त्विकी राजसी चैव तामसी चेति भारत ॥ ६८

देहबन्धेषु पुरुषश् श्रेष्ठः कुरुकुलोद्वह ।
सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चयः ॥ ६९

तत्रापि यो विजानाति पुरुषं ब्रह्मवर्तिनम् ।
नारायणं परं मोक्षं ततो वै सात्त्विकस्स्मृतः ॥ ७०

मनीषितं च प्राप्नोति चिन्तयन् पुरुषोत्तमम् ।
एकान्तभक्तस्ससततं नारायणपरायणः ॥ ७१

मनीषिणो हि ये केचिद् यतयो मोक्षकाङ्क्षिणः ।
तेषां वै च्छिन्नतृष्णानां योगक्षेमवहो हरिः ॥ ७२

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकस्स तु विज्ञेयो भवेन्मोक्षार्थचिन्तकः ॥ ७३

नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान् ।
एवमेष महाभाग प्रबुद्धादपि जायते ॥ ७४

साङ्ख्यतुल्यो हि भूपाल धर्म एकान्तिसेवितः ।
नारायणात्मको मोक्षस् ततो याति परां गतिम् ॥ ७५

राजसी तामसी चैव जनितृप्रकृती स्मृते ।
तदात्मकं हि पुरुषं जायमानं विशां पते ॥ ७६

प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिस्स्वयम् ॥ ७६॥

पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ।
रजसा तमसा चैव मानसं समभिप्लुतम् ॥ ७७॥

कामं देवाश्च मुनयस् सत्त्वस्था नृपसत्तम ।
हीनास्सत्त्वेन सूक्ष्मेण ततो वैकारिकास्स्मृताः ॥ ७८॥

जनमेजयः—

कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम् ॥ ७९

वैशम्पायनः—

सुसूक्ष्मसत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः ।
पुरुषः पुरुषं गच्छेन्निष्क्रियं पञ्चविंशकम् ॥ ८०

एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पाञ्चरात्रं च कथ्यते ॥ ८१
एष एकान्तिनो धर्मो नारायणपरात्मकः ॥ ८१॥

यथा समुद्रात् प्रसृता जलौघास्
तमेव राजन् पुनराविशन्ति ।
इमे जना ज्ञानमहाजलौघा
नारायणं वै पुनराविशन्ति ॥ ८२॥

एष ते कथितो धर्मस् सात्त्वतोऽयं तु पाण्डव ।
कुरुष्वैवं यथान्यायं यदि शक्तो हि भारत ॥ ८३॥

एवं हि सुमहाभागो नारदो गुरवे मम ।
चेतनां यमिनामाह एकान्तगतिमव्ययाम् ॥ ८४॥

व्यासश्चाकथयत् प्रीत्या धर्मपुत्राय धीमते ।
स एव तव धर्मोऽयम् आख्यातः प्रसृतो गुरोः ॥ ८५॥

इत्थं हि दुष्करो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथैवान्ये न भजन्तीह मोहिताः ॥ ८६॥

कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
संहारकारकश्चैव कारणं च विशां पते ॥ ८७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
[अस्मिन्नध्याये ८७॥ श्लोकाः ]

## ॥ अष्टात्रिंशदधिकत्रिशततमोऽध्यायः ॥



वैशम्पायनेन जनमेजयं प्रति श्रीव्यासस्य श्रीनारायणादवान्तरतम इति प्रादुर्भावादिकथनम् ॥ १ ॥ वैशम्पायनेन जनमेजयं प्रति ब्रह्मरुद्र-संवादानुवादः ॥ २ ॥

जनमेजयः—

साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति हि ॥ १

किमेतान्येकनिष्ठानि पृथङ्‌निष्ठानि वा मुने ।
प्रब्रूहि वै मया पृष्टः [1]प्रवक्तृंश्च यथाक्रमम् ॥ २

कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम् ।
वदस्व त्वं मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥ ३

वैशम्पायनः—

जज्ञे बहुज्ञं परमं ह्युदारं
यं द्वीपमध्ये सुतमात्मवन्तम् ।
पराशराद्गन्धवती महर्षिं
तस्मै नमोऽज्ञानतमोनुदाय ॥ ४

पितामहाद् यं प्रवदन्ति षष्ठं
महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्यांशकमेकपुत्रं
द्वैपायनं वेदमहानिधानम् ॥ ५

तमादिकाले सुमहाविभूतिर्
नारायणो ब्रह्म महानिधानम् ।
ससर्ज पुत्रार्थमुदारतेजा
व्यासं महात्मानमजः पुराणः ॥ ६

---

1. अ-ख—प्रवृत्तिं च

जनमेजयः—

तत्त्वेन कथितः पूर्वं सम्भवो द्विजसत्तम ।
वसिष्ठस्य सुतश्शक्तिश् शक्तेः पुत्रः पराशरः ॥ ७

पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ।
भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ॥ ८

किमेतत् पूर्वकं जन्म व्यासस्यामिततेजसः ।
कथयस्वेह धर्मो वै जन्म नारायणोद्भवम् ॥ ९

वैशम्पायनः—

वेदार्थवेत्तुर्व्यासस्य धर्मिष्ठस्य तपोनिधेः ।
गुरोर्मे ज्ञाननिष्ठस्य वासिष्ठस्य दयानिधेः ॥ १०

कृत्वा भारतमाख्यानं तपश्श्रान्तस्य धीमतः ।
शुश्रूषां तत्परा राजन् कृतवन्तो वयं तदा ॥ ११

सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थश्शिष्यो वै शुको व्यासात्मजस्तथा ॥ १२

एतैः परिवृतो व्यासश् शिष्यैः पञ्चभिरुत्तमैः ।
शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ॥ १३

वेदानावर्तयन् साङ्गान् भारतार्थांश्च सर्वशः ।
तमेकमनसं दान्तं युक्ता वयमुपास्महे ॥ १४

कथान्तरे च कस्मिंश्चित् पृष्टोऽस्माभिर्द्विजोत्तमः ।

वेदान् स भारतार्थांश्च जन्म नारायणात् तथा ॥ १५

स पूर्वमुक्त्वा वेदार्थान् भारतार्थांश्च तत्त्ववित् ।
नारायणादिदं जन्म व्याहर्तुमुपचक्रमे ॥ १६

व्यासः—

शृणुध्वमाख्यानवरम् एतदाख्यानमुत्तमम् ।
आदिकालोद्भवं विप्रास् तत्प्रसादाधिगतं मया ॥ १७

प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसम्भवे ।
नारायणो महायोगी शुभाशुभविवर्जितः ॥ १८

ससृजे नाभिजं पुत्रं ब्रह्माणममितप्रभम् ।
ततस्स प्रादुरभवद् अथैनं वाक्यमब्रवीत् ॥ १९

श्रीभगवान्—

मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ।
सृज प्रजास्त्वं विविधा ब्रह्मन् सजडपण्डिताः ॥ २०

व्यासः—

स एवमुक्तो विमुखश् चिन्ताव्याकुलमानसः ।
प्रणम्य वरदं देवम् उवाच हरिमीश्वरम् ॥ २१

बद्धाञ्जलिपुटो बुद्धिर् उपतस्थे हरिं प्रभुम् ।
योगेन चैनां संयोज्य स्वयं संयुयुजे तदा ॥ २२

स तामैश्वर्ययोगस्थां बुध्वा शक्तिमतीं गतिम् ।
उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः ॥ २३

ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ।
ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश ह ॥ २४

अथैनं बुद्धिसंयुक्तं पुनस्स ददृशे हरिः ।
भूयश्चैनं वचः प्राह सृजेमा विविधाः प्रजाः ॥ २५

बाढमित्येव कृत्वाऽसौ यथाऽऽज्ञां शिरसा हरेः ।
तथाऽकरोच्च धर्मात्मा ब्रह्मा लोकपितामहः ॥ २६

एवमुक्त्वा स भगवांस् तत्रैवान्तरधीयत ॥ २६॥

प्राप चैव मुहूर्तेन स्वं स्थानं देवसंज्ञितम् ।
तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत् ॥ २७॥

अथास्य बुद्धिरभवत् पुनरन्या तदा किल ॥ २८

श्रीभगवान्—

सृष्टाः इमाः प्रजास्सर्वा ब्रह्मणा परमेष्ठिना ।
दैत्यदानवगन्धर्वयक्षोरगसमाकुला ॥ २९

जाता चैवं वसुमती भाराक्रान्ता तपस्विनी ॥ २९॥

बहवो बलिनः पृथ्व्यां दैत्यराक्षसदानवाः ।
भविष्यन्ति तपोयुक्ता वरान् प्राप्स्यन्ति चोत्तमान् ॥ ३०॥

अवश्यमेव तैस्सर्वैर् वरदानेन दर्पितैः ।
बाधितव्यास्सुरगणा ऋषयश्च तपोधनाः ॥ ३१॥

तत्र न्याय्यमिदं कर्तुं भारावतरणं मया ॥ ३२

अथ नानासमुद्भूतैर् वसुधायां यथाक्रमम् ।
निग्रहेणैव पापानां साधूनां प्रग्रहेण च ॥ ३३
इयं तपस्विनी धारा धारयिष्यामि मेदिनीम् ॥ ३३॥
मया ह्येषा हि ध्रियते पातालस्थेन भोगिना ।
मया धृता धारयति जगद्धि सचराचरम् ॥ ३४॥
तस्मात् पृथ्व्याः परित्राणं करिष्ये सम्भवं गतः ।
एते मया निहन्तव्या दुर्विनीतास्सुरारयः ॥ ३५॥

व्यासः—

एवं सञ्चिन्तयित्वा तु भगवान् मधुसूदनः ।
रूपाण्यनेकान्यसृजत् प्रादुर्भावानि भारत ॥ ३६॥
वाराहं नारसिंहं च वामनं मानुषं तथा ॥ ३७
अथ भूयो जगत्स्रष्टा गोशब्देनानुनादयन् ।
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥ ३८
अवान्तरतपा नाम सुतो वाक्सम्भवो विभोः ।
भूतभव्यभविष्यज्ञस् सत्यवादी दृढव्रतः ॥ ३९
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ॥ ३९॥

श्रीभगवान्—

वेदाख्याने श्रुतिः कार्या त्वया मतिमतां वर ॥ ४०
तस्मात् कुरु यथाज्ञप्तं ममैतद्वचनं मुने ।
स्वेन भिन्नास्तदा वेदा मनोस्स्वायम्भुवेऽन्तरे ॥ ४१

व्यासः—

ततस्तुतोष भगवान् हरिस्तेनास्य कर्मणा ॥ ४१॥

श्रीभगवान्—

मन्वन्तरेषु पुत्र त्वम् एवं लोकप्रवर्तकः ।
भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥ ४२॥
पुनस्तिष्ये च सम्प्राप्ते कुरवो नाम नामतः ।
भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ॥ ४३॥
तेषां तव प्रसूतानां कुलभेदो भविष्यति ।
परस्परविनाशार्थं त्वामृते द्विजसत्तम ॥ ४४॥
तत्राप्यनेकधा भेदात् वेदव्यासेति संज्ञितः ।
कृष्णे युगे च सम्प्राप्ते कृष्णवर्णो भविष्यसि ॥ ४५॥
धर्माणां विविधानां च कर्ता ज्ञानकरस्तथा ।
भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ॥ ४६॥
वीतरागश्च पुत्रस्ते परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ४७॥

यं मानसं वै प्रवदन्ति पुत्रं
पितामहस्योत्तमबुद्धियुक्तम् ।
वसिष्ठमुग्रं तपसो निधानं
यश्चापि सूर्यं ह्यतिरिच्य भाति ॥ ४८॥

जातो हि तस्यान्वय एष विप्रः
पराशरो नाम महाप्रभावः ।

पिता स ते वेदनिधिर्वरिष्ठो
महामना वै तपसां निवासः ॥ ४९॥
कानीनगर्भः पितृकन्यकायास्
तस्मादृषेस्त्वं भविता स विप्रः ॥ ५०
भूतभव्यभविष्याणां ज्ञानानां वेत्स्यसे गतिम् ॥ ५०॥
ये ह्यतिक्रान्तगाः पूर्वं सहस्रयुगपर्ययाः ।
तांश्च सर्वान् मयादिष्टो द्रक्ष्यसे नात्र संशयः ॥ ५१॥
पुनर्द्रक्ष्यसि चानेकान् सहस्रयुगपर्ययान् ।
अनादिनिधनान् लोके चक्रवत्त्वं महामुने ॥ ५२॥
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥ ५३
शनैश्चरस्सूर्यपुत्रो भविष्यति मनुर्महान् ।
तस्मिन् मन्वन्तरे चैव सप्तर्षिगणपूर्वकः ॥ ५४
त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ ५४॥

व्यासः—

एवं सारस्वतमृषिम् अवान्तरतपां तथा ।
उक्त्वा वचनमीशानस् साधयस्वेत्यथाब्रवीत् ॥ ५५॥
सोऽहं तस्य प्रसादेन देवस्य हरिमेधसः ।
अवान्तरतपात्मानम् अहं जातोऽऽज्ञया हरेः ॥ ५६॥
पुनश्च जातो विख्यातो वसिष्ठकुलनन्दनः ॥ ५७
तदेतत् कथितं जन्म मया पूर्वकमात्मनः ।

नारायणप्रसादेन तदा नारायणांशजम् ॥ ५८
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
पुरा मतिमतां श्रेष्ठाः परमेण समाधिना ॥ ५९
एतद्वः कथितं सर्वं यन्मां पृच्छथ पुत्रकाः ।
पूर्वजन्म भविष्यच्च भक्तानां स्नेहतो मया ॥ ६०

वैशम्पायनः—

एष ते कथितः पूर्वस् सम्भवोऽस्मद्गुरोर्नृप ।
व्यासस्याक्लिष्टमनसो यथा पृष्टं पुनश्शृणु ॥ ६१
साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥ ६२
साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥ ६३
अवान्तरतपा नाम वेदाचार्यस्स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥ ६४
उमापतिः पशुपतिश् श्रीकण्ठो ब्रह्मणस्सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥ ६५
पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥ ६६
यथागमं यथान्यायं निष्ठा नारायणः प्रभुः ।

न चैनमभिजानन्ति तमोभूता विशां पते ॥ ६७

तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योऽस्तीति च वादिनः ॥ ६८

निस्संशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान् हेतुबलान् अध्यावसति माधवः ॥ ६९

पाञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगतास् ते हरिं प्रविशन्ति वै ॥ ७०

साङ्ख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन् ॥ ७०॥

जनमेजयः—

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्श्रेष्ठः को वा योनिरिहोच्यते ॥ ७१॥

वैशम्पायनः—

नमस्कृत्वा तु गुरवे व्यासायामिततेजसे ।
तपोनित्याय वन्द्याय पराय परमर्षये ॥ ७२॥

बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वम् आख्यास्यामि गुणातिगम् ॥ ७३॥

बहवः पुरुषा लोके साङ्ख्ययोगविचारिणः ।
नैकमिच्छन्ति पुरुषम् एकं कुरुकुलोद्वह ॥ ७४॥

इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।
ऋतं सत्यं च प्रख्यातम् ऋषिसिंहेन चिन्तितम् ॥ ७५॥

उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।
अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ॥ ७६॥

समासतस्तु तद्व्यासः पुरुषैकाग्र्यमुक्तवान् ।
तत्तेऽहं सम्प्रवक्ष्यामि प्रसादादमितौजसः ॥ ७७॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ब्रह्मणा सह संवादं त्र्यम्बकस्य विशां पते ॥ ७८॥

क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभे ।
वैजयन्त इति ख्यातः पर्वतः परमो नृप ॥ ७९॥

तत्राध्यात्मगतिं देव एकान्ते प्रविचिन्तयन् ।
वैराजसदनान्नित्यं वैजयन्तं निषेवते ॥ ८०॥

अथ तत्राऽऽसतस्तस्य चतुर्वक्त्रस्य धीमतः ।
ललाटप्रभवः पुत्रश् शिव आगाद्यदृच्छया ॥ ८१॥

अंशांशेनैव योगीशः पुरा त्रिनयनः प्रभुः ।
ततः खान्निपपाताशु धरणीधरमूर्धनि ॥ ८२॥

अग्रतश्चाभवद्भीतो ववन्दे चापि पादयोः ॥ ८३

तं पादयोर्निपतितं स्पृष्ट्वा सव्येन पाणिना ।

उत्थापयामास तदा प्रभुरेकः प्रजापतिः ॥ ८४

उवाच चैनं भगवांश् चिरस्यागतमात्मजम् ॥ ८४॥

पितामहः—

स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मेऽन्तिकम् ।

कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोस्सदा ॥ ८५॥

नित्यमुग्रतपा हि त्वं ततः पृच्छामि ते तपः ॥ ८६

रुद्रः—

त्वत्प्रसादेन भगवन् स्वाध्यायतपसोर्मम ।

कुशलं चाव्ययं चैव सर्वस्य जगतस्तथा ॥ ८७

चिराद् दृष्टोऽसि भगवन् वैराजभवने मया ।

ततोऽहं पर्वतं प्राप्तस् त्विमं त्वत्पादसेवितम् ॥ ८८

कौतूहलं चापि हि मे एकान्तगमनेन वै ।

नैतत् कारणमल्पं हि भविष्यति पितामह ॥ ८९

किं नु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।

सुरासुरैरध्युषितम् ऋषिभिश्चामितप्रभैः ॥ ९०

गन्धर्वैरप्सरोभिश्च सततं सन्निषेवितम् ।

उत्सृज्यैनं गिरिवरम् एकान्तं प्राप्तवानसि ॥ ९१

ब्रह्मा—

वैजयन्तो गिरिवरस् सततं सेव्यते मया ।

अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ १२

रुद्रः—

बह्वः पुरुषा ब्रह्मंस् त्वया सृष्टास्स्वयम्भुवा ।
सृज्यन्ते चापरे ब्रह्मन् स परः पुरुषो विराट् ॥ १३
यो ह्यसौ चिन्त्यते ब्रह्मंस् त्वयैकः पुरुषोत्तमः ।
एतन्मे संशयं छिन्धि परं कौतूहलं हि मे ॥ १४

ब्रह्मा—

बह्वः पुरुषाः पुत्र ये त्वया समुदाहृताः ।
एवमेतदतिक्रान्तं द्रष्टव्यं चैवमित्यपि ॥ १५
आधारत्वं प्रवक्ष्यामि एकस्य पुरुषस्य वै ॥ १५॥
बहूनां पुरुषाणां स यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं आख्यास्यामि गुणातिगम् ॥ १६॥
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि अष्टात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८ ॥ ॥ ८८ ॥ मोक्षधर्मपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

[अस्मिन्नध्याये १७ श्लोकाः]

---

## ॥ एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥

ब्रह्मणा रुद्रं प्रति भगवन्महिमप्रतिपादनम् ॥

ब्रह्मा—

शृणु पुत्र यथा ह्येकः पुरुषश्शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥ १

न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम ।
सगुणो निर्गुणो विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥ २

अशरीरश्शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥ ३

ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतो हि न ग्राह्यः केनचित् क्वचित् ॥ ४

विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ ५

क्षेत्राणि स शरीराणि बीजवन्ति शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥ ६

नागतिर्न गतिस्तस्य ज्ञेया भूतेन केनचित् ।

साङ्ख्येन विधिना चैव योगेन च यथाक्रमम् ॥ ७
चिन्तयामि गतिं तस्य न गतिं वेद्मि चोत्तमाम् ।
यथाज्ञानं तु वक्ष्यामि पुरुषं हि सनातनम् ॥ ८

तस्यैकत्वं महत्त्वं हि स चैकः पुरुषस्स्मृतः ।
महापुरुषशब्दं स बिभर्त्येकस्सनातनः ॥ ९

एको हुताशो बहुधा समिद्धः
एकस्सूर्यस्तपतां योनिरेकः ।
एको वायुर्बहुधा वाति लोके
महोदधिश्चाम्भसां योनिरेकः ॥ १०

पुरुषश्चैको निर्गुणो विश्वरूपस्
तं निर्गुणं पुरुषं चाविशन्ति ।
एतैस्समस्तैर्ऋषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणः ॥ ११

[1]शुभाशुभं कर्म समीरितं यत्
प्रवर्तितस्सर्वलोकेषु कश्चित् ।
तस्मादृषेस्तद्भवतीति विद्याद्
दिव्यन्तरिक्षे भुवि चाप्सु चापि ॥ १२

1. अ—अर्धत्रयं नास्ति

हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा ह्येवं भवति निर्गुणः ॥ १३

अचिन्त्यं चामितं ज्ञात्वा भावसूक्ष्मं चतुष्टयम् ।
विचिन्वन् योऽनया युक्तस् स गच्छेत् पुरुषं प्रभुम् ॥ १४

एकं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।
एकाध्यात्मं तथाऽऽत्मानं परमध्यात्मचिन्तकाः ॥ १५

तत्र यः परमात्मा हि स नित्यो निर्गुणस्स्मृतः ।
स हि नारायणो ज्ञेयस् सर्वात्मा पुरुषो हि सः ॥ १६

न लिप्यते कुतश्चापि पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैस्स युज्यते ॥ १७

ससप्तदशकेनापि राशिना युज्यते च सः ।
एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥ १८

यत् कृत्स्नं वै लोकतन्त्रस्य धाम
वेद्यं परं बोधनीयं च बोध्यम् ।
मन्ता मान्यं प्राशिता प्राशनीयं
घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् ॥ १९

द्रष्टा दृश्यं श्राविता श्रावणीयं
ज्ञाता ज्ञेयं सगुणं निर्गुणं च ।
यद्वै प्रोक्तं गुणसाम्यं प्रधानं
नित्यं चैतच्छाश्वतं चाव्ययं च ॥ २०

धत्ते सूतं धातुराद्यं प्रधानं
तं वै विप्राः प्रवदन्तेऽनिरुद्धम् ।
यद्वै लोके वैदिकं कर्म साधु
आशीर्युक्तं तद्धि तस्योपभोग्यम् ॥ २१

देवास्सर्वे मुनयस्साधु शान्तास्
तं प्राहुश्श्रेयो यज्ञभागैर्यजन्ते ।
अहं ब्रह्मजानां प्रजानामिहाद्यस्
तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥ २२

मत्तो जगज्जङ्गमं स्थावरं च
सर्वे वेदास्सरहस्याश्च पुत्र ॥ २२॥

सर्वेऽपि भक्ताः पुरुषास् स क्रीडति यथेच्छति ।
एवं स एव भगवान् स्वेन ज्ञानेन बोधयत् ॥ २३॥

तदेतत् कथितं पुत्र यथावदनुपृच्छतः ।

[1]साङ्ख्यज्ञाने तथा योगे यथावदनुवर्णितम् ॥ २४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९ ॥
॥ ८८ ॥ मोक्षधर्मपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥
[ अस्मिन्नध्याये २४॥ श्लोकाः ]
[ शान्तिपर्वणि तृतीयसम्पुटं समाप्तम् ]
[ मोक्षधर्मपर्व समाप्तम् ]

---

[ शान्तिपर्व समाप्तम् ]

---

अस्मिन् तृतीयसम्पुटे श्लोकाः ३९८१ वाक्यानि ६४०
शान्तिपर्वणि श्लोकाः १५४८४ वाक्यानि ६९०

---

अतः परमनुशासनपर्व भविष्यति तस्यायमाद्यश्श्लोकः—

युधिष्ठिरः—

धर्मो बहुविधाकारस् सूक्ष्मश्चोक्तः पितामह ।
न च वै हृदये शान्तिर् अस्ति काचिन्ममानघ ॥ १

इति

---

1. अ—नास्तीदमर्धम्

॥ श्रीः ॥

# ॥ महाभारतम् ॥

तत्र

# ॥ १२ ॥ शान्तिपर्वणि ॥ १२ ॥

॥ औत्तराहकोशानुसारिणौ अधिकावध्यायौ ॥

## ।। पूनाचित्रशालापुस्तके - षड्विंशोऽध्यायः ।।

( To face Page 115 of Vol. XIII )

युधिष्ठिरेणार्जुनं प्रति वनवासप्रशंसारूपं वाक्यमुक्त्वा ययातिगीता गाथाः कथयित्वा धनविनिन्दनम् ॥

वैशम्पायनः—

अस्मिन्नेव प्रकरणे धनञ्जयमुदारधीः ।
अभिनीततरं वाक्यम् इत्युवाच युधिष्ठिरः ।। १

युधिष्ठिरः—

यदेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति ।
न स्वर्गो न सुखं नार्थो निर्धनस्येति तन्मृषा ।। २

स्वाध्याययज्ञसंसिद्धा दृश्यन्ते बहवो जनाः ।
तपोरताश्च मुनयो येषां लोकास्सनातनाः ।। ३

ऋषीणां समयं शश्वद् ये रक्षन्ति धनञ्जय ।
आश्रितास्सर्वधर्मज्ञा देवास्तान् ब्राह्मणान् विदुः ।। ४

स्वाध्यायनिष्ठान् हि ऋषीन् ज्ञाननिष्ठांस्तथाऽपरान् ।
बुद्ध्येथास्सन्ततं चापि धर्मनिष्ठान् धनञ्जय ।। ५

ज्ञाननिष्ठेषु कार्याणि प्रतिष्ठाप्यानि पाण्डव ।
वैखानसानां वचनं यथा नो विदितं प्रभो ।। ६

अजाश्च पृश्नयश्चैव सिकताश्चैव भारत ।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ॥ ७

अवाप्यैतानि कर्माणि वेदोक्तानि धनञ्जय ।
दानमध्ययनं यज्ञो निग्रहश्चैव दुर्ग्रहः ॥ ८

दक्षिणेन च पन्थानम् अर्यम्णो ये दिवं गताः ।
एतान् क्रियावतां लोकान् उक्तवान् पूर्वमप्यहम् ॥ ९

उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि ।
एते यागवतां लोका भान्ति पार्थ सनातनाः ॥ १०

तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुरा विदः ।
सन्तोषो वै स्वर्गतमस् सन्तोषः परमं सुखम् ॥ ११

तुष्टेर्न किञ्चित् परमं सा सम्यक् प्रतितिष्ठति ।
विनीतक्रोधहर्षस्य सततं सिद्धिरुत्तमा ॥ १२

अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना ।
योऽभिप्रेत्याहरेत् कामान् कूर्मोऽङ्गानीव सर्वशः ॥ १३

यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ १४

यदा न भावं कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ १५

विनीतमानमोहश्च बहुसङ्गविवर्जितः ।

तदात्मज्योतिषस्साधोर् निर्वाणमुपपद्यते ॥ १६
इदं तु शृणु मे पार्थ ब्रुवतस्संयतेन्द्रियः ।
धर्ममन्ये वृत्तमन्ये धनमीहन्ति चापरे ॥ १७
धनहेतोर्य ईहेत तस्यानीहा गरीयसी ।
भूयान् दोषो हि वित्तस्य यश्च धर्मस्तदाश्रयः ॥ १८
प्रत्यक्षमनुपश्यामि त्वमपि द्रष्टुमर्हसि ।
वर्जनं वर्जनीयानाम् ईहमानेन दुष्करम् ॥ १९
ये वित्तमभिपद्यन्ते सम्यक् त्वं तेषु दुर्लभम् ।
द्रुह्यतः प्रैति तत् प्राहुः प्रतिकूलं यथातथम् ॥ २०
यस्तु सम्भिन्नवृत्तस्स्याद् वीतशोकभयो नरः ।
अल्पेन तृषितो द्रुह्यन् भ्रूणहत्यां न बुध्यते ॥ २१
दुष्यन्त्याददतो भृत्या नित्यं दस्युभयादिव ।
दुर्लभं च धनं प्राप्य भृशं दत्त्वाऽनुतप्यते ॥ २२
अथ नः कस्य किं वाच्यो विमुक्तस्सर्वशस्सुखी ।
देवस्वमुपगृह्यैव धनेन न सुखी भवेत् ॥ २३
तत्र गाथां यज्ञगीतां कीर्तयन्ति पुराविदः ।
त्रयीमुपाश्रितां लोके यज्ञसंस्तरकारिकाम् ॥ २४

यज्ञानि सृष्टानि धनानि धात्रा
यज्ञाय सृष्टः पुरुषो रक्षिता च ।

तस्मात् सर्वं यज्ञ एवोपयोज्यं
धनं न कामाय हितं प्रशस्तम् ॥ २५

एतत् स्वार्थं च कौन्तेय धनं धनवतां वर ।
धाता ददाति मर्त्येभ्यो यज्ञार्थमिति विद्धि तत् ॥ २६

तस्मात् क्रुध्यन्ति पुरुषा न हि तत् कस्यचिद्ध्रुवम् ।
श्रद्दधानस्ततो लोको दद्याच्चैव यजेत च ॥ २७

लब्धस्य त्यागमित्याहुर् न भोगं न च सञ्चयम् ।
तस्य किं सञ्चयेनार्थः कार्ये ज्यायसि तिष्ठति ॥ २८

ये स्वधर्मादपेतेभ्यः प्रयच्छन्त्यल्पबुद्धयः ।
शतं वर्षाणि ते प्रेत्य पुरीषं भुञ्जते जनाः ॥ २९

अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद् दानधर्मोऽपि दुष्करः ॥ ३०

लब्धानामपि वित्तानां बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षड्विंशोऽध्यायः

---

## पूनाचित्रशालापुस्तके

## ।। चतुरशीत्यधिकद्विशततमोऽध्यायः ।।

( To face Page 1520 of Vol. XIII )

वीरभद्रेण दक्षयज्ञभङ्गः ॥ १ ॥ दक्षकृतस्तुतिप्रसन्नेन रुद्रेण दक्षाय वरदानम् ॥ २ ॥

जनमेजयः—

प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे ।
विनाशमगमद्ब्रह्मन् हयमेधः प्रजापतेः ।। १

देव्या मन्युकृतं मत्वा क्रुद्धस्सर्वात्मकः प्रभुः ।
प्रसादात्तस्य दक्षेण स यज्ञस्सन्धितः कथम् ।। २
एतद्वेदितुमिच्छेयं तन्मे ब्रूहि यथातथम् ।। २।।

वैशम्पायनः—

पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् ।
गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ।। ३।।

गन्धर्वाप्सरसाकीर्णे नानाद्रुमलतावृते ।
ऋषिसङ्घैः परिवृतं दक्षं धर्मभृतां वरम् ।। ४।।

पृथिव्यामन्तरिक्षे च ये च स्वर्लोकवासिनः ।
सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ।। ५।।

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
हाहा हूहूश्च गन्धर्वौ तुम्बुरुर्नारदस्तथा ॥ ६॥
विश्वावसुर्विश्वसेनो गन्धर्वाप्सरसस्तथा ।
आदित्या वसवो रुद्रास् साध्यास्सहमरुद्गणैः ॥ ७॥
इन्द्रेण सहितास्सर्वे आगता यज्ञभागिनः ।
ऊष्मपास्सोमपाश्चैव धूमपा आज्यपास्तथा ॥ ८॥
ऋषयः पितरश्चैव आगता ब्रह्मणा सह ।
एते चान्ये च बहवो भूतग्रामाश्चतुर्विधाः ॥ ९॥
जरायुजाण्डजाश्चैव सहसा स्वेदजोद्भिजैः ।
आहूता मन्त्रितास्सर्वे देवाश्च सह पत्निभिः ॥ १०॥
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥ ११
तान् दृष्ट्वा मन्युनाऽऽविष्टो दधीचिर्वाक्यमब्रवीत् ॥ ११॥

दधीचिः—

नायं यज्ञो न वा धर्मो यत्र रुद्रो न इज्यते ।
वधबन्धं प्रपन्ना वै किं नु कालस्य पर्ययः ॥ १२॥
किं नु मोहान्न पश्यन्ति विनाशं पर्युपस्थितम् ।
उपस्थितं महाघोरं न बुध्यन्ति महाध्वरे ॥ १३॥

वैशम्पायनः—

इत्युक्त्वा स महायोगी पश्यति ध्यानचक्षुषा ।

स पश्यति महादेवं देवीं च वरदां शुभाम् ॥ १४॥

नारदं च महात्मानं तस्या देव्यास्समीपतः ।
सन्तोषं परमं लेभे इति निश्चित्य योगवित् ॥ १५॥

एकमन्त्रास्तु ते सर्वे येनेशो न निमन्त्रितः ।
तस्माद्देशादपक्रम्य दधीचिर्वाक्यमब्रवीत् ॥ १६॥

दधीचिः—

अपूज्यपूजनाच्चैव पूज्यानां चाप्यपूजनात् ।
नृघातकसमं पापं शश्वत् प्राप्नोति मानवः ॥ १७॥

अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
देवतानामृषीणां च मध्ये सत्यं ब्रवीम्यहम् ॥ १८॥

आगतं पशुभर्तारं स्रष्टारं जगतः पतिम् ।
अध्वरे ह्यग्रभोक्तारं सर्वेषां पश्यत प्रभुम् ॥ १९॥

दक्षः—

सन्ति नो बहवो रुद्रा शूलहस्ताः कपर्दिनः ।
एकादशस्थानगता नाहं वेद्मि महेश्वरम् ॥ २०॥

दधीचिः—

सर्वेषामेव मन्त्रोऽयं येनासौ न निमन्त्रितः ।
यथाहं शङ्करादूर्ध्वं नान्यं पश्यामि दैवतम् ॥ २१॥

तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ॥ २२

दक्षः—

एतन्मखेशाय सुवर्णपात्रे
हविस्समस्तं विधिमन्त्रपूतम् ।
विष्णोर्नयाम्यप्रतिमस्य भागं
प्रभुर्विभुश्चाहवनीय एषः ॥ २३

देवी—

किं नाम दानं नियमं तपो वा
कुर्यामहं येन पतिर्ममाद्य ।
लभेत भागं भगवानचिन्त्यो
ह्यर्धं तथा भागमथो तृतीयम् ॥ २४

वैशम्पायनः—

एवं ब्रुवाणां भगवान् स पत्नीं
प्रहृष्टरूपः क्षुभितामुवाच ॥ २४॥

श्रीमहादेवः—

न वेत्सि मां देवि कृशोदराङ्गि
किं नाम युक्तं वचनं मखेशे ॥ २५

अहं विजानामि विशालनेत्रे
ध्यानेन हीना न विदन्त्यसन्तः ।
तवाद्य मोहेन च सेन्द्रदेवा
लोकास्त्रयस्सर्वत एव मूढाः ॥ २६

मामध्वरे शंसितारस्स्तुवन्ति
रथन्तरं सामगाश्चोपगान्ति ।
मां ब्राह्मणा ब्रह्मविदो यजन्ते
ममाध्वर्यवः कल्पयन्ते च भागम् ॥ २७

सुप्राकृतोऽपि पुरुषः सर्वस्त्रीजनसंसदि ।
स्तौति गर्वायते चापि स्वमात्मानं न संशयः ॥ २८

नात्मानं स्तौमि देवेशि पश्य मे तनुमध्यमे ।
यं स्रक्ष्यामि वरारोहे यागार्थे वरवर्णिनि ॥ २९

वैशम्पायनः—
इत्युक्त्वा भगवान् पत्नीम् उमां प्राणैरपि प्रियाम् ।
सोऽसृजद्भगवान् वक्त्राद् भूतं घोरं प्रहर्षणम् ॥ ३०
तमुवाचाक्षिप मखं दक्षस्येति महेश्वरः ॥ ३०॥
ततो वक्त्राद्विमुक्तेन सिंहेनैकेन लीलया ।
देव्या मन्युव्यपोहार्थं हतो दक्षस्य वै क्रतुः ॥ ३१॥
मन्युना च महाभीमा महाकाली महेश्वरी ॥ ३२
आत्मनः कर्मसाक्षित्वे तेन सार्धं सहानुगा ।
देवस्यानुमतं मत्वा प्रणम्य शिरसा ततः ॥ ३३
आत्मनस्सदृशश्शौर्याद् बलरूपसमन्वितः ।
स एव भगवान् क्रोधः प्रतिरूपसमान्वितः ॥ ३४
अनन्तबलवीर्यश्च अनन्तबलपौरुषः ।

वीरभद्र इति ख्यातो देव्या मन्युप्रमार्जकः ॥ ३५
सोऽसृजद्रोमकूपेभ्यो रौम्यान्नाम गणेश्वरान् ।
रुद्रतुल्या गणा रौद्रा रुद्रवीर्यपराक्रमाः ॥ ३६
ते निपेतुस्ततस्तूर्णं दक्षयज्ञविहिंसया ।
भीमरूपा महाकायाश् शतशोऽथ सहस्रशः ॥ ३७
ततः किलिकिलाशब्दैर् आकाशं पूरयन्निव ।
तेन शब्देन महता त्रस्तास्तत्र दिवौकसः ॥ ३८
पर्वताश्च व्यशीर्यन्त चकम्पे च वसुन्धरा ।
मारुताश्चैव घूर्णन्ते चुक्षुभे वरुणालयः ॥ ३९
अग्नयो नैव दीप्यन्ते नैव दीप्यति भास्करः ।
ग्रहा नैव प्रकाशन्ते नक्षत्राणि न चन्द्रमाः ॥ ४०
ऋषयो न प्रकाशन्ते न देवा न च मानुषाः ॥ ४०॥
एवं तु तिमिरीभूते निर्दहन्त्यपमानिताः ।
प्रहरन्त्यपरे घोरा यूपानुत्पाटयन्ति च ॥ ४१॥
प्रमर्दन्ति तथा चान्ये विमर्दन्ति तथाऽपरे ।
आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः ॥ ४२॥
चूर्ण्यन्ते यज्ञपात्राणि दिव्यान्याभरणानि च ।
विशीर्यमाणा दृश्यन्ते तारा इव नभस्तले ॥ ४३॥
दिव्यान्नपानभक्ष्याणां राशयः पर्वतोपमाः ।

क्षीरनद्योऽथ दृश्यन्ते घृतपायसकर्दमाः ॥ ४४॥
दधिमण्डोदका दिव्याः खण्डशर्करवालुकाः ।
षड्रसा निवहन्त्येता गुडकुल्या मनोरमाः ॥ ४५॥
उच्चावचानि मांसानि भक्ष्याणि विविधानि च ।
पानकानि च दिव्यानि लेह्यचोष्याणि यानि च ॥ ४६॥
भुञ्जते विविधैर्वक्त्रैर् विलुम्पन्त्याक्षिपन्ति च ।
रुद्रकोपान्महाकोपाः कालाग्निसदृशोपमाः ॥ ४७॥
क्षोभयन् सुरसैन्यानि भीषयन्तस्समन्ततः ।
क्रीडन्ति विविधाकाराश् चिक्षिपुस्सुरयोषितः ॥ ४८॥
रुद्रक्रोधात् प्रयत्नेन सर्वदेवैस्सुरक्षितम् ।
तं यज्ञमदहच्छीघ्रं रुद्रकर्मा समन्ततः ॥ ४९॥
चकार भैरवं नादं सर्वभूतभयङ्करम् ।
छित्त्वा शिरो वै यज्ञस्य ननाद च मुमोद च ॥ ५०॥
ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः ।
ऊचुः प्राञ्जलयस्सर्वे कथ्यतां को भवानिति ॥ ५१॥

वीरभद्रः—

नाहं रुद्रो न वा देवी नैव भोक्तुमिहागतः ।
देव्या मन्युकृतं मत्वा क्रुद्धस्सर्वात्मकः प्रभुः ॥ ५२॥
द्रष्टुं वा नैव विप्रेन्द्रान्नैव कौतूहलेन वा ।

तव यज्ञविघातार्थं सम्प्राप्तं विद्धि मामिह ॥ ५३॥
वीरभद्र इति ख्यातो रुद्रकोपाद्विनिस्सृतः ।
भद्रकालीति विख्याता देव्याः कोपाद्विनिस्सृता ॥ ५४॥
प्रेषितौ देवदेवेन यज्ञान्तिकमिहागतौ ।
शरणं गच्छ विप्रेन्द्र देवदेवमुमापतिम् ॥ ५५॥
वरं क्रोधोऽपि देवस्य वरदानं न चान्यतः ॥ ५६

वैशम्पायनः—

वीरभद्रवचश्श्रुत्वा दक्षो धर्मभृतां वरः ।
तोषयामास स्तोत्रेण प्रणिपत्य महेश्वरम् ॥ ५७

दक्षः—

प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम् ।
महादेवं महात्मानं विश्वस्य जगतः पतिम् ॥ ५८

वैशम्पायनः—

दक्षप्रजापतेर्यज्ञे द्रव्यैस्तैस्सुसमाहितैः ।
आहूता देवतास्सर्वा ऋषयश्च तपोधनाः ॥ ५९
देवो नाहूयते तत्र विश्वकर्मा महेश्वरः ।
तत्र क्रुद्धा महादेवी गणांस्तत्र व्यसर्जयत् ॥ ६०
प्रदीप्तयज्ञवाटे तु विद्रुतेषु द्विजातिषु ।
तारागणमनुप्राप्ते रौद्रे दीप्ते महात्मनि ॥ ६१
शूलनिर्भिन्नहृदयैः कूजद्भिः परिचारकैः ।
निखातोत्पाटितैर्यूपैर् अपविद्धैरितस्ततः ॥ ६२

उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृद्धिभिः ।
पक्षवातविनिर्धूतैश् शिवाशतनिनादितैः ॥ ६३
यक्षगन्धर्वसङ्घैश्च पिशाचोरगराक्षसैः ।
प्राणापानौ सन्निरुध्य वक्त्रस्थानेन यत्नतः ॥ ६४
विचार्य सर्वतो दृष्टिं बहुदृष्टिरमित्रजित् ।
सहसा देवदेवेशो ह्यग्निकुण्डात् समुत्थितः ॥ ६५
बिभ्रत् सूर्यसहस्रस्य तेजस्संवर्तकोपमः ।
स्मितं कृत्वाऽब्रवीद्वाक्यं ब्रूहि किं करवाणि ते ॥ ६६
श्राविते च मखाध्याये देवानां गुरुणा ततः ।
तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः ॥ ६७
भीतशङ्कितवित्रस्तस् सबाष्पवदनेक्षणः ॥ ६७॥

दक्षः—

यदि प्रसन्नो भगवान् यदि चाहं भवत्प्रियः ।
यदि वाऽहमनुग्राह्यो यदि वा वरदो मम ॥ ६८॥
यद्दग्धं भक्षितं पीतम् अशितं यच्च नाशितम् ।
चूर्णीकृतापविद्धं च यज्ञसम्भारमीदृशम् ॥ ६९॥
दीर्घकालेन महता प्रयत्नेन सुसञ्चितम् ।
तन्न मिथ्या भवेन्मह्यं वरमेतमहं वृणे ॥ ७०॥

वैशम्पायनः—

तथाऽस्त्वित्याह भगवान् भगनेत्रहरो हरः ।
धर्माध्यक्षो विरूपाक्षस् त्र्यक्षो देवः प्रजापतिः ॥ ७१॥

जानुभ्यामवनीं गत्वा दक्षो लब्ध्वा भवाद्वरम् ।
नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम् ॥ ७२॥

युधिष्ठिरः—

यैर्नामधेयैस्स्तुतवान् दक्षो देवं प्रजापतिः ।
वक्तुमर्हसि मे तात श्रोतुं श्रद्धा ममानघ ॥ ७३॥

भीष्मः—

श्रूयतां देवदेवस्य नामान्यद्भुतकर्मणः ।
गूढव्रतस्य गुह्यानि प्रकाशानि च भारत ॥ ७४॥

दक्षः—

नमस्ते देवदेवेश देवारिबलसूदन ।
देवेन्द्रबलविष्टम्भ देवदानवपूजित ॥ ७५॥
सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय ।
सर्वतः पाणिपादान्त सर्वतोऽक्षिशिरोमुख ॥ ७६॥
सर्वतश्श्रुतिमल्लोके सर्वमावृत्य तिष्ठसि ।
शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ॥ ७७॥
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते ।
शतोदर शतावर्त शतजिह्व नमोऽस्तु ते ॥ ७८॥
गायन्ति त्वा गायत्रिणोऽर्चयन्त्यर्कमर्किणः ।
ब्रह्माणं त्वा शतक्रतुम् ऊर्ध्वं खमिव मेनिरे ॥ ७९॥
मूर्तौ हि ते महामूर्ते समुद्राम्बरसन्निभ ।
सर्वा वै देवता ह्यस्मिन् गावो गोष्ठ इवासते ॥ ८०॥

भवच्छरीरे पश्यामि सोममग्निं जलेश्वरम् ।
आदित्यमथ वै विष्णुं ब्रह्माणं च बृहस्पतिम् ॥ ८१॥

भगवान् कारणं कार्यं क्रिया करणमेव च ।
असतश्च सतश्चैव तथैव प्रभवाप्ययौ ॥ ८२॥

नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यं नमोऽस्त्वन्धकघातिने ॥ ८३॥

त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने ।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ॥ ८४॥

नमश्चण्डाय कुण्डाय अण्डायाण्डधराय च ।
दण्डिने समकर्णाय दण्डिमुण्डाय वै नमः ॥ ८५॥

नमोर्ध्वदंष्ट्रकेशाय शुक्लायावतताय च ।
विलोहिताय धूम्राय नीलग्रीवाय वै नमः ॥ ८६॥

नमोऽस्त्वप्रतिरूपाय विरूपाय शिवाय च ।
सूर्याय सूर्यमालाय सूर्यध्वजपताकिने ॥ ८७॥

नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ।
शत्रुन्दमाय दण्डाय पर्णचीरपटाय च ॥ ८८॥

नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ ८९॥

नमस्तुताय स्तुत्याय स्तूयमानाय वै नमः ।

सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने ॥ ९०॥
नमो होत्रेऽथ मन्त्राय शुक्लध्वजपताकिने ।
नमो नाभाय नाभ्याय नमः कटकटाय च ॥ ९१॥
नमोऽस्तु कृशनासाय कृशाङ्गाय कृशाय च ।
संहृष्टाय विहृष्टाय नमः किलकिलाय च ॥ ९२॥
नमोऽस्तु शयमानाय शयितायोत्थिताय च ।
स्थिताय धावमानाय मुण्डाय जटिलाय च ॥ ९३॥
नमो नर्तनशीलाय मुखवादित्रवादिने ।
नाद्योपहारलुब्धाय गीतवादित्रशालिने ॥ ९४॥
नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ।
कालनाथाय कल्याय क्षयायोपक्षयाय च ॥ ९५॥
भीमदुन्दुभिहासाय भीमव्रतधराय च ।
उग्राय च नमो नित्यं नमोऽस्तु दशबाहवे ॥ ९६॥
नमः कपालहस्ताय चितिभस्मप्रियाय च ।
विभीषणाय भीष्माय भीमव्रतधराय च ॥ ९७॥
नमो विकृतवक्त्राय खड्गजिह्वाय दंष्ट्रिणे ।
पक्वाममांसलुब्धाय तुम्बीवीणाप्रियाय च ॥ ९८॥
नमो वृषाय वृष्याय गोवृषाय वृषाय च ।
कटङ्कटाय दण्डाय नमः पचपचाय च ॥ ९९॥

नमस्सर्ववरिष्ठाय वराय वरदाय च ।
वरमाल्यगन्धवस्त्राय वरातिवरदे नमः ॥ १००॥
नमो रक्तविरक्ताय भावनायाक्षमालिने ।
सम्भिन्नाय विभिन्नाय छायायातपनाय च ॥ १०१॥
अघोरघोररूपाय घोरघोरतराय च ।
नमश्शिवाय शान्ताय नमश्शान्ततमाय च ॥ १०२॥
एकपाद्बहुनेत्राय एकशीर्ष्णे नमोऽस्तु ते ।
रुद्राय क्षुद्रलुब्धाय संविभागप्रियाय च ॥ १०३॥
पञ्चालाय सिताङ्गाय नमश्शमशमाय च ।
नमश्चण्डिकघण्टाय घण्टायाघण्टघण्टिने ॥ १०४॥
सहस्राध्मातघण्टाय घण्टामालाप्रियाय च ।
प्राणघण्टाय गन्धाय नमः कलकलाय च ॥ १०५॥
हूं हूं हूंकारपाराय हूं हूंकारप्रियाय च ।
नमश्शमशमे नित्यं गिरिवृक्षालयाय च ॥ १०६॥
गर्भमांससृगालाय तारकाय तराय च ।
नमो यज्ञाय यजिने हुताय प्रहुताय च ॥ १०७॥
यज्ञवाहाय दान्ताय तप्यायातपनाय च ।
नमस्तटाय तट्याय तटानां पतये नमः ॥ १०८॥
अन्नदायान्नपतये नमस्त्वन्नभुजे तथा ।

नमस्सहस्रशीर्षाय सहस्रचरणाय च ॥ १०९॥
सहस्रोद्यतशूलाय सहस्रनयनाय च ।
नमो बालार्कवर्णाय बालरूपधराय च ॥ ११०॥
बालानुचरगोप्ताय बालक्रीडनकाय च ।
नमो वृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च ॥ १११॥
तरङ्गाङ्कितकेशाय मुञ्जकेशाय वै नमः ।
नमष्षट्कर्मतुष्टाय त्रिकर्मनिरताय च ॥ ११२॥
वर्णाश्रमाणां विधिवत् पृथक्कर्मनिवर्तिने ।
नमो घुष्याय घोषाय नमः कलकलाय च ॥ ११३॥
श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च ।
प्राणभग्नाय दण्डाय स्फोटनाय कृशनाय च ॥ ११४॥
धर्मकामार्थमोक्षाणां कथनीयकथाय च ।
साङ्ख्याय साङ्ख्यमुख्याय साङ्ख्ययोगप्रवर्तिने ॥ ११५॥
नमो रथ्यविरथ्याय चतुष्पथरथाय च ।
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥ ११६॥
ईशानवज्रसङ्घात हरिकेश नमोऽस्तु ते ।
त्र्यम्बकाम्बिकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥ ११७॥
काम कामद कामघ्न तृप्तातृप्तविचारिणे ।
सर्वसर्वदसर्वघ्न सन्ध्याराग नमोऽस्तु ते ॥ ११८॥

महामेघचयप्रख्य महाकाल नमोऽस्तु ते ।
स्थूलदीर्णाङ्गजटिले वल्कलाजिनधारिणे ॥ ११९॥

दीप्तसूर्याग्निजटिले वल्कलाजिनवाससे ।
सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते ॥ १२०॥

जन्मादनशतावर्त गङ्गातोयार्द्रमूर्धज ।
चन्द्रावर्त युगावर्त मेघावर्त नमोऽस्तु ते ॥ १२१॥

त्वमन्नमत्ता भोक्ता च अन्नदोऽन्नभुगेव च ।
अन्नस्रष्टा च पक्ता च पक्वभुक् पवनोऽनलः ॥ १२२॥

जरायुजाण्डजाश्चैव स्वेदजाश्च तथोद्भिजाः ।
त्वमेव देवदेवेश भूतग्रामचतुर्विधः ॥ १२३॥

चराचरस्य स्रष्टा त्वं प्रतिहर्ता तथैव च ।
त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मविदां वर ॥ १२४॥

मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः ।
ऋक्सामानि तथोङ्कारम् आहुस्त्वां ब्रह्मवादिनः ॥ १२५॥

हायिहायि हुवाहायि हावुहायि तथाऽसकृत् ।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥ १२६॥

यजुर्मयो ऋङ्मयश्च त्वमाहुतिमयस्तथा ।
पठ्यसे स्तुतिभिश्चैव वेदोपनिषदां गणैः ॥ १२७॥

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्रा वर्णावराश्च ये ।

त्वमेव मेघसङ्घाश्च विद्युत्स्तनितगर्जितः ॥ १२८॥
संवत्सरस्त्वमृतवो मासो मासार्धमेव च ।
युगं निमेषाः काष्ठास्त्वं नक्षत्राणि ग्रहाः कलाः ॥ १२९॥
वृक्षाणां ककुदोऽसि त्वं गिरीणां शिखराणि च ।
व्याघ्रो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम् ॥ १३०॥
क्षीरोदो ह्युदधीनां च यन्त्राणां धनुरेव च ।
वज्रः प्रहरणानां च व्रतानां सत्यमेव च ॥ १३१॥
त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥ १३२॥
त्वं गदी त्वं शरी चापि खट्वाङ्गी झर्झरी तथा ।
छेत्ता भेत्ता प्रहर्ता त्वं नेता मन्ता पिता मतः ॥ १३३॥
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
गङ्गा समुद्रास्सरितः पल्वलानि सरांसि च ॥ १३४॥
लतावल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मसमारम्भः कालः पुष्पफलप्रदः ॥ १३५॥
आदिश्चान्तश्च देवानां गायत्र्योङ्कार एव च ॥ १३६
हरितो रोहितो नीलः कृष्णो रक्तस्तथाऽरुणः ।
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ॥ १३७
अवर्णश्च सुवर्णश्च वर्णकारो घनोपमः ।

सुवर्णनामा च तथा सुवर्णप्रिय एव च ॥ १३८

त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनलः ।
उपप्लवश्चित्रभानुस् स्वर्भानुर्भानुरेव च ॥ १३९

होत्रं होता च होम्यं च हुतं चैव तथा प्रभुः ।
त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम् ॥ १४०

पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
गिरिको हिण्डुको वृक्षो जीवः पुद्गल एव च ॥ १४१

प्राणस्सत्त्वं रजश्चैव तमश्चाप्रमदस्तथा ।
प्राणोऽपानस्समानश्च उदानो व्यान एव च ॥ १४२

उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ।
लोहितान्तर्गता दृष्टिर् महावक्त्रो महोदरः ॥ १४३

सूचीरोमा हरिश्मश्रुर् ऊर्ध्वकेशश्चलाचलः ।
गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः ॥ १४४

मत्स्यो जलचरो जाल्योऽकलः केलिकलः कलिः ।
अकालश्चातिकालश्च दुष्कालः काल एव च ॥ १४५

मृत्युः क्षुरश्च कृत्यश्च पक्षो पक्षक्षयङ्करः ।
मेघकालो महादंष्ट्रस् संवर्तकवलाहकः ॥ १४६

घण्टोऽघण्टो घटी घण्टी चरुचेली मिलीमिली ।
ब्रह्मकायिकमग्नीनां दण्डी मुण्डस्त्रिदण्डधृक् ॥ १४७

चतुर्युगश्चतुर्वेदश्‌ चातुर्होत्रप्रवर्तकः ।
चातुराश्रम्यनेता च चातुर्वर्ण्यकरश्च यः ॥ १४८
सदा चाक्षप्रियो धूर्तो गणाध्यक्षो गणाधिपः ।
रक्तमाल्याम्बरधरो गिरिशो गिरिकप्रियः ॥ १४९
शिल्पिकश्शिल्पिनां श्रेष्ठस्‌ सर्वशिल्पप्रवर्तकः ।
भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः ॥ १५०
स्वाहा स्वधा वषट्कारो नमस्कारो नमो नमः ।
गूढव्रतो गुह्यतपास्‌ तारकस्तारकामयः ॥ १५१
धाता विधाता सन्धाता विधाता धारणोऽधरः ।
ब्रह्मा तपश्च सत्यं च ब्रह्मचर्यमथार्जवम्‌ ॥ १५२
भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ।
भूर्भुवस्स्वरितश्चैव ध्रुवो दान्तो महेश्वरः ॥ १५३
दीक्षितोऽदीक्षितः क्षान्तो दुर्दान्तोऽदान्तनाशनः ।
चन्द्रावर्तयुगावर्तस्‌ संवर्तस्सम्प्रवर्तकः ॥ १५४
कामो बिन्दुरणुस्स्थूलः कर्णिकारस्रजप्रियः ।
नन्दीमुखो भीममुखस्‌ सुमुखो दुर्मुखोऽमुखः ॥ १५५
चतुर्मुखो बहुमुखो रणेष्वभिमुखस्तथा ।
हिरण्यगर्भश्शकुनिर्‌ महोरगपतिर्विराट्‌ ॥ १५६
अधर्महा महापार्श्वश्‌ चण्डधारो गणाधिपः ।
गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥ १५७

त्रैलोक्यगोप्ता गोविन्दो गोमार्गोऽमार्ग एव च ।
श्रेष्ठस्स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च ॥ १५८

दुर्वारणो दुर्विषहो दुस्सहो दुरतिक्रमः ।
दुर्धर्षो दुष्प्रकम्पश्च दुर्विषो दुर्जयो जयः ॥ १५९

शशश्शशाङ्कश्शमनश् शीतोष्णक्षुज्जराधिकृत् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिरेव च ॥ १६०

मम यज्ञमृगव्याधो व्याधीनामागमो गमः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥ १६१

दण्डधारस्त्र्यम्बकश्च उग्रदण्डोऽण्डनाशनः ।
विषाग्निपास्सुरश्रेष्ठस् सोमपास्त्वं मरुत्पतिः ॥ १६२

अमृतपास्त्वं जगन्नाथ देवदेव गणेश्वरः ।
विषाग्निपा मृत्युपाश्च क्षीरपास्सोमपास्तथा ॥ १६३

मधुश्च्युतानामग्रपास् त्वं त्वमेव तुषिताद्यपाः ॥ १६३॥

हिरण्यरेताः पुरुषस्त्वमेव
त्वं स्त्री पुमांस्त्वं च नपुंसकं च ।
बालो युवा स्थविरो जीर्णदंष्ट्रस्
त्वं नागेन्द्र शक्रस्त्वं विश्वकृद्विश्वकर्ता ॥ १६४॥

विश्वकृद्विश्वकृतां वरेण्यस्त्वं विश्वबाहो
विश्वरूपस्तेजस्वी विश्वतोमुखः ।

चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः ॥ १६५॥
महोदधिस्सरस्वती वाग्बलमनलोऽ ।
निलः अहोरात्रं निमेषोन्मेषकर्मा ॥ १६६
न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥ १६७
या मूर्तयस्सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् ।
त्राहि मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ १६८
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ।
भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥ १६९
यस्सहस्राण्यनेकानि पुंसामावृत्य दुर्दृशः ।
तिष्ठत्येकस्समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ॥ १७०
यं विनिद्रा जितश्वासास् सत्त्वस्थास्संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास् तस्मै योगात्मने नमः ॥ १७१
जटिले दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ १७२
यस्य केशेषु जीमूता नद्यस्सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस् तस्मै तोयात्मने नमः ॥ १७३
सम्भक्ष्य सर्वभूतानि युगान्ते पर्युपस्थिते ।
यश्शेते जलमध्यस्थस् तं प्रपद्येऽम्बुशायिनम् ॥ १७४
प्रविश्य वदनं राहोर् यस्सोमं पिबते निशि ।

ग्रसत्यर्कं च स्वर्भानुर् भूत्वा मां सोऽभिरक्षतु ॥ १७५
ये चानुपतिता गर्भा यथा भागानुपासते ।
नमस्तेभ्यस्स्वधा स्वाहा प्राप्नुवन्तु मुदन्तु ते ॥ १७६
येऽङ्गुष्ठमात्राः पुरुषा देहस्थास्सर्वदेहिनाम् ।
रक्षन्तु ते हि मां नित्यं नित्यं चाप्यायन्तु माम् ॥ १७७
येन रोदन्ति देहस्था देहिनो रोदयन्ति च ।
हर्षयन्ति च हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ॥ १७८
ये नदीषु समुद्रेषु पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ॥ १७९
चतुष्पथेषु रथ्यासु चत्वरेषु तटेषु च ।
हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥ १८०
येषु पञ्चसु भूतेषु दिशासु विदिशासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ १८१
रसातलगता ये च ये च तस्मै परं गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योऽस्तु नित्यशः ॥ १८२
येषां न विद्यते सङ्ख्या प्रमाणं रूपमेव च ।
असङ्ख्येयगुणा रुद्रा नमस्तेभ्योऽस्तु नित्यशः ॥ १८३
सर्वभूतकरो यस्मात् सर्वभूतपतिर्हरः ।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥ १८४

त्वमेव हीज्यसे यस्माद् यज्ञैर्विविधदक्षिणैः ।
त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥ १८५

अथ वा मायया देव सूक्ष्मया तव मोहितः ।
एतस्मात् कारणाद्वाऽपि तेन त्वं न निमन्त्रितः ॥ १८६

प्रसीद मम भद्रं ते भव भावगतस्य मे ।
त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि ॥ १८७

भीष्मः—

स्तुत्वैवं स महादेवं विरराम प्रजापतिः ।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ १८८

श्रीमहादेवः—

परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनाऽत्र किमुक्तेन मत्समीपे भविष्यसि ॥ १८९

अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात् फलभागी भविष्यसि ॥ १९०

भीष्मः—

अथैनमब्रवीद्वाक्यं लोकस्याधिपतिर्भवः ।
आश्वासनकरं वाक्यं वाक्यविद्वाक्यसम्मतम् ॥ १९१

श्रीमहादेवः—

दक्ष दक्ष न कर्तव्यो मन्युर्विघ्नमिमं प्रति ।
अहं यज्ञहरस्तुभ्यं दृष्टमेतत् पुरातनम् ॥ १९२

भूयश्च ते वरं दद्मि तं त्वं गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा तदिहैकमनाश्शृणु ॥ १९३
वेदात् षडङ्गादुद्धृत्य साङ्ख्ययोगाच्च युक्तितः ।
तपस्सुतप्तं विपुलं दुश्चरं देवदानवैः ॥ १९४
अपूर्वं सर्वतो भद्रं सर्वतोमुखमव्ययम् ।
अब्दैर्दशाहसंयुक्तं गूढमप्राज्ञनिन्दितम् ॥ १९५
वर्णाश्रमकृतैर्धर्मैर् विपरीतं क्वचित् समम् ।
गतान्तैरध्यवसितम् अत्याश्रममिदं व्रतम् ॥ १९६
मया पाशुपतं दक्ष शुभमुत्पादितं पुरा ।
तस्य चीर्णस्य तत् सम्यक् फलं भवति पुष्कलम् ॥ १९७
तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ॥ १९७॥

भीष्मः—

एवमुक्त्वा महादेवस् सपत्नीकस्सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ १९८॥
दक्षप्रोक्तं स्तवमिमं कीर्तयेद्यश्शृणोति वा ।
नाशुभं प्राप्नुयात् किञ्चिद् दीर्घमायुरवाप्नुयात् ॥ १९९॥
यथा सर्वेषु देवेषु वरिष्ठो भगवान् शिवः ।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मसम्मितः ॥ २००॥
यशोराज्यसुखैश्वर्यकामार्थधनकाङ्क्षिभिः ।
श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ २०१॥

व्याधितो दुःखितो दीनश्च चोरग्रस्तो भयार्दितः ।
राजकार्याभियुक्तो वा मुच्यते महतो भयात् ॥ २०२॥
अनेनैव तु देहेन गणानां समतां व्रजेत् ।
तेजसा यशसा चैव युक्तो भवति निर्मलः ॥ २०३॥
न राक्षसाः पिशाचा वा न भूता न विनायकाः ।
विघ्नं कुर्युर्गृहे तस्य यत्रायं पठ्यते स्तवः ॥ २०४॥
शृणुयाच्चैव या नारी तद्भक्ता ब्रह्मचारिणी ।
पितृपक्षे मातृपक्षे पूज्या भवति देववत् ॥ २०५॥
शृणुयाद्यस्स्तवं कृत्स्नं कीर्तयेद्वा समाहितः ।
तस्य सर्वाणि कर्माणि सिद्धिं गच्छन्त्यभीक्ष्णशः ॥ २०६॥
मनसा चिन्तितं यच्च यच्च वाचाऽनुकीर्तितम् ।
सर्वं सम्पद्यते तस्य स्तवस्यास्यानुकीर्तनात् ॥ १०७॥
देवस्य च गुहस्यापि देव्या नन्दीश्वरस्य च ।
बलिं सुविहितं कृत्वा दमेन नियमेन च ॥ २०८॥
ततस्तु युक्तो गृह्णीयान्नामान्याशु यथाक्रमम् ।
ईप्सितान् लभते सोऽर्थान् भोगान् कामांश्च मानवः ॥
मृतश्च स्वर्गमाप्नोति तिर्यक्षु च न जायते ।
इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ॥ २१०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
चतुरशीत्यधिकशततमोऽध्यायः ॥

॥ श्रीरस्तु ॥

# महाभारतस्य शान्तिपर्वस्थानां विषयाणाम्

# अक्षरमातृकाक्रमेण सूचनम्



अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पृष्ठम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

अध्यायः-पुटम्

॥ श्रीरस्तु ॥

महाभारतस्य शान्तिपर्वतृतीयसम्पुटस्थानां

## ॥ अशुद्धानां शोधनम् ॥

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १४७४ | ५ | क्रोधर्विवर्जितः | क्रोधविवर्जितः |
| १४७६ | १ | क्रोध्यमानः | क्रुध्यमानः |
| १५१५ | २० | तुष्णीम्भूता | तूष्णीम्भूता |
| १५४८ | २ | प्रांतपादक | प्रतिपादक |
| १५८३ | ४ | वचै | चैव |
| १६४९ | ८ | उत्पद्यन्ति | उत्पद्यति |
| १७३३ | १५ | ऊर्ध्वस्रोताभिः | ऊर्ध्वस्रोतोभिः |
| १७४१ | ३ | भवति | भवन्ति |
| १७५३ | १० | अन्यदुदुम्बर | अन्यदुदुम्बरम् |
| १७५७ | ६ | भगवान् | भवान् |
| १७६२ | ३ | त्रयो लोकान् | च लोकांस्त्रीन् |
| १७६५ | १० | ज्थोतिषां | ज्योतिषां |
| १७७० | १५ | चेतस्काङ्क्षिणां | चेतः काङ्क्षिणां |
| १७९६ | १५ | वंजयश्च | विजयश्च |
| १७९९ | १४ | पुरन्दरं | पुरन्दर |
| १८०६ | १७ | सावु | साधु |

| पुटम् | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|
| १८१३ | १० | सावु | साधु |
| १८५७ | १७ | क्रुत | कृत |
| १९१४ | १४ | यच्छ्वेतद्वीप | यच्छ्वेतद्वीप |
| १९२३ | ९ | नष | नैष |
| १९३८ | ५ | दॅदृक्षु | दिदृक्षु |
| १९६८ | ११ | वतिष्ठं | वसिष्ठं |
| १९९० | ६ | अभिषिचुः | अभिषिषिचुः |
| २०२२ | १८ | साङ्ख्व | साङ्ख्य |
| २०३३ | १० | महात्ममनाम् | महात्मनाम् |

Printed by
V. Venkateswara Sastrulu of V. Ramaswamy Sastrulu & Sons,
at the Vavilla Press, Madras.- 1936.